( बृहत्- )

# मानव-धर्म-सारः

ॐ

उद्बुध्यध्वं, समनसः, सखायः,

सं अग्निं इन्ध्वं, बहवः, सनीडाः,

दधिक्रां अग्निं उषसं च देवीं

इन्द्रावतो ऽवसे निह्वये वः ।

ॐ

उदार-धीर-गम्भीर-वाचां भगवतो मनोः

कैश्चिद् भगवतो दासैः अयं सारः प्रसार्यते ।

प्रकाशकः—
( काशीविद्यापीठात् )
डाक्टर भगवान् दास,
( भगवद्दासः )
बनारस ।

(लघु-)मानव-धर्म-सारः इति नामकं,
प्रथमं संस्करणं—२००० प्रतयः ( सं० १९९७ )
(बृहत्-)मानव-धर्म-सारः इति नामकं
द्वितीयं संस्करणं—१००० प्रतयः ( सं० २००१ )



मूल्यं—सार्धं रौप्यं, १॥); स-पोस्ट-व्ययं, १।॥); 'रजिस्ट्री'-युतं, वी० पी० द्वारा वा, २) । विंशति-(२०)-पुस्तकानां, ततोधिकानां वा, एकस्यैव क्रेतृभ्यः—१।) ( विंशति-आणकाः )

ॐ

# सूचीपत्रम्

---

ॐ

# वर्धनीय-श्लोकाः

| पृष्ठे | पङ्क्तौ | वर्धनीय |
|---|---|---|
| १२ | ६ | ( 'अविवेचनात्' इत्यस्याग्रे ) हिंसाया , मूढमतय , धर्म्मयुद्धपराङ्मुखा , धर्मव्याजेन चण्डालस्य विलासित्वस्य छादका , |
| ,, | १३ | ( 'हि य ' इत्यस्याग्रे ) "इक्ष्वाकूना अय वश सुमित्रान्तो भविष्यति" ( भा० ९, १२ ) ; "नवनदान् द्विज कश्चित् प्रपन्नान् उद्धरिष्यति , तेषा अभावे जगती मौर्या भोक्ष्यति वै कलौ , स एव चन्द्रगुप्त वै द्विजो राज्येऽभिषेक्ष्यति , तत्सुतो वारि ( बिन्दु ) सारस्तु, ततश्च अशोक वर्धन , ( चन्द्रगुप्तात्तु दशम ) भविता च बृहद्रथ , मौर्या ह्येते दश नृपा सप्तत्रिंशच्छतोत्तर, हत्वा बृहद्रथ मौर्यं, तस्य सेनापति , कलौ, पुष्यमित्रस्तु शुङ्गाह्व स्वय राज्य करिष्यति" ( भा० १२-१ ), मौर्यास्तु सूर्यवश्यैरेका शाखेति केचन । योऽय बृहद्रथो राजा मौर्याणा दशम स्मृत , |
| २६ | ४ | ('कश्चिन्' इत्यस्याग्रे) (भा०) |
| ४३ | ९ | ( 'भूमिजो ग्रह ' इत्यस्याग्रे ) अन्येषा तु मतेनाय मगलो तामसो ग्रह । "सत्त्व सुखे सञ्जयति, रज कर्मणि चैव हि ' ( गी० ), तमश्चालस्य-कारीति, क्रोधश्चोद्वेगकारक , आलस्यनाशकश्चापि, रजस्तस्मात् मगल । क्रोध किंतु अवरुन्ध्येत् , स्वशरीरस्य शोषक , क्षयादिरोगजनक , तन-श्चालस्यवर्धक , मगल क्रोधरूपोऽतो विज्ञातस्तामसोऽपि [illegible] । इच्छाया एव कामश्च क्रोधश्च विकृती स्मृते , तम पर्याय एव इच्छा, मगलस्तामसो ऽप्यत । उच्चस्थो भूमिजस्त्वाय ऐश्वर्यप्रापको भवेत् , नीचस्थस्तु [illegible] एवोक्तो, ज्योतिषे, नाशकारण । शक्तिभि सयुत क्रोधोऽरीणा अभि भवे क्षम , पराभवस्यैवैषोऽस्ति शक्तिहीनस्य कारण । उभयोर्मतयोरेव कर णीय समन्वय । |
| ४४ | १८ | ('शुक्र-बृहस्पती' इत्यस्याग्रे) बृहस्पतिरुदासीन शुक्रे , शुक्रो रिपुर्गुरो , सूर्य शुक्रो ऽन्योऽन्यशत्रू—केषाचिन्मत ईदृश । हिरण्यगर्भो ब्रह्माऽपि |

स्मर्यते सूर्य एव हि, तस्यैव सन्ततौ देवा, दैत्या, शुक्रो, गुरुस् तथा; तस्माद् भवति सर्वेषां अय तु हितचिन्तक, नैकान्ततस्तु निर्दोषा देवा, नात्यन्ततस्, तथा, सदोषा एव दैत्या. हि; गुणा दोषास् तथा उभयो, गुणो ऽधिको यदा, यस्मिन्, अनुगृह्णाति त रवि, पर्यायेण, तथा दोषे-ऽधिके, दण्डयति इह च; पुराणानां कथाभिस्तद् विस्पष्ट प्रतिपादन, शनो जीवश्च काव्यश्च सूर्यस्य सचिवौ उभौ, शत्रू मित्रे ऽपि चान्योऽन्य इति पौराणिक मत।

,, २० ('कीर्त्यते' इत्यस्याग्रे) (वा० पु०)।

४६ २१ (२०) (इत्यस्याग्रे) रामायणस्य चोत्पत्ति, तथा भागवतस्य च, वाल्मीकेश्च अपि व्यासस्य, हृदि, नारदसूचनाद्; सहिता सुश्रुतस्यापि, चरकस्यापि वै तथा, आर्षग्रन्थास्तथाऽन्येऽपि, शिष्याणा प्रश्नत कृता।

५९ १६ ('परायण।' इत्यस्याग्रे) "न ह्यनध्यात्मविद् वेदान् ज्ञातु शक्नोति तत्त्वत" (गौड० मा० का० ३०, शा० भा०)।

८४ २७ ('तादृशी' इत्यस्याग्रे), रहस्य अन्तिम नून रक्षन्ती कारिका ऽन्तिमा।

८५ ३१ ('तत्.' इत्यस्याग्रे) तस्मिन् ज्ञाने क्रमो नास्ति, 'निष्क्रम' ज्ञान अस्ति तत्, अह एतन् निषेधश्च, अपि आत्मा ऽनात्मा (च) न-इति च, ब्रह्म माया ऽपवादश्च—तस्मिन् एकक्षणे त्रय।

८८ ११ (('वे०) इत्यस्याग्रे) "स्वरेषु विप्रा, सगीते, षड्ज-मध्यम पचमा:, ऋषभो, धैवतश्चापि, क्षत्रियौ; द्वौ विशौ स्मृतौ, गाधारश्च, निषादश्च, शूद्रा तीव्राश्च कोमला" (अहोबल कृते सगीतपारिजाते)।

९४ २६ ('चतुर्थक' इत्यस्याग्रे) (१११) मानवे उपयोज्याना वस्तूना च चतुष्टय—'आवश्यकीयानि', अन्न च, वस्त्रं च, शरण गृह, जीविका-कर्मणश्च उपकरणानि अपि कानिचित्, न जातु सम्भवेद् एव, विना यैर्, देहधारण, 'निकामीयानि', यैस्तु स्यात् तुष्टि पुष्टि प्रसन्नता, (न उल्वणस्तु उद्धतो हर्ष, किन्तु) तोषो हि सात्त्विक; (आवश्यकीय-वस्तूना परिष्कारेण, मात्रया पर्याप्तया यथेष्ट तु, निकामीयत्व आप्यते), ऐश्वर्यस्य अनुयङ्गीनि 'विलासीयानि' सन्ति वै, विशिष्टोद्धतदर्पाणा आनन्दाना च कारण; 'नैमित्तिकानि' तुर्याणि, यानि, अवस्थाविशेषत,

समये समये हि एव उपयुज्यन्ते, न नित्यदा, चतुर्थराशौ सर्वं वै द्रव्य अन्तर्गतं, यथा, "न अमन्त्रं अक्षर किंचित्, न च द्रव्यं अनौषध, न अयोग्य पुरुष कश्चित्, प्रयोक्ता एव तु दुर्लभ"। 'आवश्यकीयानि' प्राप्तु सर्वस्यैव ऋत (अधिकार), ननु, 'निकामीयानि' तस्यैव य स्याद् दक्ष स्वकर्मणि, वृद्धिनिकामीयाना स्यात् समाने मत खलु, 'विलासीयानि' उत्तमाना कर्मणां पारितोषिक, यै विशिष्टा समाजस्य समृद्धि स्यात्, च मोदनं। एव विभागो वस्तूना, मनुष्येषु न सभवेद् उचितस्, तोषकृत्, न्याय्यो, विना वर्णव्यवस्थया।

८५ १६ ('ऽत्र सम्मत' इत्यस्याग्रे) व्यूहैश्चतुर्भि सुव्यूढ, मुख बाहु ऊरु पादवन्, समाजस्य दृढ संघ, स हतन्त्रान् महाबल।

१०६ २६ ('स ब्राह्मण इति स्मृत' इत्यस्याग्रे), अपि वा ब्रह्मणोऽपत्य, अथवा हि अणति ब्रह्म, अधीते, जानाति, विन्दति, ब्रह्मणि अनिति, श्वण्यते वा, प्राणिति, श्वसिति, इत्यपि।

१०४ ३ ('प्रभु' इत्यस्याग्रे), क्षवति, क्षदते वापि, सगृणोति इति रक्षति।

११२ २ ('विस्तृता' इत्यस्याग्र), भूतले द्रावयती च साधुचेतसि कोमला।

११३ २३ ('कुत ?' इत्यस्याग्र) केचिद् ऊहति अदृष्ट हि शास्त्रोक्त या, ऽधर्मं उद्गतं, विभिन्नवर्णयोर्नाम्ना भोजनोद्वाहत खलु। तत्रैव तु विचार्यं स्यात्—अदृष्टाद् बलवत्तर दृष्ट अस्ति हि, असन्दिग्ध, प्रमाण तत्र वैद्यक, आतुराणां चिकित्सा तु न 'मुहूर्त' अपेक्षते, शुभवाऽप्यशुभ वापि, न 'स्पृश्य' ऽादिविवेचन, तथैव युद्धावस्थाया, अग्निऽआपत्सु वै, तथा सर्वे ऽात्ययिककार्येषु, प्रत्यक्ष बलवत्तर, तत् प्रमाणतम सिद्ध दर्शनेषु अखिलेषु अपि, केचिद् अष्टौ प्रमाणानि, पच, चत्वारि, चापरे, त्रीणि, द्वे वाऽपरे, किंतु प्रत्यक्ष न अपलप्यते केनापि, नास्तिकोऽपि एक एव एतत् प्रत्यक्ष खलु मन्यते, सर्वेषां तु प्रमाणाना निष्ठा प्रत्यक्ष एव हि, अर्थोऽस्य पूर्वम प्यन ग्रन्थे प्रतिपादित। "ताराबलं, चंद्रबलं, तदेव, विद्याबलं, दैवबल तदेव, तदेव लग्न, सुदिन तदेव, लक्ष्मीपते !, तेऽङ्घ्रियुग स्मरामि"—एव जपन्, चित्तधैर्यं प्रतिष्ठाप्य, जनो, ननु न अपेक्ष्य शास्त्र अन्यत्तु, साध्नोति आपतित, खलु। अदृष्ट धारयन् दोष, दृष्टे घोरे पतेद् यदि, मूढ

एव हि त लोको निश्चयेनैव मंस्यते , मशकेभ्यो यथा भीत मरस्य मुख विशेत् । किं शास्त्र, का च शास्त्रोक्ति , किंप्रमाणा च सा, कथं, मान्या वा इय अमान्या वा, विहिता काऽन्यशास्त्रत , नाम्नैव भिन्नवर्णाना केवलो-द्वाहभोजने परस्पर निषिद्धे, वा समर्गो अन्यरूपिणश्चापि, तेऽन्यनिर्पे धाश्चाप्याद्रियन्ते न वा ऽधुना—इत्येतत्सर्वं विचार्यं स्यात् प्रसङ्गेऽस्मिन् सविस्तर । निष्कर्षस्तत्र चैतावान्, मान्य , पर्यवसीयते—"अन्यस्य हेतोर् बहु हातु इच्छन्, विचारमूढ प्रतिभासि मे त्व !" ( रघु० ), निगीर्य भूरीणि कटूनि, तिक्तानि, असि उद्यतस्त्व मधुवर्जने वै , कुर्वस्तु इष्ट बहुदोषपाते, अदृष्टदोषाच्च पलायसे त्व, मौग्ध्य बत इद, मुहक तु वा इद, दुराग्रहो बुद्धि विरुद्ध एव ।

१३१ २८ "वारुण तु जलस्नान, आपो हि ष्ठेति मान्त्रिक, वायव्य गोरज स्नान, आग्नेय भस्मनोदित, यत् तु सआतपवर्षेण दिव्य तद् इति पचधा—इति मनु ", एव नैषधटीकाया वक्ति नारायणो बुध ; श्लोकास्ते तु न लभ्यते क्वचित् प्रथिते मनौ , किं त्वन्यस्मृतिपूक्त हि स्नान पचविध पुन ; सप्तविध, दश विध, तथा षोडशापि च ।

१६१ १९ ( 'तदुच्यते ।' इत्यस्याग्रे ) 'अपौरुषेया वेदा वै,' इति मैमांसिकं मत ; ईश्वर तु न मन्यते, मीमांसानिरतास्तु ये , नैय्यायिकास्तु मन्यते, जगत्-कर्तार ईश्वर, वेद तु पौरुषेय हि मन्यते ते सुनिश्चित ।

१६४ २१ ( 'मदभ्रम ?' इत्यस्याग्रे ) "हीनाक्षान्, अतिरिक्ताङ्गान्, विद्या हीनान्, वयोऽधिकान्, रूप द्रव्य विहीनांश्च, जाति हीनाश्च नाक्षिपेत्" (म०) ।

१६६ २६ ( '( दु० )' इत्यस्याग्रे ), पुराणे कालिकाख्येऽस्ति किंचिद्भेदैरिय कथा, नामनिर्वचनैर्युक्ता, वाणता बहुविस्तरात् ।

२०३ १८ ( '।(१३) इत्यस्याग्रे ) सर्प पूजक जातेस्तु 'नाग' नाम्न्याश्च मर्दन—रूपकास्य चार्थोऽय ऐतिहासिकदृष्टिभि ।

२१३ २४ ( 'सर्वसम्पदा' इत्यस्याग्रे ) पुनरप्युच्यतेऽन्येन प्रकारेण अय आशय, सत्स्वराज्यस्य तत्त्व यद् भवति व्यावहारिक—न एकवर्णस्यैव राज्य प्रजाना हितकृद् भवेत् , चातुर्वर्ण्यस्यैव राज्यं प्रजानां तु सुखावहम् । एक एव हि वर्णश्चेत् प्रभु , स तु अभिभु भवेत् , नीन अन्यान् अभि-

भवेत्, तिरस्कुर्यंश्च पीडयेत्, धनश्चर्यमद्द ताम्यन् बुद्धैर्विवरणक्षम । यदि ब्राह्मणराज्यं स्याद्, ब्राह्मणा एव कथ्नुयु , क्षत्रिया , क्षत्रराज्ये च, वैश्यराज्ये विकस्तया , शूद्रराज्ये ऽबुद्धिमति, सर्वमेवऽाकुल भवेत्। चतुर्णामपि वर्णाना सर्वेषा हितकारकं, ततो 'मानव राज्य' हि प्रशस्त सर्वथेष्यते । 'पचायत्त' हि तद्राज्य इति नाम्ना तु वेत्यते । आम्नातृणा च शास्तृणा, तत्र वै, धर्मपर्षदि । चतुर्णामपि वर्णाणा मुख्यमुख्या जना स्तु, पौरा जानपदाश्चापि, भवेयुर्वै 'पुरो धस', स्व स्व वर्गभ्य: एवैते जनै प्रतिनिधीकृता , भूयसीय वृताश्चापि महाजन समागमे, विश्वस्ता , शुद्धचरिता , श्रद्धेता स्व स्व वर्गिभि , तद्वर्णं कर्म धर्म ।नुभवं सम्यग्गुना अपि, विज्ञाश्चापि विशेषज्ञा तत्तद्वर्गस्य कर्मणा । पचम , सर्वमान्यो य एतै प्रतिनिधीकृतै म्रियेत, स प्रधान स्यात् , 'पचऽायत्त' प्रपूरयन् । पचायत्तोपदेशेन, शुद्ध क्षात्रधर्मवान् , क्षत्रवर्ग प्रणता सन् , पचायत्त अनुमत , प्रजाभिरपि सर्वाभिरन्वितो, बहुमानित , सर्वास्तु चतुरो वर्गान् स्व स्व कर्माणि कारयेत्, निगृह्णन् उत्पथ यातान्, अनुगृह्णन् सथाऽपथान्। व्यासो भीष्ममुखेनैव, तत्कालेऽनुष्ठित विधि 'पचायत्तस्य' मदति, धर्मराज प्रबोधयन्—"पौरजानपदा यस्मिन् विश्वासा धर्मतो गता , सर्वकर्म विशे पज्ञ , मन्त्री भवितुमर्हति ; चतुरो ब्राह्मणान् वैद्यान् , प्रगल्भान् , स्नात कान्, शुचीन्, क्षत्रियान्, दश चाष्टौ च, बलिन , शस्त्रपारगान्, वैश्यान् वित्तेन सम्पन्नान् एकविंशतिसख्यया, त्रींश्च शूद्रान् , विनीतांश्च, शुचीन् सर्वेषु कर्मसु, अष्टाभिश्च गुणैर्युक्त सूत पौराणिकं तथा, पचाशद्वर्षवयस प्रग भ मनसूयकं", एतान् सभायां आयोज्य राजा, कुर्यात् सहायकान् (म० भा० शा० अ० ८५-८६)। राज्यप्रकारो यस्तु अत्र 'डीमोक्रसी' ति कथ्यते, कार्ये समग्र तस्य ईदृक् पचायत्तेन सेत्स्यति, तस्य सैद्धान्तिकं तत्त्व 'पचायत' हि, नेत रत्। एव पचायत्तराष्ट्रे सर्वे सम्यग् व्यवस्थिता ,स्व स्व ।धिकारान् रक्षन्त अन्येषां आत्मनात् सदा, कर्तव्य स्व च कुर्वन्ति चतुर्वर्गा सदा यदा, तदा मर्त्योऽपि वर्धन्ते, कथ्नुवन्ति च सर्वथा, मितप्रजा , बहुसुखा , सुप्रीताश्च परस्परं । अयमेव प्रकारस्तु 'स्व राज्यस्य' उत्तम स्मृत ।

२२६ २७ ( विनिर्णय ।' इत्यस्याग्रे) "तेज , क्षमा वा, नैकान्त, कालज्ञस्य मही-

पते , नैकं ओजः, प्रसादो वा, रस भाव रिद कयैे" (माघ ,२-८३), "न खरा न च भूयसा मृदु , पवमान पृथिवीरुहान् इव, ( मद उद्धतं एव मोचयन् ) नमयामास नृपान् अनुद्धरन्" ( रघु० ) ।

२४५ २७ ( पृष्ठान्ते टिप्पण्यां, 'ऽनूदिता ।' इत्यस्याग्रे ) सायण , कृष्ण यजुर्वेदीय-तैत्तिरीयारण्यक दशम प्रपाठक भाष्ये, विविधान् मन्त्रान् 'खिलान्' अभिधाय, तत्सम्बन्धे लिखति—"इत ऊर्ध्वं तेषु तेषु देशेषु श्रुतिपाठा अत्यन्त विलक्षणा" । ( प्रशाढविदुषा श्रीसम्पूर्णानन्देन एव लिखितमस्ति, 'ब्राह्मण सावधान !' इति शीर्षकाङ्किते लेखे, काश्या 'आज'-नामक हिन्दी पत्रस्य साप्ताहिकेऽङ्के, २२ श्रावण, २००१ विक्रमीयतिथे । एतेन लक्षय शोच्यते, यद् वेदेषु कृतभूरिपरिश्रमस्य महापंडित सायणस्य मते, श्रुतीनां पाठ , काले काले, मूर्खैर् अबुद्धिपूर्वं, धूर्तैर् बुद्धिपूर्वकं च, अन्यथाकरणे , क्षेपकैश्च, परिवर्तित च, परिवर्धित च । तत्रैव श्रीसम्पूर्णानन्देनैतच्च प्रदर्शितं सप्रमाण, यद् ऋग्वेदे ( २ २३-१ ) 'गणपति' शब्द 'ब्रह्मणस्पति'-वाचक , सायण-मतेन, न तु कस्यचिद् गजाननस्य लम्बोदरस्य वक्रतुण्डस्य'देवस्य', तथा,स' शब्द ,यजुर्वेदीयाश्वमेधाध्याये, अश्व दैवत्य मन्त्रस्य पूर्वभागे अश्वेन सम्बध्यत, द्वितीयभागे तु रासभेन, उव्वट-महीधरयोर्भाष्यकारयोर्मतेन । अश्वमेधीयमन्त्रशब्दा नितान्त बीभत्सप्रशील भावपूर्णा , अत कैश्चिद् वाममार्गीयैरेव समग्रमपि तत् प्रकरणं प्रक्षिप्त इति ■ प्रतिभाति । प्राचीनैन आर्यवैदिकरामानेन,पराजितबर्बर-निषाद-आदि-जाती स्व समाज-व्यवस्थाया यथास्थानं निवेशयितु, मैत्रीबुद्धा च सान्त्वयितु, तासा काश्चिद् बहु पूजिता देवता , तदर्चन-प्रकाराश्च काश्चित् ,यथाशक्य परिष्कृत्य, अनुजज्ञिरे, आध्यात्मिकैर् अर्थैश्चापि, तासा जातीना क्रमश उद्बोधनाय च, उत्कर्षणाय च, ता देवताश्च,तान् अर्चन प्रकाराश्च युयुजिरे, किंतु कालप्रवाहेन,मानवेषु दुर्वासनानां तामसीना पुन पुन प्रबलीभवनेन,ते परिष्कारा बहुधा विचक्रिरे ।

२४६ २७ ('अवरुद्धवान्।' इत्यस्यापे) सन्ति एव ओषधयो, ज्ञाता विशेषज्ञैस्तु कुत्रचित्, दक्षिणामेरिकादेशे यथा तत्रत्यआदिवासिनां 'मेस्कल्' इत्यादि नाम्ना या, वैश्चिच आर्टै परीक्षिता, निषेवणात्, स्थूलदेहे तंद्रामुत्पादयति, अपि सूक्ष्मेन्द्रियाणां उन्मेष जनयन्ति, अधिकारिणि, तदथ साधिते देहे, अभ्यासैर्विधिपूर्वक, दूरस्थाना अतीताना, भवताम्, भाविनामपि वृत्तान्ताना, ज्ञानार्थं, प्रतीकाराय चऽपदां। सम्भवेत् वैदिके काले, सद्भयीया तथाविधा ज्ञाता ओषधि क्वचिद् आसीत्, लुप्त ज्ञान तु तदधिरात्। (योगसूत्र, ४ १)।

# शोधनपत्रम्

| पृष्ठे | पंक्तौ | एतस्य स्थाने | एतत्पठनीयं |
|---|---|---|---|
| १ | १६ | विना। | विना, |
| ३ | पेज हेडिङ् | कल | कलौ |
| ४ | ७ | लोभस | लोभ- |
| १० | ३ | येऽभूवन् | ये संति |
| ११ | ४ | विशेषा | विशेषो |
| १५ | ३८ | अतगता॰ | अंतर्गताः |
| १६ | ८ | बुद्धिपूर्वे | बुद्धिपूर्वकं |
| ६२ | २२ | कुरुत | कुरुते |
| ६७ | १८ | निस्स्वार्थी | निस्स्वार्थः |
| ७१ | २३ | अतिवृद्ध | अतिवृद्धेः |
| ७२ | = | ( मू॰ ) | ( १२० ) |
| ७३ | ५ | तथा | अपि |
| ८४ | २४ | न्याय-सूत्रं | न्याय सूत्रं ( २-२-३० ) |
| ८७ | २ | इच्छा तमोमयी सैव | सात्विकीच्छा, तामसी तु |
| ८८ | १५ | वै | वै ; |
| ८९ | १३ | अहरहर् | अहरहो |
| ९० | २४ | भध्यानेन | शुभध्यानेन |
| ९५ | ७ | ६ अध्यायः | ॐ ६ अध्यायः |
| १०५ | पे. हे. | वर्णा नाम्ना | वर्णं नाम्नां |
| १०६ | ३ | -नो | -नोव |
| ,, | ५ | आमि | आमिल् |
| १०९ | २६ | चतुर्थके | चतुर्थके । |
| १२० | २ | ज्ञानेन एव | ज्ञानेन |
| ,, | ६ | बहवो डिता- | बहवो दंडिता- |

| | | | |
|---|---|---|---|
| १३२ | २४ | श्रीः | श्रीः तथा |
| १३५ | पे. हे. | शंशप्तकाः | संशप्तकाः |
| १४४ | १३ | नान्यनरात् तथा | नान्यनरस्य वै |
| १४५ | १६ | वेपन्तीर् हरिणीरिव | वेपमानाः मृगीरिव |
| १५० | २०-२१ | निवाध्योस्तु शरीरयोः | देहयोस्तु विवाध्ययोः |
| ,, | २८ | चैवं, | च, एवं |
| १६७ | ११ | तथा | तथा |
| १७४ | २२ | क्षुद्रता | नीचता |
| १७५ | २० | वृत्तान्तानीदृशानि च | वृत्तान्ताः ईदृशाः ननु |
| १८८ | ११ | ग्रन्थापधायकाः | ग्रन्थोपधायकाः |
| १८९ | १४ | संयुक्तैश्च | संयुक्तश्च |
| २२७ | ४ | भुव | भुवः, |
| २३२ | २ | ( ३० ) | ( ३१ ) |
| २५६ | पे. हे. | अनाहतं शब्द-सामान्यं | सम्प्रदायिनां वाग्युद्धानि, शस्त्र-युद्धानि च |
| २६५ | १२ | अमूर्तमेव | अमूर्तं एव |

सूचीपत्रे, २ पृष्ठे, ३-८ पंक्तीनां स्थाने एवं पठनीयं—



मम व्याकरण-ज्ञानाद्, दौर्बल्याद् अपि चक्षुषोः
जरया, स्मृतिशैथिल्यात्, मुद्रकाणां च दोषतः,
बह्व्योऽवशिष्टाः अन्येऽत्र-ह्यशुद्धयो, न विशोधिताः;
विद्वांसः . सज्जनाः, एतत् पठेयुः पुस्तकं तु ये,
कृपया, ऊर्ध्वं च रक्षन्तः, शोधयिष्यन्ति ते हि ताः ।

# संकेत-विवरणं

-ा = अ + अ ; यथा, बल-अतुलः = बल-ातुलः ( पृ. १७७ ) ; दौणाय-अवासृजत् = दौणाय-ावासृजत् ( पृ. १७६ ) ; मद्य-चय-अतिलोभात् = मद्य-चय ातिलोभात् ( १२१ ) ।

ऽा = अ + आ ; शत-आचार्यान् = शतऽाचार्यान् ( १२६ ) ; त्यक्त-स्व-धर्म-आचरणाः = त्यक्तस्वधर्मऽाचरणाः (२७), धर्म-आभासः = धर्मऽाभासः (२४१) ।

ाऽ = आ + अ ; भविता-अस्माकं = भविताऽस्माकं ( ५७ ); तदा-असौ = तदाऽसौ ( २४१ ); सेवा-अर्चनरताः = सेवाऽर्चनरताः ( ३७ ) ।

ाऽा = आ + आ ; या + आसीत् = याऽासीत् । ( किंतु नैते संधि संकेताः सर्वत्र प्रयुक्ताः ; असंदिग्ध प्रसिद्धशब्देषु तु प्रायः नैव ) ।

, स्वल्प विरामचिन्ह, एकस्यैव वाक्यस्य खंडानां अपृथक्कार्याणां बोधनाय ।

; मध्य-विरामचिन्हं, एकस्य वाक्यस्य अङ्गभूतानां अवान्तर वाक्यानां दर्शनाय ।

। पूर्णविराम , एकस्य सम्पूर्ण-वाक्यस्य समाप्ति सूचनाय ।

- निकट-सम्बद्धयोर्वा समस्तयोर्वा पदयोः भिन्नत्वज्ञापनाय ।

— पृथग्-उक्ति आदि-वेदनाय ।

‘ ’ विशेषस्य अर्थस्य वा असाधारण-प्रकारेण प्रयोगस्य वा, प्राचीनवाक्यस्य-ऽयं ानुवादोऽयं इति वा ज्ञापनाय विशेषतः पाठक-ध्यानऽाकर्षणाय वा ।

“ ” अन्यस्माद् ग्रन्थाद् उद्धरणस्य द्योतनाय ।

सन्धयश्च प्रायः छेदिताः । किंतु, यथोक्तं पूर्वं, नैते नियमाः सर्वत्र पालिताः ।

ॐ

# मानवधर्मसारः

## प्रस्तावना

मानवाना अशेषाणा सर्वथा हितकाम्यया, महीतले प्रवृत्ताना, वात्सल्यात् प्रसवितृवत्, अध्यात्मविद्यामूलाना, सर्वज्ञानभूता अपि, वेदनिष्कर्षभूताना, धात्रीणा सर्वसम्पदा, चतुर्णा पुरुषार्थाना साधिकाना समतत, देशकालनिमिताना, गुणाना, अधिकारिणा, सम्पद् आपद् अवस्थाना, विवेकेन विशेषत सर्वसम्वादयित्रीणा, विद्याऽपनुदो सदा, उदारधीरगम्भीरवाचा, भगवतो मनो, कैश्चिद् भगवतो दासैर्, अय सार प्रसार्यते। प्रस्तूयतेऽत्र किल मानवधर्मसार, क्षोणऽर्यवंशभरणोद्धरणप्रकार, भोगाऽपवर्गयुगलस्य च मार्गकार, सचार्यताम् अय अशेषहितोऽस्तुदार, सच्छास्त्रपूतधिषणा। जवशिक्षितार ' विस्तार्यतां च बहुश, शुचिधर्मधार, दृष्ट्वा स्थितिं तु जगतोभिनवा, यथा स्याद् व्याख्या नवा रचयितु भवता विचार। सत्य ब्रवीमि, उभय लोकहितं ब्रवीमि, लोके प्रतीत्य परमार्थयुत न वच्मि, प्राचीनशास्त्रहृदय प्रकटीकरोमि, स्वार्थे मतिं सहृदया कुरुताऽर्यवर्या। ॐ

## पाठकेभ्यो निवेदन

न अत्र व्याकरणप्रौढिर्, न किंचित् काव्यकौशल, नापि पण्डितमानित्व, न स्वप्रख्यापन एषणा, न स्वार्थसाधनेच्छाऽन्या काचन अत्र हृदि स्थिता, "यशोऽधिगन्तु, सुखलिप्सया वा, मनुष्यसख्यामतिवर्तितु वा, (नै०), नाय प्रयत्नो, ऽपि तु धर्मशुद्ध्यै, कृष्ण्यै नृलोकस्य च, बुद्धिवृद्ध्यै। "न ख्यातिहेतोर् न च लाभहेतोर् न पि अर्चनार्थं विहित प्रबन्ध" (माघ० शक० दि०), आज्ञामनोस्तु अपता पृथिव्या विशुद्धरूपा इति अयं अस्ति यत्न। न धनाय न कीर्त्यै वा, व्यवहारविदे पर, शिवेतरप्रहाण्यायापि, अय आर्षार्थसग्रह। सिषेविषा एव लोकस्य अप्रत्नऽस्मिन् प्रयोजिका। भारतस्य विशेषेण, संप्राप्तस्य अतिदीनता, सर्वऽर्यजातिमूलस्य अपि, आयातस्य अत्य मार्गता, यतोऽस्मिन् उद्दिने, सर्वम् उद्दिशन् मानव कुल; सपक्षे भारते शात्या, सर्वेऽन्ये शांतिं आप्नुयु। आभ्यतरैर् अभिद्रोहै देशोऽय दासतां गत, नितरा दुर्बलो जातः पराधीनजनऽावृत, लोभाद् अस्य धनस्यापि, अप्यभाव गतस्य च जनस्य लोभात्, पाश्चात्या विवदते परस्पर, अन्योऽन्य, भारत चापि, पीडयतो दिवानिश। अतो हि,

भारते वर्षे सुतरां सुव्यवस्थिते, तादृग्व्यवस्था सर्वत्र प्रसरेत् जगतीतले। पाश्चात्यैः, साम्प्रते काले, समाजव्यूहनाय याः निर्मीयन्ते व्यवस्थास्, ताः विपद्यन्ते पदे पदे ; यतो न अध्यात्मसिद्धान्तान् अनुरुन्धन्ति शाश्वतान। प्रमाणं अस्मिन् अर्थे तु यद् आह भगवान् मनुः—"एतद्देशप्रसूतस्य सकाशाद् अग्रजन्मनः, स्वं स्वं चरित्रं शिक्षेरन्, पृथिव्यां सर्वमानवाः। न हि अनध्यात्मवित् कश्चित् क्रियाफलं उपाश्नुते। या वेद-बाह्या स्मृतयः, याश्च काश्च कुदृष्टयः, उत्पद्यन्ते च्यवन्ते ताः निष्फलाः अनृतास्तथा। विद्वद्भिः सेवितः सद्भिर् नित्यं अद्वेषरागिभिः, हृदयेन अभ्यनुज्ञातो यो धर्मस्तं निबोधत" (म०)। ('अग्रजन्मा'-इतिशब्दार्थो मन्ये निर्दिश्यते स्फुटं)।

असद्द्विजानां गर्हाऽत्र त्रयाणां अपि या कृता, सद्द्विजैः पूर्वऋषिभिर् एव सा तु बहु उदिता। द्रोहासूयेण भावेन निन्दा नात्र, मनाग् अपि, कस्यापि जातेर्, व्यक्तेर् वा, कृता, मत्सरतोऽथवा। सद्द्विजानां त्रयाणां च प्रशंसाऽपि, तथा एव हि, न चाटुकारबुद्ध्या वा, स्वार्थसिद्ध्यै न वा, कृता। प्राक्तनानां महर्षीणां अनुसृत्य वचांसि वै, सतां उक्ता प्रशंसा च, निन्दा चापि असतां तथा ; यतस् तु सद्द्विजैर् एव लोकोऽयं पाल्यते त्रिभिः, असद्भिस् तैः त्रिभिः चापि निरये विनिपात्यते। चित्ते सम्यङ् निधाय एतद्, ग्रन्थस्य-अर्थो विचार्यताम्, पूर्यन्तां त्रुटयश्चापि, सद्भावमृदुमानसैः, नीयतां च विशुद्धोऽर्थः भारतोद्धारकार्यताम्।

आर्षाः येऽत्र प्रयोज्यन्ते शब्दास्, तेषां तु केचन, नव्यव्याकरणस्य अनु-यायिनां स्युर् असंमताः ; तत्र कारणम् एतद् हि, पुराणपरमर्षयः, न पाणिन्या-द्योऽर्वाञ्चः, प्रायः एव तु सेविताः ; महर्षीणां पुराणानां पुराणेतिहकारिणां यथा कृताऽत्र शुश्रूषा, प्रायो नार्वाग्भुवां तथा ; तेषां वाणी सुकल्याणी ग्रन्थकारेऽनुवर्त्यते, सतां, भगवतां दासैर्, भावश्चानुविधीयते। "पदशैर् न प्रतिनिर्बन्धः कर्तव्यो मुनि-भाषिते ; अर्थस्मरणतात्पर्यान् नाद्रियन्ते हि अक्षरं।"

प्रायशोऽत्राशुबोधाय, वर्णसंधिर् विवर्जितः ; मतं च पाणिनीयानां अपि, यत् संधिर् ऐच्छिकः। सुखेन बोधाय एव, अर्थे भ्रमस्य च निवृत्तये, नवीनैः कतिभिश् चिन्हैः वाक्यखंडाः च भेदिताः ; टैटक्-संकेत-विवृतिः शिष्टेऽन्ये विस्तरात् कृता। यदि संस्कृतभाषायाः इष्यते भारतेऽधिकः प्रचारो, ऽस्याः सुबोध्यत्वं तदा साध्यं मनीषिभिः, अनायासेन लेख्यत्वं वदनीयत्वं एव च ; सरलीकरणं तादृग् भाषायास्तु न सम्भवेद् विना व्याकृति-बन्धानां श्लथनेन ; ईषद् एव हि ; न उच्छृङ्खलं ; यतो,

नूनं, संस्कृतं विकृतं भवेत् ; संस्कृता गीर् एवं एव बहुप्राकृतत्तां गता, 'नियमानां तु सर्वेषां सर्वथैव अनपेक्षणात् ; "एकैकस्य हि शब्दस्य अपभ्रंशाः बहवः स्मृताः" ( पतं० महा० )। तस्माद् आवश्यकाः सन्ति कियन्तो नियमाः ननु। सामान्यास्तु अनुसर्त्तव्याः व्याकृतेर्नियमाः, ध्रुवं ; न तथा सर्वदा पूज्याः विशेषाः कृत्रिमाश्च ये। पाणिन्यादिभिरेव अत्र सम्यक् मार्गः प्रदर्शितः—"सपादसप्ताध्यायीं प्रति त्रिपादी असिद्धा, त्रिपाद्यां अपि पूर्वं प्रति परं शास्त्रं असिद्धं" ; "बहुलं छन्दसि"; "निपातनात् साधु", "पृषोदरादीनि यथोपदिष्टं"; "उणादयो बहुलं"; "वेदेषु सर्वेऽपि धातवः उभयपदिनः"; "लोकवत्तु लिङ्गानि"—इति प्रभृतिभिर्वाक्यैः श्रूयते, सूचितं ननु। "न कोऽपि वैयाकरण-कुलं गत्वा ब्रवीति वै—कुरु शब्दान् प्रयोक्ष्येऽहं"; प्रत्युत अयं स्वयं, खलु, लोकात्, व्याकरणज्ञो हि, शब्दान् सम्प्राप्य, मार्ष्टि ; "लोकतोऽर्थप्रयुक्ते तु, धर्माय नियमस्ततः, शब्दप्रयोगे शास्त्रेण क्रियते", नात्र संशयः ; "ये चापि एते ऽप्रयुक्तास्तु मतोऽभिमताः, खलु, प्रयोगः एतेषां चापि वेदे दृश्यत एव हि";—एवं आह स, लोकज्ञः, महाभाष्ये पतंजलिः। "बहुलं छन्दसि"—इत्येतत् सूत्रं पाणिनिना पुनः पुनर् आम्रेडितं हि एकादशकृत्वः ; तथैव च, तादृशान्यसूत्राणि पठितानि अपवादरूपाणि। वैदिकेष्वपि मंत्रेषु च 'ऊहया' परिवर्त्तनं, प्रसंगस्यानुसारेण, अप्यसंदेहार्थमेव च, शिष्टानां संमतं चापि, कृतं च बहु दृश्यते ; "रक्षा-ऊहा-आगम-लघु-अर्थं असंदेहाय च"-इत्यत्र प्रहृत व्याकृतेः शास्त्रं, इति सिद्धान्तः एष हि। यदा तु लघुता-स्थाने क्लिष्टा हि गुरुता भवेत्, असन्देहस्य च स्थाने संदेहश्चोत्पतेद् बहु, नूनः प्रकारो, लोकेन, वाचां व्यवहृतां तदा, ऽध्यवितव्यो भवेदेव, नूतनैर्नियमैर्धृतः।

सर्वप्रांतेषु यत् नैकं प्राकृतं प्रतिबुध्यते, बुध्यते संस्कृतं त्वार्यैर्, अतो व्याह्रियतेऽत्र तत्। नवं नैवाऽत्र सिद्धान्तं किञ्चिद् आचक्ष्महे वयं ; प्राचीनं विस्मृतप्रायं एव संस्मारयामहे। अत्र यत् स्खलितं किंचित्, न्यूनं वा, ऽप्यधिकं तु वा, तत् सर्वं, सद्विचारैः स्वैः समादधतु सज्जनाः, विमर्शानन्तरं सम्यग्, इति च प्रार्थयामहे।

( पुनर्दृष्टं, उपबृंहितं च ; सौर, बुधवार, ११, आश्विन, २००१ वि०,
विजयादशमी ; २७ सितम्बर, १९४४ ई० )

---

### परमात्मप्रार्थना

ॐ सर्वात्मने परमात्मने नमः ॐ

ॐ भूः, भुवः, स्वः, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्। ॐ योऽसावसौ पुरुषः सोऽहमस्मि, ॐ। ओमित्येकाक्षरं ब्रह्म व्याहरन्, मामनुस्मरन् (गी०) यस्तु आरभते कार्यं, तत् सत् सिद्धं भविष्यति। ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः, त्रिपदा चैव सावित्री, विज्ञेयं ब्रह्मणो मुखम्। एकाक्षरं परं ब्रह्म, प्राणायामः परं तपः, सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते। अकारं चाप्युकारं च मकारं च प्रजापतिः, वेदत्रयात् निरदुहद्, भूर्भुवस्स्वरितीति च, त्रिभ्य एव तु वेदेभ्यः, पादं पादं अदूदुहत्, तदित्यृचोऽस्याः सावित्र्याः, परमेष्ठी प्रजापतिः। ऋचो अक्षरे परमे व्योमन्, यस्मिन्देवा अधि विश्वे निषेदुः, यस्तन्न वेद किमृचा करिष्यति, य इत्तद्विदुस्त इमे समासते। एतम् एके वदन्ति अग्निं, मनुम् अन्ये प्रजापतिं, इन्द्रम् एके, परे प्राणं, अपरे ब्रह्म शाश्वतं, प्रशासितारं सर्वेषां, अणीयांसं अणोरपि, रुक्माभं, स्वप्नधीगम्यं, तं विद्यात् पुरुषं परं। यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः, स सर्वोऽभिहितो वेदे, सर्वज्ञानमयो हि [illegible] (म०)। मननात् त्रायते 'मन्त्रो' यस्य असौ भगवान् 'मनुः', किंकरस्य अस्य तस्यैव, यदीयाज्ञा चिकीर्षतः, प्रसीदतु, सुबुद्धिं च, कार्यशक्तिं च, यच्छतु, आरभेत सम्पूर्णे सफलं विदधातु च। श्रियः पतिर्यज्ञपतिर्धरापतिः, प्रजापतिर्लोकपतिर्धियांपतिः, पतिर्गतिश्चान्धकवृष्णिसात्वतां, प्रसीदतां मे भगवान् सतां पतिः। प्रचोदिता येन पुरा सरस्वती, वितन्वताऽजस्य सतीं स्मृतिं हृदि, स्वलक्षणा प्रादुरभूत् किलाऽस्यतः, स मे ऋषीणां ऋषभः प्रसीदताम् (भा०)। नमः सवित्रे, जगदेकचक्षुषे, जगत्प्रसूतिस्थितिनाशहेतवे, त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशंकरात्मने (आदित्य० स्तो०)। ॐ गणानां त्वा गणपतिं हवामहे, प्रियाणां त्वा प्रियपतिं हवामहे, निधीनां त्वा निधिपतिं हवामहे, ॐ (य० वे०)। चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत्, नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः (दु०स०)। ॐ यो देवानां प्रभवश्चोद्भवश्च, विश्वाधिपो, रुद्रो, महर्षिः हिरण्यगर्भं पश्यति जायमानं, स नो बुद्ध्या शुभया संयुनक्तु। ॐ सह नाववतु, सह [illegible] भुनक्तु, सह वीर्यं करवावहै, तेजस्वि नावधीतमस्तु, मा विद्विषावहै। ॐ भद्रं कर्णेभिः शृणुयाम देवाः, भद्रं पश्येम

-ङ्गभिर्यजत्राः, स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः, व्यशेम देवहितं यद् आयुः। ॐ भवेम शरदः शतं, रोहेम शरदः शतं, पुष्येम शरदः शतं, नंदेम शरदः शतं, मोदेम शरदः शतं, भूयेम शरदः शतं, पश्येम शरदः शतं, शृणुयाम शरदः शतं, पुष्येम शरदः शतं, जीवेम शरदः शतं, प्रब्रवाम शरदः शतं, ( आत्मज्ञाः ) अदीनाः ( स्वाधीनाः स्वराजः ) स्याम शरदः शतं ; भूयश्च शरदः शतात् ॐ। (वे०) पृथिवी-आपस्-तेजो-वायु-आकाशाः नः शुध्यन्तां, शब्द स्पर्श रूप-रस गन्धाः नः शुध्यन्तां, मनो-वा -क्काय-कर्माणि नः शुध्यन्तां, आत्मा नः शुध्यतां ज्योतिः, वयं विरजसः विपाप्मानः भूयास्म ( तैत्ति० आर० ); देवीं वाचं अजनयन्त देवाः, तां विश्वरूपाः पशवो वदन्ति, सा नो मन्द्रे षं ऊर्जं दुहाना धेनुर्वाग् अस्मान् उपसुष्टुता एतु (वे०)। मा नो महान्तं उत मा नो अर्भकं, मा नो उक्षन्तं उत मा नः उक्षितं, मा नो वधीः पितरं मोत मातरं, प्रिया मा नस्तन्वो रुद्र रीरिषः। मा नः स्तोके तनये,मा न आयुषि,मा नो गोषु, मा नो अश्वेषु रीरिष , वीरान् मा नो,रुद्र, भामितो वधीः, हविष्मंतो नमसा विधेम ते या ते, रुद्र, शिवा तनूर्, अघोरा, पापकाशिनी, तया नस्तनुवा शंतमया, गिरिशन्त, अभिचाकशीहि। याते, रुद्र!, शिवा तनूः, शिवा विश्वाह भेषजी, शिवा रुद्रस्य भेषजी तया नो मृड, जीवसे (वे०)। आत्मैवेदं सर्वमिति, स वा एष एवं पश्यन्, आत्मरतिः, आत्मक्रीडः, आत्ममिथुनः, आत्मानन्दः, स स्वराड् भवति ; तस्य सर्वेषु लोकेषु कामचारो भवति ; ( स्याम स्वराजः ) ॐ ( उप० )। ॐ येनेदं भूतं भुवनं भवि-ष्यत् परिगृहीतं अमृतेन सर्वम्, यस्मिंश्चित्त सर्वमोतं प्रजानां, तन्मे मनः शिवसंकल्प-मस्तु। ॐ अग्ने !, नय सुपथा राये अस्मान् , विश्वानि, देव !, वयुनानि विद्वान्; युयोध्य अस्मज् जुहुराणं एनः;भूयिष्ठां ते नम उक्तिं विधेम ॐ। ॐ हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं, तत्त्वं, पूषन्, अपावृणु, सत्यधर्माय दृष्टये ॐ (वे०)। ॐ अप ध्वान्तं ऊर्णुहि, पूर्द्धि चक्षुः, मुमुग्धि अस्मान् निधयेव बद्धान्; मा नः पाशं प्रतिमुचो; गुरुर् भावो लघुर्भव। मा भ्राता भ्रातरं द्विक्षद्,मा स्वसारं उत स्वसा। सम्यञ्चः सव्रताः भूत्वा,वाचा वदत भद्रया ॐ। ॐ देवायाः इव अमृतं रक्षमाणाः, सायं प्रातः सौमनसो नः अस्तु ॐ। ॐ अभयं नः करोतु अन्तरिक्षं,अभयं द्यावापृथिवी उभे इमे, अभयं पश्चाद्,अभयं पुरस्ताद्,उत्तराद् अधराद् अभयं नो अस्तु; अभयं मित्राद्, अभयं अमित्राद्, अभयं ज्ञातात्, अभयं परो यः, अभयं नक्तं, अभयं दिवा नः, सर्वाः आशाः मम मित्रं भवंतु ॐ। ॐ यद् इह घोरं, यद इह क्रूरं, यद [illegible] पापं, तत्

शांतं, तत् शिवं, सर्वं एव शिव अस्तु नः, सर्वमेव शम् अस्तु नः ॐ (वे॰)। ॐ अहं रुद्रेभिर्वसुभिश्चरामि, अहमादित्यैर् उत विश्वदेवैः, अहं मित्रावरुणोभा बिभर्मि, अहमिन्द्राग्नी, अहमश्विनोभा,...अहं राष्ट्री संगमनी वसूनां, चिकितुषी प्रथमा यज्ञियाना,...अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः,यं कामये तंतं उग्रं कृणोमि, तं ब्रह्माणं, तं ऋषिं, तं सुमेधा (देवीसूक्त, वे॰)। नायमात्मा प्रवचनेन लभ्यः, न मेधया, न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यः, तस्यैष आत्मा विवृणुते तनूं स्वां (उ॰)। ॐ नमः परमात्मने, ॐ नमः परमात्मने ॐ।



ॐ

## १ अध्यायः

### मनुं प्रति महर्षीणां प्रश्नः ।

"मनुं एकाग्रं आसीनं अभिगम्य, महर्षयः, प्रतिपूज्य यथान्यायं, इदं वचनं अब्रुवन्—भगवन् ! सर्ववर्णानां, यथावद्, अनुपूर्वशः," सर्वेषां आश्रमाणां च, "धर्मान् नः वक्तुं अर्हसि; त्वं एव एकोऽस्य सर्वस्य विधानस्य स्वयंभुवः, अचिंत्यस्य अप्रमेयस्य कार्यतत्त्वार्थवित्,प्रभो !"(म०);"धारणाद् धर्म इत्याहुः, धर्मो धारयति प्रजाः"(म०भा०); वर्णाश्रमात्मके धर्मे सर्वधर्मस्य संग्रहः;अनेन एव हि धर्मेण भवेत् लोकस्य धारणं; परस्परं च संबंधः, संग्रहो, ग्रथनं तथा, सालयानां अशोकानां, स्वस्वभावानुसारतः; न विग्रहो, न स्खलनं,न परस्परक्षरणं;कर्तव्यानां तथा एव अधिकाराणां च परस्परं, एकैकेन अधिकारेण कृत्यस्य एकस्य,बंधनं; कृत्याधिकाररूपाभिर् मर्यादानां च रज्जुभिः,सर्वेषां मानवानां च बंधनं,धारणं ततः । "व्यवस्थितआर्यमर्यादः, कृतवर्णाश्रमस्थितिः, त्रय्या हि रक्षितो लोकः प्रसीदति, न सीदति; प्रजासुखे सुखं राज्ञः, प्रजानां च हिते हितं; नात्मप्रियं हितं राज्ञः, प्रजानां तु प्रियं हितं" (कौट०अर्थशा०)।(१०)।"यस्य स्फीतो जनपदः, सम्पन्नः, प्रियराजकः, संतुष्टपुष्टसचिवः, दृढमूलः स पार्थिवः; पौरजानपदाः यस्य भूतेषु च दयालवः, सधनाः धान्यवन्तश्च,दृढमूलः स पार्थिवः"(म०भा०);"स्वे स्वे धर्मे निविष्टानां सर्वेषां, अनुपूर्वशः, वर्णानां, आश्रमाणां च, राजा सृष्टोऽभिरक्षिता" (म०)। सुव्यवस्थां समाजस्य विना। सौख्यं न कस्यचित्; विनाऽऽश्रमांश्च वर्णांश्च सा व्यवस्था न सिध्यति; कृत्याधिकाररूपाश्च धर्माः एतन्निर्बंधनाः ; एतेषाम् एव धर्मैस्तु संबध्यंते परस्परम्, 'समाजतां' च प्राप्यंति, धार्यंते, चाखिलाः जनाः, चतुर्भिः पुरुषार्थैश्च योज्यंते, स्खलनं विना । धर्मांस् तद् एषां एवआदौ पप्रच्छुर् मुनयो मनुं; समस्तान् प्रदादास अपि तान् धर्मान् भगवान्मनुः । (१७ श्लोक.)

### हिन्दूनां क्षयरोगः ।

'हिन्दू'-नामकलोकस्तु सीदति एव हि साम्प्रतं,प्रत्यक्षं एव हिन्दूनां ह्रासः सर्वत्र दृश्यते; न स्वधर्मे निविष्टास् ते वर्णाः, नापि आश्रमास्तथा; न वर्णान् आश्रमान्

यापि राजा कश्चन रक्षति,दृश्यते'हिन्दवो'नित्य परस्पर उपद्रुता , तथाऽधुना प्रतिदिन पीडिता परधर्मिभि ,(२०),म्लानिर् धर्मस्य च क्लेषा, धर्मविद्विष्य एव च,तथैव परधर्माणा अभ्युत्थानं दिने दिने, पापडिताव 'पथै'श्च 'हिन्दवो' जर्जरीकृता , कामज क्रोधजश्च एषा दुराचारो गृहे गृहे। "नारदो बहुतीर्थेषु भ्रममाण. इतस्तत , न अपश्यत् कुत्रचित् शर्म, मन सतोषकारक, कलिनाऽधर्ममित्रेण धरा इव बाधते ऽधुना; सत्य नास्ति, दया दान तप शौच न विद्यते, उदरम्भरिणो जीवा , वराका , कूटभाषिण , मदा , सुमदमतय , मदभाग्या , हि उपद्रुता. , तरुणीप्रभुना गेहे, श्यालको बुद्धिदायक , कन्याविक्रयिणो लोभाद्, दपतीना च कल्कन, आश्रमा यवनै: रुद्धा , तीर्थानि सरितस् तथा, देवताऽयतनानि अत्र दुष्टैर्नष्टानि भूरिश , पापहनिरता 'सन्त ', 'विरता ' स परिग्रहा , न योगी, नैव सिद्धो वा, न ज्ञानी सत्क्रियो नर । सुकर्माचरणात् भार सर्वतो निर्गतोऽधुना, कथ्यते कणलोभेन, कथासारस् ततो गत , अत्युग्रभूरिकर्माणो नास्तिका रौरवा जना , तेऽपि तिष्ठति तीर्थेषु,तीर्थसारस्ततो गत , (३०), काम क्रोध-महालोभ तृष्णा-व्याकुल चेतस ,तेऽपि तिष्ठति तपसि,तपस्सारस्ततो गत ; मनसश्च अजयात्, लोभाद् , दभात्,पाखड संश्रयात्, शास्त्रानभ्यसनाच्चैव, ध्यानयोगफल गत । अट्टशूला जनपदा , शिव शूला द्विजातय , कामिन्य केशशूलिन्य , सभवति कलौ इह । ( अट्ट अन्नमिति प्रोक्त, शूलो विक्रय उच्यते, शिवस्तु वेदो विज्ञेयो,वराग केश उच्यते )",(भाग० माहा०),या भागवतमाहात्म्ये दुर्दशा इव हि वर्णिता,पचपाणा शताब्दीना पूर्व,घोर सराऽद्य सा । "प्रभवति यदा सत्वे, मनोबुद्धीन्द्रियाणि च, तदा कृतयुग विद्यात्, ज्ञाने तपसि यद्रुचि , यदा धर्मार्थकामेषु भक्तिर्भवति देहिना,तदा त्रेता रजोवृत्तिर्, इति जानीहि, बुद्धिमन्', यदा लोभस्तु असतोषो मानो दभोऽथ मत्सर , कर्माणि चापि काम्यानि, द्वापर तद्रजस्तम , यदा माया अनृत तन्द्रा निद्रा हिंसा विषादन शोको मोहो भय दैन्य, स कलिस्तामस स्मृत , यस्मात् क्षुद्रदृशो मर्त्या मन्दभाग्यामहाऽशना कामिनो वित्तहीनाश्च, स्वैरिण्यश्च स्त्रियोऽसती , (४०), दस्यूत्कृष्टा जनपदा , वेदा पाखडदूषिता , राजानश्च प्रजाभक्षा ,शिश्नोदरपरा द्विजा , अव्रता बटवोऽशौचा , भिक्षवश्च कुटुम्बिन , तपस्विनो ग्रामवासा , (स) न्यासिनोऽत्यर्थलोलुपा , ह्रस्वकाया महाहारा भूरि-अपत्या गतह्रिय शश्वत्कटुकवक्तारो जना माया उरुसाहसा ,पति त्यजंति निर्द्रव्य भृत्या अपि अखिलोत्तम, भृत्यं विपन्न पतय कौलं,

गाश्च अपयस्विनी ; पितृभ्रातृसुहृज्ज्ञातीन् हित्वा, सौरतसौहृदा , मनादस्वालस धासा:, दीना स्त्रैणा कलौ नरा , नित्यम् उद्विग्नमनस , कर दुर्भिक्ष कर्पिता , निरन्ने भूतले मायो हि अनावृष्टिभयप्रतुरा , वासो अन्न-पान शयन दाम्पत्यस्नेह भूषणै हीना , पिशाचसंदर्शा , भवत्येव कलौ प्रजा । कलौ काकिणिकेऽप्यथ विगृह्य, त्यक्त्वौ हृदा , त्यजन्ति च प्रियान्प्राणान्, निघासति स्वकान् अपि ' (भा०) । आढ्या महाढ्या अन्यस्या , दरिद्रा भूरिशो जना , दासभूता शक्तिमती बहुरोगैर् उपद्रुता । भूपोऽपि द्वादशरूपे उक्तो भागवते कलि । "धान्या द्विजा भविष्यति, शूद्रप्राया जनाधिपा , (५०), तुल्यकाल इमे (सर्वे) म्लेच्छप्रायाश्च भूभृत , एते अधर्मानृत परा , फल्गुदा , तीव्रमन्यव , स्त्री बाल-गो द्विज घ्नाश्च, परदार धन-आहता , उदित अस्तमित प्राया , अल्पसत्वाल्पकअयुष , असंस्कृता , क्रियाहीना , रजसा तमसा अवृता", प्रजास् ते भक्षयिष्यति म्लेच्छा राजन्यरूपिण , तन्नाथास् ते जनपदा", तच्छीलअचारवादिन , अन्योऽन्यतो, राजभिश्च, क्षय यास्यति पीडिता , ततश्च अनु दिन धर्म सत्य शौच क्षमा दया,कालेन बलिना (सर्वं) नंक्ष्यति आयुर् बल स्मृति", वित्त एव कलौ नृ णा जन्मअचारगुणोदय , धर्मन्यायव्यवस्थाया कारण बलं एव हि,लिङ्ग एवआश्रमख्याती अन्योऽन्यआपत्ति(द्वेष)कारण, अ(=कुद्र)वृत्त्या न्यायदौर्बल्य, पाण्डित्ये चापल वच , अनाढ्यता एव असाधुत्वे, साधुत्वे दम्भ एव हि,स्वीकार एव च उद्वाहे, स्नान एव प्रसाधन, दूरे वारि अयन तीर्थ, लावण्य केशधारण, उदरम्भरता स्वार्थ , सत्यत्वे धार्ष्ट्य एव हि, दाक्ष्य कुटुम्बभरणं,यशोऽर्थ धर्मसेवन, प्रजा पिद् क्षत्र-शूद्राणा यो बली भविता नृप , (६०), प्रजा हि,लुब्धै राजन्यै निघृणै दस्युधर्मभि आच्छि सदाराहक्षिणा यास्यति गिरिकानन, शाक मूल अमिष क्षौद्र फल पुष्प-अष्टि (बीज)-भोजना , अनावृष्ट्या विनङ्क्ष्यति दुर्भिक्ष-कर पीडिता , शीत वात अतप प्रावृड् हिमै अन्योऽन्यत ( च ) प्रजा , क्षुत्-तृड्भ्या व्याधिभिश्च एव सन्तप्स्यते च चिन्तया, क्षीयमाणेषु देहेषु देहिनां कलिदोषत , वर्णाश्रमवता धर्म नष्टे वेदपथे नृणा, पाखण्ड प्रचुरे धर्मे,दस्युप्रायेषु राजसु,चौर्य अनृत-वृथाहिंसा नानावृत्तिषु वै नृषु, शूद्रप्रायेषु वर्णेषु, छागप्रायासु धेनुषु, गृहप्रायेषु आश्रमेषु, यौनप्रायेषु बन्धुषु, अणुप्रायासु ओषधीषु, शमीप्रायेषु स्थास्नुषु, विद्युत्प्रायेषु मेघेषु, शून्यप्रायेषु सद्मसु, त्रिंशद् विंशति वर्षाणि परम् आयु कलौ नृणा" (भा०) । मार्कण्डेयेन ऋषिणा, वनपर्वणि, भारते, युधिष्ठिराय बहुश कलिरूप च वर्णित,' ब्राह्मणा शूद्रकर्माण , तथा शूद्रा

धन अर्जका ,क्षत्रधर्मेण वा अपि अत्र वर्तयति युगक्षये, बहवो म्लेच्छराजान पृथिव्यां,मनुजाधिप !,(७०),मृषानुशासिन ,पापा ,मृषावादपरायणा , न तदा ब्राह्मण कश्चित् स्वधर्मं उपजीवति, क्षत्रियाश्चापि, वैश्याश्च, विकर्मस्था , नराधिप !, मुखे भगा स्त्रियो, राजन् !, भविष्यति कलौ युगे; अट्टशूला जनपदा , शिवशूला , चतुष्पथा , केशशूला स्त्रिय , राजन् !, भविष्यति युगक्षये, अट्ट अन्न,शिवो वेद , ब्राह्मणाश्च चतुष्पथा , केशो भग समाख्यात, शूल तद् विक्रय विदु , ब्रह्मचर्याऽनुष्ठिहाना, तथा मिथ्याऽभिशासिनो, नृपाणा, पृथिवीपाल !,प्रतिगृह्णति वै द्विजा , लोभमोह-परीताश्च, मिथ्याधर्मध्वजप्रवृत्ता , भिक्षार्थं, पृथिवीपाल ! चर्यन्ते द्विजा दिश , मिथ्या च मस्करोसाणि धारयन्ति तदा द्विजा अर्थलोभात्, नरव्याघ्र !, वृथा च ब्रह्मचारिण , मूषिष्ठ कूटमानैश्च पण्य विक्रीणते जना , वणिजश्च, नरव्याघ्र !, बहुमाया भवति उत; सप्तवर्षाऽष्टवर्षाश्च स्त्रियो गर्भधरा , नृप !, दशद्वादशवर्षाणा पुसा पुत्र प्रजायते, भवति षोडशे वर्षे नरा पलितिनस् तथा, आयु क्षयो मनुष्याणा क्षिप्र एव प्रपद्यते, (८०), क्षीणायुषो, महाराज !, तरुणा वृद्धशीलिन , तरुणाना च यद् शील तद् वृद्धेषु प्रजायते, विपरीता तदा नार्य , वञ्चयित्वाऽर्हत पतीन्, व्युच्चरति अपि दु शीला दासे , पशुभिर् एव च, ( नराश्च तामसा तद्वत, पत्नी न्युच्चर्य रूपिणी , रमन्ते चाऽपि दासीभि , तथा पशुभिर् एव च ) , ब्राह्मणा क्षत्रिया वैश्या शूद्राश्चापि तथैव हि, त्याजैर् धर्मं चरिष्यति धर्मवैतसिका ननु; सत्य सक्षेप्स्यते लोके नरै पण्डितमानिभि , विद्याहीनात् अविज्ञानात् लोभोऽभिभविष्यति, लोभ-मोह-परा मूढा कामाऽऽसक्ताश्च मानवा , वैरबद्धा भविष्यति परस्परवधैषिण , चत्वारोऽपि तथा वर्णा सकीर्यन्ते परस्परं, शूद्रतुल्या भविष्यति, तप -सत्य विवर्जिता , पुत्र पितृवध कर्ता, पिता पुत्रवध तथा, स्त्रियोऽपि पतिपुत्राऽऽदीन् वधिष्यति युगक्षमे, प्रायश कृपणानां हि, बन्धूना अपि वै तथा,विधवानां च, वित्तानि, हरिष्यति इह मानवा , परस्परवधोद्युक्ता , मायाचारपरिग्रहा , मूर्खाश्च पंडितमन्या , क्षत्रिया लोककण्टका , (९०), अरक्षितार , लुब्धाश्च, मानाऽहकारदर्पिता , केवल दण्डरुचयो राजानश्च कलौ युगे, आक्रम्याऽक्रम्य साधूना दाराश्चाऽपि धनानि च भोक्ष्यन्ते निरनुक्रोशा , रुदता अपि पापिन ,; विपरीतश्च लोकोऽय भविष्यति अधरोत्तर , एडूकान् पूजयिष्यन्ति, वर्जयिष्यति देवता , मही म्लेच्छजनाकीर्णा भविष्यति, ततोऽचिरात् दिशो दश व्रजिष्यति करभारभयात् प्रजा " ( म०

भा०) ।अन्येषु अपि पुराणेषु कलिरूपं निरूपितं, एतादृशैर् एव शब्दैः,अधिकैर् अपि अतोऽधवा। त्रिवर्णानां द्विजानां वै दोषैर् आप्यायते कलिः, कर्तव्याणि त्रयाणां हि, शिक्षा, रक्षा, च पोषणं तेषां प्रकारः त्रय पादा अभूवन् धर्मस्य वै कलौ, न सज् ज्ञानं, न सद्रक्षा, न सतां पोषणं तथा, लभ्यते दारुणे काले कुत्रापि कलिनामके, पाद चतुर्थं ,श्रमण, सामान्ये चेतने स्थितं, बीजं ज्ञानक्रियेच्छानां, कथंचिद् अव शिष्यते। अत एवअशय सर्वैं पुराणैर् ननु वर्ण्यते, इतिहासैश्च, बहुधा, भिन्नैः शब्दैः, पुनः पुनः ।अतो विचार्यतां आर्यं —दृष्टा इय किं नु दुः स्थितिः ? (१००)

हासकारणान्वेषणम् ।

यदि न इयम् अभीष्टा स्यात्, प्रतीकारो विचिन्त्यतां, निश्चित्य कारणं पूर्वं, चिकित्सा क्रियतां ततः । ''कारणं तु चिकित्स्यं स्यात्, न कार्यं '', इति देशना हि आयुर्वेदे प्रसिद्धाऽस्ति मा त्यात्र परित्यज्यतां। द्विजमुख्या , स्वकं दोषं नूनं निह्नोतुम् इच्छन्त , ब्रुवन्ति बहवम् तत्र—'शासका परधर्मिणः अतः समुचिता शिक्षा हिन्दू धर्मे न दीयते, हिन्दूधर्मस्तथाऽस्माकं शासकैर्नैव रक्ष्यते परेषामेव दोषोऽस्ति, नास्माकं तु कदाचन'। दोषआरोपेण किंतु एव परेषु नहि नो गतिः । हस्ते शासनशक्तिस्तु परेषां परधर्मिणां, हिन्दूँस् तिरस्कृत्य, गता कस्मात्, इति विमृश्यतां। कारणे कारणं किन्नु ? ''निदानं स्यादिकारणं '' (अ०को०)। हिन्दूधर्मम् शासकस्तु यदि इच्छेद् अपि रक्षितुं, किंरूपं ननु तद्धर्मं स रक्षेद् ? इति कथ्यतां। शतशो हि अस्य रूपाणि विवदन्ते परस्परं, धर्मोऽद्य पूतिकूष्माण्डीकृतः स्वार्थपरैः जनैः । ''धर्मं एव हतो हन्ति, धर्मो रक्षति रक्षितः ''(म०) इति यन् मनुनाऽऽदिष्टं, तत्र एतत् तु विचार्यतां —अस्ति किं रूपं अहतं अद्य धर्मस्य हिन्दुषु ? (११०)। मुण्डे मुण्डे मतिर्भिन्ना, भिन्नो 'धर्मो' गृहे गृहे—इत्येव दृश्यते 'हिन्दू'-लोके, न तु एकधर्मता । किं शासक तस्य रूपं निर्णेष्यति अत्र, तात्त्विकं, एकं, अन्यानि सर्वाणि बलाच्च अपाकरिष्यति ? सर्वद्विजानां मान्यः किं भविष्यति एष निर्णयः ? सङ्घ शक्तिः सदा एवआसीत्, कलौ साऽस्ति विशेषतः, अवताराश्च येऽभूवन् , अतीतेषु युगेषु अपि, न असहायास्तु तेऽपि आसन् नास्ति हिंदुषु सङ्घता। ''अपि यत् सुकरं कर्म, तदपि एकेन दुष्करम्'' (म०) । सहा(ह अ)यनं विना किं स्याद् व्यवस्थितसमा(म अ)जता ? 'सम।जना अजन्ति अस्मिन्', समाजोऽत्र स उच्यते। 'सामाजिकः स विज्ञेयः, समाजं यस्तु रक्षति' ( सि० कौ० ), शब्द

व्युत्पत्तिर् एषा हि वैयाकरणसम्मता । मुख-बाहु उरु-पद् वद् ये सुसम्बद्धा परस्पर, स्वायम्भुवेन, तेऽधुना वै भिन्नहृद्यासु जातिषु, अस्पृश्यासु, विभिद्यन्ते, विद्विष्टासु, इतरेतरं । एवं विहतधर्माणां, ईर्ष्यालूनां परस्परं, असंहतानां, भिन्नानां, ग्लानिर्न स्यात् कथं भृशं ? अनायासेन, शीघ्रं चापि, एकैकं भज्यते तृणं, सदैवाऽऽस्ते, गुणीभूतं, महागजनिबन्धने । (१२०) । एतेन भिन्नत्वेन एव राजशक्तिः प्रह्लापिता । भारतीयास्तु राजानं, भिन्ना द्विष्टा परस्परं, न सम्यग् उपदिष्टाश्च श्रेष्ठैर् मन्त्रिपुरोहितैः, इत्थमेव प्रवर्तयन्ति, न पुनर्दीर्घदर्शिभिः, राष्ट्रीयता अजानन्ति, भृशं च अ-सम वेदिभिः, न सद्भिश्च सद्धर्मशीलतत्त्वेषु शिक्षितैः, शिक्षितैः प्रयुताऽसन्ति असज्ञा धान् विमोहकात् अन्योऽन्यं न सहा (इ अ) यन्ति (सह न भवन्ति), परस्परं असंहतैः, क्षुद्रस्वार्थेषु निमग्नैः, वर्णैर् अन्यैर् उपेक्षिताः, सुखेन ते (राजानः) व्यजीयन्त बाह्यैर् आक्रमकारिभिः । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्, बिभेति अल्पश्रुताद् वेदो मां अयं प्रतरिष्यति" ( म० भा० ) । इतिहासविमर्शेन, प्रश्नेऽस्मिन् समुपस्थिते, 'हिन्दूनां एव दोषोऽस्ति, नाऽन्येषाम्', इति सिध्यति । ये 'नीच'जातयोऽस्पृश्या कथ्यन्ते 'स्वोच्च'मानिभिः, तिरस्क्रियन्ते वचसा, क्रियया च, अल्पदर्शिभिः, ते एव प्रायशो यान्ति परधर्मांस्तु मानदान् । सङ्ख्या तु एतादृशैर् एव परधर्मेषु वर्धिता, प्रतिवर्षं च संकोचं आयाता सा च हिंदुषु । निर्विवाद इदं सर्वं भारत ऐतिह्य-वेदिनाम् (१३०) स्वयं प्रतीयते चापि मुस्लिमैः क्रिस्तनैः तथा । यत्र प्रतिशतं सङ्ख्या हिन्दूनाम् याऽभवत्, पुरा, केवलं पञ्चषष्टि सा शिष्टा इदानीं तु भारते, चत्वारिंशत् च पञ्चैव वंगदेशे तु साऽधुना, तथा पञ्चनदप्रान्ते किञ्चिद् एव ततोऽधिका । "पराभूविरे नूनं अतिमानेन तेऽसुराः, मूलं पराभवस्य एतद् योऽतिमानो ऽयमुच्यते" (शा०ब्रा०) । घोराणां अपराधानां हेतौ, कारासु पदिनं, अग्निदाः, गरदाः हत्याकृतः, प्रत्यक्षलुण्ठकाः, बलात् स्त्रीधर्षकाश्चाऽपि, मिथ्यालेखैः प्रतारिणः, प्रायशस्तु 'उच्चजातीया' एव सन्ति अपराधिनः । तथैव च उच्चमन्येषु चिरं अत्र महत्सु रिपु विनाऽपराधं, मिथ्याऽभियोगैः क्षुद्रतरैरपि, उत्कोचग्रहणार्थाय, वैरनिर्यातनाय वा, बहिष्क्रियन्ते जातिभ्यो, 'जातिमुख्यैर्' जना बहु, विवशाश्चान्यधर्मेषु विशन्त्येव दिने दिने, हिन्दुभ्यश्च भृशं क्रुद्धाः पीडयन्त्येव तान् सततं, सर्वप्रान्तेषु देशस्य कथां तु करुणां इमां, इतिहासः कथयति, श्रूयते बधिरैर्न च । (१४०) । तथा च योषितो बह्व्यः, बाल्यकाले विवाहिताः, बाल्ये च

विधवा जाता, दीनाश्रयवर्जिता, स्वकीयैर् एव दूष्यते, निष्कास्यते ततो गृहात्, अधे तमसि मज्जति, विह्वल विलपति च, निराश्रया अनाथास् तरा, जीवन्त्यो नरके गता, ततोऽन्यधर्मिभि प्राय प्रलोभ्यते, पतति च, धर्षयति च तद्वंशान्, स्वांश्च पूर्वान् शपत्यपि। "आश्रयते समीपस्थ राजानो वनिता लता" (हि०)। "यत्र नार्यस्तु पूज्यते, रमते तत्र देवता, यत्र एतास्तु न पूज्यते, सर्वास्तत्र अफला क्रिया, शोचति जामयो यत्र, विनश्यत्याशु तत् कुल, न शोचति तु यत्रैता, वर्धते तद् हि सर्वदा, जामयो यानि गेहानि शपति अप्रतिपूजिता, तानि कृत्याहतानीव विनश्यति समतत" (म०)। ईदृशा दाम्भिका क्रूरा नशिष्यति कथ नहि? सर्व प्रत्यक्षमेव एतद् हिन्दूना ह्रासकारण। मति पवित्रम्मन्याना अस्ति चैवाऽभिमानिनी, 'यथेष्ट भ्रश्यता भ्रष्टो, अस्पृश्या शिष्टा वय सदा, अपयात मल जातेर्, असस्पृष्टा वय ननु', (१५०), किंतु अत्र चित्त एतद् हि, 'मदीये प्रतिवेशिन गृहेऽग्निना, मत् शमने नाऽऽज्ञु कुर्यां सहायता यदि, उपेक्षक एव स्यां, मद् गेह चाऽऽगमिष्यति स एवाऽग्नि क्रमान् नून, न च कश्चन दास्यति तदा मह्य च साहाय्य'। स्वार्थान्धस्तु न पश्यति, मोहेनाऽऽवृतबुद्धिश्च तर्कयति आयतिं नहि। "आत्मान सतत रक्षेद् दारैरपि धनैरपि", इति कापुरुषी गाथा तादृशी स्थापिता स्मृतौ। क्षुद्रस्वार्थाऽभिभूतेन केनचित् मूढबुद्धिना, दिदृक्षुणा स्वयम् आत्मान्, क्लीवेन, मृत्युभीरुणा, श्लोकाऽर्ध एतत् प्रक्षिप्त, इति मन्यामहे वय। प्रजारक्षा परस्य एतत् न अनुरूप मनोर्वच, जीवन्मृत हि आह, नृप आश्रित अरक्षिण, मनु, यचो ह्येतत् महार्थ च, "देहत्यागो अनुपस्कृत ब्राह्मणार्थेऽस्त्र्यवपन्नो च, बाह्याना (अपि) सिद्धिकारण," (म०), स कथ कथयेद् ईदृग् वच कापुरुषोचित? । राम खलु महाराज, 'प्रतिमान महीभुजा", अग्रणी सर्वभूपाना, "मर्यादापुरुष" स्वय (वा० रा०), (१७०), लोकाना धर्मशिक्षार्थं स्वोदाससप्रचरणेन च, देवो मनुकुले ततो, भूमौ अवततार च, "आदर्शमनुज" सोऽय सीताऽर्थे रावणं हि अहन्, स-महा राक्षस कुल, कर्षन् भीषणवाहिनीं 'वानराणा' असत्याना, पृथिवीं अपलोकयन्, लका स्वर्णमयीं कुर्वन् समग्रा अधरोत्तराम्। प्रख्यापयति च विस्पष्ट, क्लिस पद्य, महामुनि, बकासुरवधआख्याने, पूर्वोक्त, भारते, यथा—"न [illegible] भार्यां त्यजेत् प्राज्ञ, पुत्रान् चापि, कदाचन, विशेषत स्त्रिय रक्षेत् पुरुषो बुद्धिमान् इह, त्यक्तया तु, पुरुषो, जीवन्, अहात्ययान् इमान्, सदा न वेत्ति धर्म काम चापि

अर्थं मोक्षं च सरवत "(म० भा०)।"एतावान् अव्ययो धर्मं, नित्य मन्दिर अनुष्ठित, परलोक शोक हर्षाभ्या आत्मा शोचति हृष्यति " ( भा० ) , पशवोऽपि हि सौहार्दं, आत्मीयेषु अनुरज्यन, भजन्ते, वर्वराश्चाऽपि स्वकेषु समवेदिता, परस्पर च साहाय्य कुर्वन्ति आपत्सु यवन , हिन्दवो भारतीयास् तु स्वार्थान्धा न तथा, पुन । धर्माणा प्रदानं एव, शास्त्रार्थाना विवर्तनं , मिथ्यागर्वं , अमस्वार्थ , क्रौर्य ,भीरुतया तथा,(१८०),पीडनं अबलानां च,हिंदवो निरय गता । क्षत्रियाद् चापि ये शूरा अभूवन् मध्यमे युगे, सुन्दोपसुन्दन्यायेन ते सर्व विलय गता , यवनैश्चापि व्यजीयन्त, यथोक्त पूर्वमेव हि । प्रबोधचन्द्रोदयनाटके च, सुचित्रित रूप इद विचित्र, पाषण्डिना उद्धतदाभिमानो 'मोह' प्रधाना खलु दृश्यामिश्रे । "ज्वलन्निवाऽहङ्कारोऽय प्रसन्निव जगत्त्रयोम् , भर्त्संयन्निव चराचरं , प्रभया उपहसन्निव,(पितामहस्य दम्भस्यापि अहङ्कारो विकत्थते),'नाऽस्माक जननी तथा उज्ज्वल कुला,सत्प्रोत्रियाणा पुनर् व्यूढा काचन कन्यका खलु मया तेनाऽस्मि ताताऽधिक , अस्मच्छ्यालक भागिनेय दुहिता मिथ्याऽभिशस्ता यत , तत्संपर्कवशान् मया स्व गृहिणी प्रेयसी अपि प्रोज्झिता' । (अहो धैर्यं, अहो प्रज्ञा, अपि अहो धार्मिष्ट्य एव च,अहोऽवलग्नं ते शौर्यं,अहङ्कार !,जित त्वया ! )। मृद्बिन्दुलाञ्छित-ललाट भुज उदर उर कण्ठ ओष्ठ पृष्ठ-चुबुक-ऊरु-कपोल-जानु ,चूडाग्र कर्ण-कटि पाणि-विराजमान-दर्भांकुर ,स्फुरति मूर्त इव एष दम्भ । (लोभस्य पुत्रो दम्भोऽहङ्कारात् अन्यति कथ्यत) 'सदनम् उपगतोऽह पूर्वं अम्भोजयोने ,सपदि मुनिभिर् उच्चैर् आसनेषु उज्झितेषु, सशपथम् अनुनीय, ब्रह्मणा, गोमयाऽम्भ परिमृजित निज-ऊरौ आशु संवेशितो ऽस्मि । विद्याप्रबोधोदयजन्मभूमि वाराणसी ब्रह्मपुरी पुराऽसीत् , मोहस्तदुच्छेदविधि चिकीर्षुर् निवस्तुमत्र इच्छति नित्यमेव । (१९०) वशीकृता च भूयिष्ठा मया वाराणसी तत । वेश्यावेश्मसु सीधुगन्ध-ललना वक्त्रआसवआमोदितैर् नीत्वा निर्भर्-मन्मथोत्सव रसैर् उन्निद्रचन्द्रा क्षपा सर्वज्ञा इति, दीक्षिता इति, चिराव् आत्ताग्निहोत्रा इति, ब्रह्मज्ञा इति, तापसा इति, दिवा धूर्तैर् जगद् वंच्यते । गङ्गातीर-तरंग शीतलशिला-विन्यस्त-भास्वद्-बृसी सविष्ट , कुशमुष्टि मण्डित-महा दण्डा , करन्योज्ज्वल ,पर्याय ग्रथित-ऽक्षसूत्र वलय प्रत्येक-बीजग्रह व्यग्र अग्रा-अगुल यो हरति धनिना वित्ताब्धि,अहो,दाम्भिका ' ."(प्र च )। उत्तम नाटक ह्येतद् सद्धि धैर् बहुमानित, अन्वेषिभिर् हासहेतो हिन्दूनां, परिशील्यताम् । धर्मधान्या

यदा कामयां एव मोहो विराजते, प्रभुर्भूत्वा, दम्भकामक्रोधलोभादिभिर् वृत, अन्यासु अपि पुरीषु एव, तदा धर्माऽऽहत कथम् ?॥"धर्म एव हतो हति, धर्मो

*धूर्तेर्गलेयथाऽन्ये, युक्तिना वाममार्गिय, आडम्बरेण महता, व्याख्याति, प्रति रहस्यवत्, कौला, पञ्च 'मकाराणि,शब्दैर् अध्यात्मवशामि ।' परद्रव्येषु यो हि अन्ध, परस्त्रीषु नपुंसक, परापवादे यो मूक, सर्वदा विजितेन्द्रिय, तस्यैव ब्राह्मणस्य अत्र, वामे, स्याद् अधिकारिता । अकुल शिव इत्युक्त, कुल शक्ति प्रकीर्तिता, कुल अकुल अनुसन्धानात् निपुणा कौलिका, प्रिये !। मद्य, मांस च, मीन च, मुद्रा, मैथुन एव च, म कार पञ्चक प्राहु योगिना मुक्तिसाधनं । व्योम-पंकज निस्यन्द-सुधा पान रतो नर, मद्यपायी सम प्रोक्त, इतरे मद्यपायिन, सुषुम्णया मिलनाद् इन्दा स्रवेत् यत् पराऽमृतं, पिबेद् योगी, महेशानि !, महापान इदं स्मृत, एव चन्द्रसुधारस पानऽर्थैर् न अभिभूयते जिह्वया गलसंयोगात् पिबेत् तद् अमृतं सदा, योगिभि पीयते तत् तु न मद्य गौडपैष्टिक । पुण्य-अपुण्य पशु हत्वा, ज्ञानखड्गेन, योगवित्, परे लय नयत् चित्त, मांसाशी स निगद्यते मा शब्दाद् रसना ज्ञेया,तदंशान् रसना प्रियान्, (१०),सदा यो भक्षयेद्, देवि !, स एव मांस साधक, मां सनोति हि यत् कर्म तत् मांस परिकीर्तित, न च कायप्रतीक तु योगिभिर् मांस उच्यते, देहबन्ध-कर मूल अज्ञान बन्धकारक, अज्ञानभक्षण यत् तु तद् हि मांसस्य भक्षण । मनसा च इन्द्रियग्राम संयोज्य, आत्मनि, योगवित्, मत्स्याशी ₹ भवेद् देवि !, ज्ञेया धीवरवृत्तय, अहकारो, दम्भो, मद-पिशुनता-मत्सर द्विष, षट् एतान् मत्स्यान् वै विषयहरजालेन विघृतान्, पचन् सद्विद्याऽग्नौ, नियमितकृति, धीवरकृति, सदा खादत् सर्वान्, न च जलचराणा तु पिशितं, गंगायमुनयोर् मध्ये, मत्स्यौ द्वौ चरत सदा, तौ मत्स्यौ भक्षयेद् यस्तु स भवेन् मत्स्यसाधक । सहस्रारे महापद्मे, कर्णिकामुद्रित चरत्, आत्मा तत्रैव, देवेशि !, केवल पारदोपम, सूर्यकोटिप्रती काश, चन्द्रकोटिसुशीतल, अतीव कमनीयश्च महाकुण्डलिनीयुत, यस्य ज्ञानोदयस् तत्र, मुद्रासाधक उच्यते, आत्मनो जायते मोद, सा मुद्रा परिकीर्तिता, सा ज्ञेया धारणा ध्यान समाधि आख्यास् तु मोचदा । अप्रबुद्धा प्रभो शक्ति, प्रबुद्धा कौलिकस्य च, (२०) शक्तिं ता सेवयेद् यस्तु स भवत् रति सेवक, इडा पिंगलयो प्राणान् सुषुम्णाया प्रवर्तयेत् सुषुम्णा, शक्तिर् उद्दिष्टा, जीवोऽय तु पर शिव, तयोस्तु सगमो, देवा !, सुरत नाम कीर्तित वीर्यपातस्य समये सुषुम्णासमारुते,उत्पद्यते तु यत्

रक्षति रक्षित" (म०), अतो, हतोऽय धर्मस्तु हिन्दूना मर्म कृन्तति। अधुना येऽवशिष्यते भूपा 'क्षत्रिय'-मानिन, स्वप्रजापीडने शूराः प्रायस् ते, न तु रक्षणे। 'ब्राह्मणा' किल येऽभूवन्, ज्ञानसंग्राहिणोऽपि ते दुर्विद्याऽभ्यासिनो जाता, सत्तपोरहितास् तथा असच्छास्त्रेषु मग्नाश्च, न प्रजाहितचिन्तका।"ब्राह्मण समदृग् शान्तो, दीनाना समुपेक्षक, स्रवते ब्रह्म तस्याऽपि, भिन्नभाण्डात् पयो यथा" (मा०)। (२००)। मलन्दनअदयो वैश्या. वेदमन्त्रकृतो ऽभवन्, "मलन्दनश्च, वासाश्व, साकीलश्च, इति ते त्रय, एते मन्त्रकृतो ज्ञेया वैश्याना प्रवरा सदा" (मत्स्यपु०)। सत्कारशून्या, तद्वंश्या प्रायश सति साम्प्रत, न च ते सात्त्विकं दान ददते, ऽपि तु राजस, विवेकरहित, प्रायो हि अपात्रेभ्यो ऽप्यपार्थक, तथैव अनृतभूयिष्ठ वाणिज्य धूतवत् कृत। ममाधेद ननु वैश्यस्य चरित लक्षशो द्विजे

---

सौख्य, शतकोटिगुणा तु तत, एतद् एव रत प्रोक्त, अन्यत् स्यात् रासभे रत, कुल कुण्डलिनी शक्ति, देहिनी, देहधारिणी, तया शिवस्य सयोग मैथुनं परिकीर्तित, सह स्रारोपरि बिन्दौ कुण्डल्या मेलनं, शिवे!, मैथुन शयनं दिव्य यतीनां परिकीर्तित या नाडी सूक्ष्मरूपा, परमपदगता, सेवनी, या सुषुम्ना, सा कान्ताऽलिंगन अर्हा, न मनुज रमणी सुन्दरी वारयोषित्; कुर्याच् चन्द्राऽर्कयोगे युग पवन गते, मैथुन, नैव योनौ, योगीन्द्रो विश्ववन्द्य, सुखमयभवने, त्वां परिष्वज्य नित्य" (मेरुतन्त्र, कुलार्णवतन्त्र, गुप्तसाधनतन्त्र, स्वच्छन्दतन्त्रादिषु)। इत्यादिशब्दे व्याख्यांति कौलास्ते वाममार्गिण, अध्यात्मशास्त्रसिद्धान्तै योगवेदान्तसम्मतै तन्त्रनामकग्रन्थेषु छादयन्त पर छल, स्वकीयं व्यभिचारं च, मद्य-मांस निषेवया, घोरऽाचाररता मूरा, बिडालवकवृत्तय। 'क्वचित् शाक्ता, क्वचित् शैवा, सभामध्ये च वैष्णवा, नानारूपधरा कौला विच रति महीतले"। योग वेदान्त शास्त्रेषु द्योतमानेषु सूर्यवत्, (३०), निर्विकल्पानां विरक्तानां शमिनां शांतिं इच्छतां, नितान्तऋजुभि शब्दै अध्यात्माऽर्थोपदेष्टृषु, किमर्थम् हि ते एवार्था छाद्यते मांस-मैथुनै मद्यैर् मत्स्यैश्च मुद्राभि बीभत्सैर् भीषणैर् मूरा, मूढान् मूढतरान् कृत्वा नरकेषु एव पातकै? 'गूढोयं अतिगोप्योय रहस्योयं महान्' इति सर्वमेतत्तु धूर्तानां वचनैव विडम्बना। दृष्टा हि शाठ्य सर्वे पञ्चतन्त्रे तु चित्रिता, वृद्धव्याघ्रस्य कथया स्फुटं धर्मोपदेशिन, कुलीरकाख्य आख्यानेनापि वृद्धबकस्य च, मण्डूक गंगदत्तस्य सर्पाणां स्थविरस्य च। किमर्थं सात्त्विकै शब्दै सात्त्विकार्थो न कथ्यते? ।३५

पठ्यते, नवरात्रेषु दुर्गायाः, प्रतिवत्सरं,'चिद्‌यज्ञ'-इति यं देवी स्वयं हि समबोधयत्, यस्मै शुद्ध च यस् तस्याः ज्ञानं एव हि केवलं—प्रायशस् तादृशाः वैश्याः न भवंति अद्य भारते। "सर्वेषामेव भावानां सामान्यं वृद्धिकारणं ; ह्रासहेतुर् विशेषश्च ; प्रवृत्तिर् उभयस्य तु; सामान्यं एकत्वकरं, विशेषस्तु पृथक्त्वकृत्" (च०)। विशेषां 'जाति' एव जातीनां हिन्दूनां ह्रासकारणं, 'सामान्यं' च तथा एतेषां वृद्धिहेतुर्भविष्यति। अतो हि वेदैर् आज्ञप्तं, "समानी वो प्रपा भवेत्"। एकस्मात् पूर्वपुरुषात् 'जाताः' एक-'जाति'ताः; ईदृशाः सर्वदेशेषु शतशः संति जातयः; (२१०); 'सामान्येन', 'विशेषाणां' तासां, संग्रहणाय वै, "चातुर्वर्ण्यं मया सृष्टं गुण-कर्म विभागशः, कर्माणि प्रविभक्तानि स्वभावप्रभवैर् गुणैः" (गी०)। 'कर्मणां प्रविभागेन'—प्रोक्तं, न खलु 'जन्मना'। "निष्कारणस्तु नैवास्ति धर्मः सूक्ष्मोऽपि, जाजले!, हेतुभिर् धर्मं अन्विच्छेत्, न लोकं विरसं चरेत्", "जीवो नित्यो हेतुरस्य त्वनित्यः", (म० भा०)। सुखदुःखे सुखयहेतू, प्रवर्तन-निवर्तनात्। "परित्यजेद् अर्थकामौ यौ स्यातां धर्मवर्जितौ, धर्मं चापि असुखोदर्कं लोकविद्विष्टम् एव च" (म०)। अध्यात्मशास्त्रं एव अत्र, स्वरूपं सुखदुःखयोः, धार्मिकं मार्मिकं चापि तात्त्विकं खलु, वेदयेत्। जन्मवर्णात्मको 'धर्मो', ('धर्मो'ऽयं चेत् पुराऽभवत्, कस्मिंश्चिद् अपि काले), ऽसौ असुखोदर्कः एव हि, साम्प्रतं, बहुधा। तस्मात् परित्यक्तो ऽधुना ऽस्तु अयं। जन्मनैव हि वर्णत्वे हेतुर् आप्तो न लभ्यते ; न प्रत्यक्षं, नाऽनुमानं, न शास्त्रं त्रिविधऽगमं। "प्रत्यक्षं च अनुमानं च, शास्त्रं च विविधऽगमं, त्रयं सुविदितं कार्यं, धर्मशुद्धिं अभीप्सता" (म०)। (२२०)। कर्मणैव तु वर्णत्वे प्रमाणं लभ्यते त्रिधा। न मालिन्याद् ऋते हेतुर् अस्पृश्यत्वेऽस्ति किंचन; अस्ति चेत्, स तु दम्भोऽस्ति, मिथ्याऽहंकार एव च। स्पृश्याऽस्पृश्यविवेके तु, जातिनाम न कारणं, किंतु अवस्था मनुष्याणां, निर्मला समला ऽथवा। सत्यपूतं मनो येषां, देहः स्नानादि-पावितः, संचारिरोग-अनाक्रान्तः, स्पृश्याः एव हि ते सदा। अवतारं तं दशमं मन्यंते ऋषयोऽपि यं, बुधाः पुराणकर्त्तारः, सर्वे ऽद्यापि च हिन्दवः, बुद्धो ऽपि भगवान् अर्थं इमं एवऽदिशद् विभु:, वर्णाश्रमव्यवस्थां तु भूषयन्, (न तु दूषयन्), शोधयन्, 'कर्मणा एव इति', निराकुर्वंश्च 'जन्मना'। पश्चात्, सहस्रवर्षेषु गतेषु तदनंतरं, प्रायो जातेषु बौद्धेषु वाममतऽनुसारिषु, भ्रष्टेषु सत्पथाद् भूयो, व्यवस्था तु पुनः कृता, कुमारिलाऽदिभिस् तत्र; तत्कालीनैश्च हेतुभिः, 'जन्मना एव इति'

सिद्धान्तस् तदा तै प्रबलीकृत ।८। "कालचक्रे घहत्यस्मिन् घोरे सततयायिनि"

*संघर्षस् तु आदितो हि एव अभवद् वैदिक बुद्धयो , यथा इदम्परस्त्वर्या कृष्णेन एतद्विरोधिना, पतिताना सदा यद्वद् उद्धारक सुधारकै । बुद्धेन संस्कृतो धर्म प्राभूत् काल तु कचन, शोधिता वर्णमर्यादा प्रससृरापि भारते । अस्थिरत्वात्तु प्रकृते , अस्या द्वद्वितया तया, दोषायन्ते गुणाश्चापि, कालेन 'अति-अतता' गता , यथा दोषा गुणायन्ते, तेनैव ननु हेतुना । 'अतिना' एव अहिंसाया , 'दण्डात्' चापि अविवेचनात् , मन्दा , आक्रमकारिभ्यो रक्षाया,अभवन् नृपा ,बुद्धतोऽर्वाक् चतुर्थ्यां तु शत्या, ईसात एव च पूर्वद्विशत्या, "यवन साकेत रुरुधे" मृश, महाभाष्येऽपि लिखित तत् पतञ्जलिना स्वय । यवनेश स तु प्रायो 'मीनाडर्' इति विश्रुत , नागसेनेन, बौद्धाना आचार्येण, समागम यस्याऽभूद् अपि, पश्चात्तु, प्रश्नोत्तरकथा तथा, 'मिलिन्द पञ्हो' नाम्नि एषा या ग्रन्थे दृश्यतेऽधुना, साकेते ( ऽर्थाद् अयोध्यायां ) तस्मिन् कालेऽभवन् नृप बृहद्रथ ,पुराणोक्त ,सूर्यवंशान्तिमो हि य , बौद्धग्रन्थेषु, नाम्ना सोऽस्मिन् उक्तो 'दशरथे' त्यपि । सेनापति पुष्यमित्र तस्याऽऽसीद्, ब्राह्मणोऽथ स , विश्वासघातेन अहन् स स्वामिन स्व बृहद्रथ सिंहासन चापि आरोहत् स्वय ऐश्वर्येतर्षुल । न अस्मात् पूर्वं कोऽपि विप्र राजाऽभूद् भारते स्वयं,वदति इति इतिहासज्ञा केचित्,सशरते ऽपरे । अग्निमित्रोऽस्य पुत्रोऽभूत् , कालिदासो हि, नायक, मालविकाऽग्निमित्रस्य नाटकस्य, अकरोत् तु य । न वशो ववृधे तु एषा, 'शुंग'-इति विदितो हि य अस्य पुत्रोऽथवा पौत्र , देवभूतिरिति ईरित , काण्वेन वासुदेवेन हतो ब्राह्मणमन्त्रिणा । वासुदेवोऽपि राज्यस्य मुकुट स्वय अग्रहीत् । तस्यापि वशो हि अचिरात् जगाम क्षय तु, दुष्कृतै । आन्ध्र क्षत्रिय राजान तं समूल अनाशयन् । तेषा वश , शताब्दीना चतुष्क सार्धमेव च, निगद्मी राजपङ्क्तिभिर् धुर राज्यस्य च अधरत् । पुष्यमित्रोऽपि संरब्धो, द्रोहाद्धै साम्प्रदायिकाद् अहिंसामत्तविद्विषाद् , यज्ञास्तु पशुमारकान् आरेभे, लिखित चास्ति तत् पतञ्जलिना पुन ,"पुष्यमित्र याजयाम " किंतु तस्य उद्यमो हि अय नाफलत् , भारते, यस्मात् ,पशुयज्ञविरोधिनी बुद्धिर् बौद्धोपदेशैस्तु सुप्रतिष्ठितता गता । बौद्धाना वैदिकाना च पण्डिताना परस्पर, संघर्षो मा विरोधस्तु भूयो भूयो व्यवर्धत काले, प्रान्ते तथा, एकस्मिन्, वैदिका प्राभवन् , पुन , प्रान्तेऽन्यस्मिन् तथा काले बौद्धास्तु बलिनोऽभवन् , राजानोऽपि व्यरुध्यन्त, पक्षयोर् अनुयायिन । समाजस्य समग्रस्य दुर्बलत्व अभून् तत , उत्कर्षं किंतु शास्त्राणा, प्रतिरस्करण तथा, पक्षयोर्

(म०), दुःखस्योत्पादको जात सिद्धांत स नु(साम्प्रत,अन्येष कारणानां तु मध्याना तत्र मिश्रणात् ।(२३०) । 'वर्ण-संकर' रोधार्थं सिद्धान्तो योऽनुमोदित , "कैकवरो "कैकस्मर्तशैनाप्य वृद्धये;एकैवचूत्या संतुष्ट्यै,मयपस्याऽप्यनुत्तये तथा क्षणिककामेथ मूढाना, अविवेकिनां, मङ्गया ऽसमदीशाना स्वयम्बस्य निवृत्तये सदर्यंहानाज् जातोऽसौ स्वय संकरकारक । "सवे सर्वासु अपत्यानि वर्णा सजनयन्ति हि, वृत कृत्वा सर्ववर्णा यदि वृत्तं न पश्यति"(म०भा०), "व्यभिचारेण वर्णाना,अवेद्या वेदनेन च, स्वकर्मणा स्यागेन, जायते वर्णसंकरा " (म०), व्यभिचारा बहु विधा", तथा वै वृत्तिसंकरा । सर्वे चाप्यनुजीवन्ति इदानीं सर्वास्तु जीविका । जात्यु पो पो प जातीना, अस्पृश्याना परस्परं,वर्णो यो यो-प वर्णाना, मिथोऽभीजि अधिना हिना, अत्ये मनुष्यगणने दशाब्दे, दासके कृते, प्रायदास् त्रिसहस्राणि सख्यया गणितानि वै , हिन्दूनामकजीवाना, मिथाना सर्वथा मिथ । परस्पर प्रभिन्नेर्है, तिरस्कारैश्च, मत्सरैर, यत क्षीणा , पवैर नित्य धर्षिता हिन्दवस् तत । अत पुन 'कर्मवर्ण सिद्धान्तोद्ग्रहनस्य वै (२४०) आवश्यक च सम्प्रास, समाजस्य विशुद्धये, ' स्वकर्मणा तु त्यागेन', "यदि वृत्त न पश्यति"—कृत्याना कर्मणा त्यागात् वर्णाना संकरो, ध्रुव, संकरे सर्ववर्णानां प्रधान कारण हि तत् । व्यभिचार ,स्वदा रेषु कृतस्य परित्यजन, अकृतस्याऽपि करणं परस्त्रीगमनस्य वै, अवेद्याया अग म्याया स्त्रिय वेदन गम च, कर्माणि, जीविकार्थं तु निर्दिष्टानि, स्वभावत , तेषा त्यागो मद एव वर्णसंकरकारक इति पूर्वोक्तशब्दार्थान् आर्पान् सम्यग् विचार्य च, इहाऽमुत्रसुखस्याऽपि, पराऽनंदस्य च प्राप्तये, 'वृत्त', 'वृत्तिर्', 'जीविका'च,'स्व धर्म ' 'कर्म' चैव हि, पर्यायस्तु, शब्दानां अर्थ प्रायो ऽत्र शिष्यते । (२४६) ।

---

उभयोश्चाभून्, गुणा दोषाश्च जज्ञिरे । आकुमारिलभट्टस्य काल आसीद् इय दशा । एतस्मिन्नन्तरे विप्रपंडितैर्दर्शनानि अपि, पुराणानि इतिहासाश्च, सर्व एव नवीकृता , उत्तमा अधमाश्चापि वृथा कर्मोद्योपेक्षया । बौद्धैश्च लिखिता य या उत्तमा अधमा अपि । दर्शने, व्यवहारे च, सामीप्य गते तयो , आभ्यन्तरेऽभिप्राये च, कार्ये सामाजिकेऽपि च, बहिर्यद्यपि अत्युच्च शब्दाटोपैर् निरर्थकै । यत्नै कुमारिला दीनां, राजा तदनुयायिना पर्यन्तेथ, प्रजा सर्वा 'बौद्ध' नाम जहु अभावात्, जन्मवर्ण व्यवस्था चापि अङ्गीचक्रुर् दृढीकृतां । (२०) ।

रोगस्य मूलकारणम् ।

मूलं हि कारणं रोगे 'जन्मवर्ण'दुराग्रहः,जनितो हि उच्चजातीनां स्वार्थैर् दर्पैः कुबुद्धिभिः । दुराग्रहेणाऽनेन एव प्रजायन्ते नवा नवाः 'अन्तरालास', तथा एतेषां सख्या नित्यं विवर्धते, (यथा प्रचलिते पाठे दृश्यते हि मनुस्मृते , नाऽयं पाठो मौलिकः स्याद् इत्यग्रे दर्शयिष्यते।) यद् ( = यत )रीतिर् उच्चमन्यानां अन्यैश्चाऽनुविधीयते, परस्परविवाहादि भोजनादि विवर्जने, हिन्दूनां जातयो जाताः त्रिसहस्र ततोऽधुना, अन्योऽन्यं प्रति चास्पृश्याः, विद्विषन्ते परस्परं । (२५९) ।

हेतुविषये भ्रान्तयः ।

एतत् च चिन्त्यं—किं सर्वे शासका सन्ति अहिन्दवः ? भारतेऽद्यापि सन्ति एव बहवो 'हिन्दु'नामका राजानः, तत्प्रजाश्चापि स्वल्पाः, सर्वोऽपि 'हिन्दवः' । ना स्त्येव तादृशं पापं, अपि घोरतमं किल, यद् एभिः क्रियते नैव बहुभी 'राज' नामकै, तन्निरैश्चापि समर्थ्यते स्वकीयैस् तैः पुरोहितैः, अनुक्रियतेऽपि तथा, "यथा राजा तथा प्रजा" । यद्यपि स्पष्टं आदिष्टं मनुना, भार्गवेण च—"क्षत्रस्य अतिप्रवृद्धस्य, ब्राह्मणान् प्रति, सर्वशः, ब्रह्मैव संनियन्तृ स्यात्, क्षत्रं हि ब्रह्मसंभवम्"(म०) । "जितेन्द्रियो, जितक्रोधो, लोभमोहविवर्जितः, षडङ्गवित्, साङ्गधनुर् वेदवित्, च अर्थं धर्मं वित्, यत्कोपभीत्या राजापि धर्मनीतिरतो भवेत्, नीति शस्त्र अस्त्र व्यूह आदि-कुशलः स्यात् पुरोहितः, स एवआचार्यः पुरोधाः य शापा ऽनुग्रहयोः क्षमः । ब्राह्मणं तु स्वधर्मस्थं दृष्ट्वा, बिभ्यति चेतरे, नान्यथा, क्षत्रियाद्या तु, तस्माद् विप्रस्तपश्चरेत्। षड्भागभृत्या दासत्वे प्रजाभिस्तु नृपः कृतः "(शु०नी०)। (२६०) । व्यासो भारतकारश्च प्रवीति एवं महामुनिः—"प्रजानां तु नृपः स्वामी, राज्ञः स्वामी पुरोहितः" (म०भा०शान्ति०) । विरला 'ब्राह्मणाः' किंतु बहवो 'ब्राह्मणब्रुवाः' । "तपो विद्या च विप्रस्य निःश्रेयसकरं परं, तपसा किल्बिषं हन्ति, विद्ययाऽमृतं अश्नुते" (म०) । तपोविद्याविहीनो यो, नासौ विप्रः कदाचन; तपश्च, सात्त्विकं यत्स्यात्, विद्या, सात्त्विकबुद्धिश्च, कृष्णेन लक्षणं प्रोक्तं गीतायां चैतयोर् द्वयोः । "देव द्विज-गुरु प्राज्ञ पूजनं, शौचं, आर्जवं, ब्रह्मचर्यं, अहिंसा च, शारीरं तप उच्यते, अनुद्वेगकरं वाक्यं, सत्यं प्रियं हितं च यत्, स्वाध्यायाभ्यसनं चैव, वाङ्मयं तप उच्यते, मनःप्रसादः, सौम्यत्वं, मौनं, आत्मविनिग्रहः, भावसंशुद्धिः, इति एतत् तपो मानसं उच्यते । श्रद्धया परया तप्तं तपस् तत् त्रिविधं,

नरैर् अफलाऽकाङ्क्षिभिर् युक्तै सात्त्विकं तप उच्यते, सत्कार-मान पूजार्थं तपो, दम्भेन चैव यत्, क्रियते, तद् इह प्रोक्त, राजस, चलं, अध्रुव, मूढग्राहेण आत्मनो यत् पीडया क्रियते तप, परस्य उत्सादनार्थं वा तत् तामस उदाहृत। (२७०)। प्रवृत्तिं च निवृत्तिं च, कार्याऽकार्ये, भयाभये, बन्ध मोक्षं च या वेत्ति, बुद्धि सा, पार्थ!, सात्त्विकी, यया धर्मं अधर्मं च, कार्यं च अकार्यं एव च, अयथावत् प्रजानाति, बुद्धि सा, पार्थ!, राजसी, अधर्मं धर्मं इति या मन्यते, तमसा आवृता, सर्वार्थान् विपरीतांश्च, बुद्धि सा, पार्थ!, तामसी" (गी०)। वर्धनैर् नखकेशाना, भस्मपुण्ड्रादिधारणै, मालाभिर्विविधाभिश्च, वेषैश्चाऽपि विलक्षणै, नग्नत्वैर्, ऊर्ध्वबाहुत्वैर्, अध शीर्षैश्च लम्बनै, विक्षिप्तचर्याऽऽचरणै, सत्तपो नहि सिध्यति। नैवाऽपि केवलन्याय व्याकृति आदौ परिश्रमै, सत्सिद्धान्तोच्चारैश्च, सद्विद्या चापि सिध्यति। सद्विद्याया अभावाच्च, तथा सत्तपसोऽपि च, विरोधे दुष्टराजाना, स्वयं भ्रष्टा, कथं क्षमा? केचिद् एव अवशिष्यन्ते ये हि 'राजर्षि' वन् नृपा, ब्राह्मणा 'ऋषिकल्पा'श्चाप्यत्र स्वल्पतरास् तथा। न अनृषी राज यन्ता स्यात्। कवयो, राजपण्डिता, राज्ञा प्रशस्तिकारा हि, प्रायशो दुष्कृतां अपि, स्वेषा राज्ञा लम्पटस्य हिंसकस्य प्रशंसका, लुण्ठन परराष्ट्राणा, पुरीणा ध्वंसन तथा, (२८०), रोदन परनारीणा, सुरते च पराक्रम, पशूनामिव हिंसाणा, स्तुवन्ति खलु ते मुदा, केवल चाटुकारास्ते, न वक्तार प्रजाहिता। 'स्व हिताय पुरो अग्रे यो जनै प्रतिनिधीयते, अग्र सद्धर्मकार्येषु', स एव हि 'पुरोहित'। "कृत, त्रेतायुग चैव, द्वापर, कलिरेव च, राज्ञो वृत्तानि सर्वाणि, राजा हि युग उच्यते। कलि प्रसुप्तो भवति, स जाग्रद् द्वापरं युग, कर्मसु अभ्युद्यतस् त्रेता, विचरंस्तु कृत युग। अष्टापाद्य तु शूद्रस्य स्तेये भवति किल्बिष, षोडशैव तु वैश्यस्य, द्वात्रिंशत् क्षत्रियस्य च, ब्राह्मणस्य चतु षष्टि, पूर्णं वा अपि शत भवेत्, द्विगुणा वा चतु षष्टि, तद्दोषगुणविद् हि स, कार्षापण भवेद् दण्ड्यो यत्रान्य प्राकृतो जन, तत्र राजा भवेद् दण्ड्य सहस्र, इति धारणा" (म०)। राजानश्च, 'न्यायाधीशा'श्च, 'पुलिसादि' अधिकारिण, दण्डशक्तिधरा, सर्व पापिन प्रायशोऽधुना, केचन त्ववशिष्यन्ते ये प्रजाहितचिंतका। "राज्ञो हि रक्षाऽधिकृता, परस्व आदायिन, शठा, (२९०)। भृत्या भवति प्रायेण, तेभ्यो रक्षेद् इमा प्रजा"(म०), तेषां सहायकाश्चापि पापकार्येषु, सर्वदा, धर्मध्वजाश्च दृश्यते, प्रजासु प्रतारका

अपि । ईसाऽष्टादशशता तु, 'ठग' नामकदस्यव, 'फाँसीगारा' च ये ख्याता, बभूवुर् भारते पुरा, अमीर् अली इति नामा एक, 'ठग' एकदलनायक, आंग्ल-सैन्यैर् गृहीतश्च, काराअवासे निवेशित, मेडोज् टेलर नामान, सेनाराडस्य नायकं, स्वय 'फाँसी'तले प्राप्त, म्लान, पापैश्च तापित, नरकस्य मुख पश्यन्, दुरित चरित स्वक प्रकटयद्, विस्तरश, सर्वं घोर पापमय भृशं, विश्वासघातान् कृत्वाश्च पान्थाना, लुठन तथा, एतच् चाकथयद् वृत्त राज्ञा पैशाचिक तथा—"इमे इमे प्रजा 'पाला' न 'पालाप' ठग पालका, स्वे स्वे राज्ये निवासिभ्यश् ठगेभ्य, बुद्धिपूर्व, मुपिताना धनाना तु, तैरेव उपायनी-कृत, चतुर्थभाग गृह्णति विधिवत् धरयन् मुदा, प्रोत्साहयति च ठगान्, सर्वथा दस्युकर्मणे"। ईदृग्‌रूपाणा दशाय नरक को हि भ्रश भवेत्? यथा 'ब्रह्म', यथा 'क्षत्र', तथैव विट्‌स 'विश'। विक्रेता हि विशा 'वार्त्ता', कृष्यापारभूयसी, (३००), विक्रीयते हि अन्यनाम्ना द्रव्य यत्, तु अन्यद् एव तत्।, विंशशत्या द्वितीयार्धे विक्रमस्य, अभवत् खलु कलिकाता नगर्या हि, जने कोलाहलो महान्, यत् नय एक, केषाचित् छलिना व्यवहारिणा, छद्म धर्मिष्ठरूपाणा, विक्रीणाति पसा, मधु, दाना ना ज्वलमानाना, पक्ष्मूना च नृणा अपि, हुगली-नद्या विनिष्कृष्य अधिष्ठिताना जले तथा, घृत नाम्ना, घृतस्यापि मिश्रिता अल्पमात्रया, स सधाऽश्रितविप्राश् च केचित् तन्मर्मवेदिन आपणे भृत्यरूपेण विक्रीणन्ति पसा घृत। कोलाहलस्य तु एतद् अभूद् यत् दुष्कारिण व्यापारिण ते बहुना धनदण्डेन दण्डिता, सभूय ब्राह्मणैर् अन्यै, दण्ड-रूप धन च तत्, जन्म ब्राह्मण सज्ञाना स्वार्थेषु एव विभाजित। नवानैश्च तथ पाश्चात्ये प्रकारैः, जन्म ब्राह्मणा, जन्म क्षत्रिय वैश्याश्च, सघीभूयापि 'कम्पनी' स्थापयित्वा तु, 'सभूय-समुत्थानस्य' द्रव्यैः, लोके प्रदर्श्य, कपटै सहस्रान् वञ्चयति हि, स्वय भवति कोटि आढ्या, तान् सहस्रान् बहून् तथा दरिद्रयति नितरा, वार्त्ता धूर्त्ता कृता तथा। (३१०)। शिक्षके रक्षके चापि दुर्भावाना वश गते, व्याप्ता प्रजाश्च दुर्भावैर्, "यथा राजा तथा प्रजा"। "यद् यद् आचरति श्रेष्ठ तत् तद् एव इतरो जन, ■ यत्प्रमाण कुरुते लोकस्तद् अनुवर्तते' (गी०)। अन्योऽन्य'अनुग्रह'न्यायात् सर्वेऽपि निरय गता, शिक्षका घातका जाता, रक्षका भक्षका तथा, पोषका शोषका भूता, सेवका अपि धर्षका। अतो न केवल शास्त्राणा अभावो हि कारण, धर्मस्यापि समाजस्यापि अध पाते तु भारते। मिथ्याधर्मरतैर् यत्र धर्मसेवाधिकारिभिः सद्धर्मो हन्यते, तत्र धर्मशिक्षा

कथ भवेत् ? शक्तिलोपेऽपि इतन धर्मस्य एवआदिकारण। उत्तमागे तु विभ्रष्टे, उत्तराग तत क्रमात्, बाहूदर च, पादश्च, भ्रश आप्नोति असशय। ज्ञाने तु अशुद्धे सञ्जाते, इच्छा दुष्टा भवेद् ध्रुव, तत सर्वा क्रिया दुष्टा च,इत्यनर्थपरपरा। "काम मयोऽय पुरुष, स यथाकामो भवति तत्क्रतुर्भवति, यत्क्रतुर् भव च भवति तत्कर्म करोति, तदभिसपद्यते चैव" (बृ०उ०) ।(३१९ श्लोक)

सघे शक्ति, तदभावे जय, तदभावस्कारण।

"समानी प्रपा, सह वो अन्नभाग, समाने योक्त्रे सह वो युनज्मि, समानो मत्र, समिति समानी,समानेन वो हविषा जुहोमि,(३२०),सगच्छध्व,संवदध्व,स वो मनासि जानताम्, समाना व आकूति, समाना हृदयानि व, समान अस्तु वो मन"—इत्याज्ञापयति श्रुति (वे०)। समानी वै प्रपा येषा, अन्नभाग सह एव च, मत्र समान, आकूति समानी, समितिस्तथा, हृदयानि समानानि, समान च तथा हवि, काय समाने ये युक्ता, तेषामेव हित भवेत्, तेषामेव हि वृद्धि स्यात्, तेषामेव जय सदा। न तु शीर्णविकीर्णाना त्रिसहस्रासु जातिषु, अन्योऽन्य भिद्यमानाना,तिरश्चापि विकीर्यता, इतस्ततोऽभ्यस्यताना, छिन्नाना बहुभिर्मतै। "न वै भिन्ना जातु चरंति धर्म, न वै सुखं प्राप्नुवंतीह भिन्ना, न वै भिन्ना गौरव प्राप्नुवन्ति, न वै भिन्ना प्रशमं रोचयति, न वै तेषा स्वदते पथ्य उक्त, योगक्षेम कल्पते नैव तेषा,भिन्नाना वै, मनुजेन्द्र !, परायणं, न विद्यते किंचिदन्यम् प्रणाशात्" (म०भा० विदुरनीति)। किंतु नैव अद्य जायते 'हिन्दुना' म मनासि वै,स वदति न वा वे तु, न स गच्छन्ति वा मिथ, मनाग् अप्येकता-बुद्धिर् दृश्यते न पशु सामस, पापधिना इन्द्रजाले, नर्त्तरिव, विमोहिता, प्रतास छलिभिर् बाला, श्रद्धा धा तारतोप्यपि, मूढग्राहैर्भृशा भ्रत्रा, भ्रष्टा वेदस्य सत्पथात्, नष्टमार्गा महारण्ये यथा, तद्वद् भ्रमति ते।(३३०)

> हिन्दू समाज सर्वोऽय नितरा ग्लत्यता गत,
> आपादतलम् आचूड पुन सस्कारम् अर्हति।
> 'कर्मणा वर्ण' इत्येतन्मन्त्रेणैव तु सम्यक
> पुनर् उज्जीवनस्य अस्य पुन संस्करणस्य च।(३३२)

कथ चिकित्सा, किमत्र शास्त्र।

"धर्म एव हतो हन्ति, धर्मो रक्षति रक्षित, तस्माद धर्मो न हन्तव्य," शास्ति

एव भगवान्मनु (म०)। ' धर्माद् अर्थश्च कामश्च, स किमर्थं न सेव्यते"(म॰भा०), ऊर्ध्वबाहुर्विरौति एव महाभारतकृन्मुनि । "धर्माद अर्थ , तत काम , कामाद् धर्मसुखोदय , इत्येव निर्णय शास्त्रे प्रवदन्ति मनीषिण " (मत्स्यपु०)। सज्ज्ञानात्तु सदिच्छा स्यात्, तत स्यात्सत्क्रिया हि, अत , सद्धर्मरूपम् एवऽादौ निश्चेतव्य प्रय त्नत । न तादृङ् निर्णय कर्तुं शक्ता बुद्धिस्तु तामसी, "अधर्मं धर्म इति या मन्यते तमसावृता, सर्वार्थान् विपरीताश्च, बुद्धि सा मनु तामसी" (गी०) । न वापि राजसी बुद्धिर्धर्मरूप विनिर्णयेत्, "यया धर्म अधर्मं च कार्यं चाकार्यमेव च, अय थावत् प्रजानाति, बुद्धि सा खलु राजसी" (गी०) । ज्ञातु वक्तु च सद्धर्मं बुद्धि शक्ता ■ सात्त्विकी(३४०),"प्रवृत्तिं च निवृत्तिं च कार्याकार्य, भयाभये,बन्ध मोक्ष च या वेत्ति, बुद्धि सा हि अस्ति सात्त्विकी ' (गी०), वेदिनी अध्यात्म शास्त्रस्य, इत्येवार्थाद् अवगम्यते । "अध्यात्मविद्या विद्याना ' बध मोक्ष च वेदयेत् ,भय स्थानानि पापानि, निर्भय चामृत पद , इत्याद्यऽपि हेतु वे ऽभयस्य हि भयस्य च । 'शास्त्रमेव प्रमाण स्यात् धर्माधर्मविनिर्णये' , 'किं तत् शास्त्र', इद चिन्त्य तत्त्वाधिगमकाङ्क्षिभि , "तस्माच्छास्त्र प्रमाण ते कार्याकार्यव्यवस्थितौ" (गी०), यद् एतद् उक्त कृष्णेन, तद् व्याख्याति स्वय प्रभु ,"इति गुह्यतम शास्त्र" अध्यात्म शास्त्र उच्यते, "राजविद्या राजगुह्य ', "गुह्याद् गुह्यतरं" तथा, "सर्व भूतेषु येनैक भावम् अव्ययम् ईक्षते, अविभक्त विभक्तेषु, तज्ज्ञान विद्धि सात्त्विक ' (गी०), शास्ति यत् साधनोपाय चतुर्वर्गस्य निश्चित, तथा तद्बाधन अपाय, एषा शास्त्रस्य शास्त्रता , सच्छास्त्र तु सदैव, अन्यद् "शास्त्रं विलापन" पर । इदंकृत्या ऽलेन यो धर्म , आत्मज्ञानाश्रितेन हि, आदिश्यते, स एवास्मि जगत्कल्याणका रक ।"ध्यानिक सर्व एव एतद्,यद् 'एतद्'(इति)अभिशब्दितम्, न हि अनध्यात्म वत् कश्चित् क्रियाफल उपाश्नुते ।(३५०) अधियज्ञ ब्रह्म जपेद्, आधिदैविक एव च, आध्यात्मिक च सतत, वेदान्ताभिहित तु यत् ; इद शरण अज्ञानां, इद एव विजानतां, इद अन्विच्छता स्वर्गं, इद आन य इच्छता , अनेन क्रमयोगेन परिव्र जति यो द्विज , स ,विधूय इह पाप्मान, परब्रह्म अधिगच्छति । सैनापत्य च, राज्य च, दण्डनेतृत्व एव च, सर्वलोकाधिपत्य वा, वेदशास्त्रविद् अर्हति"(म०) । सर्व सम्राहक सोऽय, चतुर्वर्णाश्रमात्मक , राजविद्याऽनुसारेण कृष्णेनोचारित शसित– "चातुर्वर्ण्यं मया सृष्टं गुण कर्म विभागश , कर्माणि प्रविभक्तानि स्वभावप्रभवैर्

गुणे" (गी०)। उच्यते 'कर्मश' स्पष्ट, न पुन'र्जन्मना'इति हि। शब्दा सति अत्र विस्पष्टा, "गुण कर्म विभागश", "गुणै स्वभाव प्रभवै", न तु एव अत्र उपदिश्यते—'गुणैस्तु जन्मप्रभवै', 'जन्म जाति विभागश'. "सर्वोपनिषदो गावो, दोग्धा गोपालनन्दन, पार्थो वत्स, सुधी भोक्ता", इति गाथा प्रथीयसी, वेदान्त माख्य योगाना, गीताया सार उद्धृत, तथा मनूक्तधर्माणा कर्म निष्कर्म शाम्निना(२६०)। प्रवर्तते श्रुतिर्द्वेधा,"कुरु कर्म,त्यज इति च"(म०भा०),"प्रवृत्त च, निवृत्त च, द्विविधं कर्म वैदिक"(म०), काम्य सकाम, निष्काम,नैष्कर्म्य चेति यत् स्मृत, समन्वियते ते गीताया, मन्वादेशानुसारेन। साम्येषु विस्तरश्लोक इव भाव-गुण-कर्मणा। 'परा मन स्वभावात्' तु, प्रकृति च वदति हि, त्रयो गुणा प्रतायते, त्रीणि कर्माणि चैव हि, एकैकगुणवैशेष्यात्, 'द्विज वर्ण-त्रय' तत।

'आन्वीक्षिकी' आत्मशास्त्रस्य एव अपर नाम उच्यते,राजाऽध्येयासु विद्यासु मूर्धन्या स्थाप्यते हि सा,"आन्वीक्षिकीं आत्मविद्या" अभ्यस्येद् यत्नतो नृप, अध्याये राज धर्माणा आदेशोऽय स्वय मनो।(म०) "आन्वीक्षिकी आत्मविद्या स्याद्, ईक्षणात् सुखदु खयो, ईक्षमाण तया तत्त्व हर्षशोकौ व्युदस्यति" (शु०नी०), "प्रदीप सर्वविद्याना, उपाय सर्वकर्मणा, आश्रय सर्वधर्माणा, शश्वद् आन्वीक्षिकी मता" (वा त्स्या०न्या०भा०, कौटि०अर्थशा०)। "य य लोक मनसा सविभाति, विशुद्धसत्त्व कामयते याश्च कामान्, त त लोक जयते, ताश्च कामान्, तस्माद् आत्मज्ञ हि अर्चयेद् भूतिकाम"(मुड०उ०)। आन्वीक्षिक्या दर्शितेन,गीतया व्याप्तिनेन च,'वर्णानां कर्मणा सिद्धि',सिद्धान्तेन,प्रसिद्ध्यति(२७०)। कृष्णेन गीयते यत्, सत् मनसा किं न पीयते? बुद्धि आत्म शब्दौ गीताया यावद्वार प्रयोजितौ, तावद् अन्य अर्थगर्भो हि शब्दो नैव प्रयोजित। सांख्यशास्त्रेऽपि सिद्धान्त "बुद्धिर् अध्यवसायिनी", स्वरूप एव सा इव स्याद् आद्विम परमात्मन। (२७२ श्लो०)

वर्तमाना शास्त्रदुर्दशा।

न शास्त्र वाग्विलासार्थ, मल्लयुद्धार्थमेव वा। सत्त्वाय मनुष्याणा, व्यवहारस्य शुद्धये, कल्याणार्थं समाजस्य, सौमनस्यार्थम् एव च,शान्त्यै,तुष्ट्यै च, पुष्ट्यै च 'शास्त्र' पूर्वै प्रदर्शित, आदौ,मध्ये, तथाऽन्ते तै 'शान्ति' शान्ति' च पठ्यते, आरभ्यते च उपनिषत् 'सौम्य-तात' प्रबोधनै, एतया च उपनिषदाऽध्यात्मविद्या उपदिश्यते। "विद्यया औपनिषद्या यद् यदेव, श्रद्धया तथा, क्रियते, तदेव

स्यात् कर्म वै वीर्यवत्तर" (छां०उ०), "नहि अनध्यात्मवित् कश्चित् क्रियाफल उपाश्नुते" (म०), "अध्यात्मविद्या विद्यानां" प्रदीपो हि समन्तत, आश्रय सर्वधर्माणां, उपाय सर्वकर्मणां, चतुर्णामपि वर्णानां, इति मत्वा सुनिश्चित कृष्णे योजयितु पार्थं, विमुख धर्मकर्मण, (३८०), स्वजनवधभीत च, गीता गीता रणाजिरे सम्पूर्णा वासुदेवेन, अध्यात्मविद्योपदेशिका। न सौमनस्य, नो शान्ति, पुष्टिस्तुष्टिर्न चैव हि, नत्वात्मविद्याप्रयोगो वा व्यवहारस्य शोधने, हिन्दुषु इदानीं कुत्रापि दृश्यो भारत भूतले। आचारभ्रशनयैव बहु 'वेदान्त'-जल्पन, 'नैष्कर्म्य'-वादो बहुश, दम्भन मोहन तथा मुग्धानां अत्यद्भुतोना, क्रूर वचन एव च, मूढग्राहश्च विविध प्राप्य प्रसृत भारते। 'मीमांसा दिग्गजाना' च, 'अल्लाना व्याकृतौ' तथा, तथा 'वेदान्त सिंहानां', 'तर्क-केसरिणा' अपि, दृश्यते विदुषा मध्ये नियुद्धानि एव सर्वत, 'विद्यार्णवाना' कल्लोला, तथा 'दिग्विजया' अपि विद्यासु 'सार्वभौमाना', विदुषा 'चक्रवर्तिना' पराक्रमाश्च 'शास्त्रार्थ', वाक्-पटी-नर्तनानि च, बहूना कवि 'सम्राजा', दृश्यतेऽत्र स्थले स्थले, वाग्देव्या 'रसनाग्रेषु विविध चित्रनर्तन', समस्यापूर्तयो बह्व्य, चमत्कृत्स्फूर्तिपरतया, शृङ्गारबहुलान्येव कविसम्मेलनानि च, चित्तोद्वा विभ्रमाश्चापि भूरि साहित्यसेविना, न जातु सहृतो यत्र समाजोद्धारकारक। (३९०)। सम्पत्कालस्य सर्वं तच्छोभार्थं उचित भवेत्, तथा मनोविनोदार्थं, नत्वापत्कालाय सम्मत। वागाडम्बरमात्रेण शास्त्रेण एतादृशेन किं? साहित्येनापि किं तेन प्रजा-सख्य अकुर्वता? द्विजत्वेनापि किं तेन सत्तपोरहित तु यत्? "ब्राह्मणस्य तपो ज्ञान, तप क्षत्रस्य रक्षण, वैश्यस्य तु तपो वार्त्ता, तप शूद्रस्य सेवन, आ ह एव ■ नखाग्रेभ्य परम तप्यते तप, य स्रग्वी अपि द्विजोऽधीते स्वाध्याय शक्तितोऽन्वह" (म०), "अध्यात्मज्ञाननित्यत्व, तत्त्वज्ञानार्थदर्शन, × एतज्ज्ञान इति प्रोक्त, अज्ञान यद् अतोऽन्यथा, स्वाध्यायाभ्यसन चैव वाङ्मय तप उच्यते, स्वाध्याय ज्ञान यज्ञाश्च यतय सशितव्रता" (गी०), स्व आत्मा, तस्य च अध्याय, श्रवण, मनन तथा, निदिध्यासनम् एवापि, प्रत्यक्षीकरण स्थिर, वेद उपवेद वेदान्त वाक्यार्थानां विशेषत, तथा अनुषगि शास्त्राणा आत्मज्ञानोपयोगिना, जीवआत्मनो जगद्-यात्रा-साधकाना तथैव च, चिन्तन-अभ्यसन ध्यान एतत् स्वाध्याय उच्यते। (४००)। रटन शुष्कशब्दानां, नटने बहु जल्पने, तथा वितण्डापाण्डित्यं, न स्वाध्यायोऽस्ति सम्मत। "अध्यायो मोक्षशास्त्राणा, प्रणवस्य जपस्तथा अर्थ भावन

रूपश्च-योगे स्वाध्याय इष्यते(यो०सू०भा०१,२८,२,३२)। "यदा चर्मवद् आकाश वेष्टयिष्यंति मानवा, तदा देवम् अविज्ञाय दु खस्य अतो भविष्यति"(उ०),ज्ञात्वा देव इह आत्मान, तस्य प्रकृतिं एव च, समाजस्य व्यवस्था च कृत्वा तदनुसारत, आश्रमैश्चापि वर्णैश्च, गुण कर्म विभागश, अंत ॥ अखिलदु खाना कथचित् समभविष्यति। "सर्वपामपि चैतेषा आत्मज्ञान पर स्मृत, योऽनधीत्य द्विजो वेद, अन्यत्र कुरुते श्रम, स जीवन्नेव शूद्रत्वं आशु गच्छति सान्वय" (म०)। मद्व मस्यानुसारेण चतुर्वर्गप्रदानि वै, सच्छास्त्राणि तु सर्वाणि 'वेद एव हि सर्वदा" (म० भा०) "एकोऽपि वेदविद् धर्म य व्यवस्येद् द्विजोत्तम, स विज्ञेय परो धर्मो, न अज्ञाना उदितोऽयुतै"(म०),'मतीति य स धर्म स्याद् एको वाऽध्या त्मवित्तम" (या० स्मृ०)। "आर्षं धर्मोपदेश तु, वेदशास्त्राविरोधिना, यस्तर्केण अनुसधत्ते स धर्मं वेद, नेतर" (म०) (४१०) वेदस्य शाख वेदान्त,आत्मशास्त्र हि केवल। निकषज ईदृशेन अद्य कथ्यते चेन्, 'द्विजा' कति सिध्येयुर्भारते वय ? कोटिशो ब्राह्मणब्रुवा, तथा वैश्यब्रुवाश्चापि, तथैव क्षत्रियब्रुवा। "सुलभा पुरुषा, राजन्, सतत प्रियवादिन, अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभ" (वा० रा०), 'कटु तु वस्तु व्यवसाययति न निरस्तसपत्नमया दुराधप' "हित मनोहारि च दुर्लभ वचो यथौषध स्वादु च रोगहारि च', "स किंसखा साधु न शास्ति योऽधिप, हितान् न य सशृणुते स किंप्रभु" (किरा० अर्जु०), 'सुला भलोके प्रियमेव पेयन्, न वापि राज, न हित च, किंच'। इदृशा दुरवस्थायां, साधु कार्य विचार्यता, उद्धार्यता च मोहाब्धौ निमग्न भारत कुल, एतदेव पर कृत्य द्विजाना अधुनातन। "नास्ति कोऽपि खलु सादृगुपाय, सर्वलोकपरितोषकरो य सर्वथापि उचित आचरणीय, मोंस्यते हि सुजन सुविवेकी। (आदित ५१६ श्लोका)।

---

२ अध्याय

अग्रज माऽनुजन्मान, चतुर्वर्णाना अगाग्नित्व।

"एतद्देशप्रसूतस्य सकाशाद् अग्रजन्मन, स्वं स्व चरित्र शिक्षेरन् पृथिव्यां सर्वमानवा" (म), इति यत् मनुनाऽऽदिष्टं, तस्यार्थ सुविमृश्यता। 'अग्र जन्मा' विप्रनाम, तर्हि अन्ये किनु न अनुजा ? चत्वारो भ्रातर सर्वे 'अग्र'

जाता सहोदरा , एको ब्रह्मा पिता तेषां सर्वेषां तु प्रजापतिः । अथवा— भ्रातरश्चापि देहे स्वे स्वे पृथक् कृता, येद्वेन इमे सु चत्वारोऽपि अगागितेन सस्कृता , नहि जन्म भवेत् तेषा अस्पृश्यत्वे तु कारणं । (४२०) । शिरो बाहू उरु पद्-वद् ये ससृष्टा नित्यमेव हि, अन्योऽन्य अस्पृश्यता तेषा सभवेज् जन्मना कथ ? सम्पर्क वर्जने हेतु पापप्रचारो हि केवल, शील व्यसन वैषम्य तीव्र चापि अत्र कारण, तथैव मलदिग्धत्व, रोगै सचारिभिश्च वा आक्रान्तस्य शरीरस्य, स्पर्शवर्जन कारण । 'अग्रजन्मा' इति शब्दस्याप्यर्थ सम्यङ् निरच्यता, कीदृशो हि 'अग्र जन्मा' स ? पृथिव्या सर्वमानवान् य', सर्वलोकमान्य सन्, भवेत् शिक्षयितु क्षम । मानवो जायमानो हि शिरसाऽग्रे प्रजायते, ज्ञानेन्द्रियधरत्वात् चापि उत्तमाग शिर स्मृत, "नहि ज्ञानेन सदृश पवित्र इह विद्यते" (गी०), सर्वेषां पुरुषार्थांना ज्ञानं साधन उत्तम, निधीनां उत्तमश्चापि योऽय ज्ञानमयो निधि , "नृपाणा अक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते, शनकैस्तु क्रियालोपाद् (बहुप) क्षत्रियजातय वृषलत्व गता लोके, ब्राह्मण-अदर्शनेन च" (म०),'वृषो हि भग वान् धर्म ", त्राति,कर्त वति,इह त,(४२०),विनाशयसि दुर्बुद्धया,य म वै वृषल स्मृत । सज्ज्ञानदाने , शिष्टानो आचारस्योपदेशने , सत्कर्मणा शिक्षकाणा 'अनुशासने', आशय 'अदर्शन'स्य, न पुन केवल मुखदर्शन येषा केषा चिद्, आरमान 'ब्राह्मण मुखता, इति, ईदृशो ज्ञानमहिमा यो द्विज वस्य कारक । 'ब्रह्म' वेदश्च, शुक्र च,परमात्मा तथैव च,"बृहत्वाद् बृहणत्वाच् चआत्मैव ब्रह्मेति गीयते" । "वेदा अनन्ता " (तै०ब्रा०); शुक्रे च अनन्तसतानशक्तता, परमात्मा अनाद्यनन्त ; 'ब्रह्म' तस्मात् तु सत् ग्य । अक्षयोऽत्र 'निधि ब्राह्म ' सर्वज्ञानस्य सचय , वेद ब्रह्म ईदृश यस्मिन् स 'ब्राह्मण' इति स्मृत । अतो यस्तु आत्मवित्, ज्ञानी,विश्वमैत्र ,तपोयुत , 'अग्रजन्मा' स वाच्य स्यात् न अन्य स शब्द अर्हति । प्रथम पृथिवीलोके, आत्मलोके तत पुन , द्विवार जायते यस्मात्,तस्माद् 'द्वि ज' इति स्मृत , "मातु अग्रेऽधिजनन, द्वितीय मौञ्जिबधने" (म०), अतर्दृष्टिविकासेन येनात्मा सुसमीक्षित , स्वचित्तगुणदोषाणा परीक्षाकरणे क्षम जात , स्वदुष्ट-वृत्तीना विनिग्रहशतपर यश्च जातो, 'द्विज ' सोऽस्मि, न अन्य स शब्द अर्हति । (४४०) । वेदेषु अपि अयमेवार्थो रूपकेणात्रि वर्णित ।"यत् पुरुष व्यदधु ,कतिधा व्यकल्पयन्, मुख किम् अस्यआसीत्, किं बाहू, किं ऊरू, पादा उच्येते ?

ब्राह्मणोऽस्य मुखं आसीत्, बाहू राजन्यः कृतः, ऊरू तद् अस्य यद् वैश्यः, पद्भ्यां शूद्रो अजायत। सहस्रशीर्षा पुरुषः, सहस्राक्षः, सहस्रपात्, स भूमिं सर्वतः स्पृत्वा, अत्यतिष्ठद् दशांगुलं" (वे०)। "ब्रह्म वक्त्रं, भुजौ क्षत्रं, कृत्स्नं ऊरु(-उ) दरं विशः, पादौ यस्याश्रिताः शूद्राः, तस्मै वर्णात्मने नमः"(म०भा)। रूपकस्यास्य विषयः प्रत्यक्षोऽर्थो, न संशयः; समाजो मानवानां वै सहस्र-अक्षः, सहस्रपात्, सहस्रबाहूर्जघोरुः, सर्वतोऽक्षिशिरोमुखः; समाजस्य शरीरेऽस्मिन्, 'ज्ञानी' ध्यानी मुखस्य वै; भुजस्थानो तथा 'वीरो' धीरो रक्षण-कर्मसु; ऊरूदरं तु प्रत्यक्षं अन्नदः प्राजनो वणिक्; पादौ सर्वधरौ च श्रम-'शु-द्र'-वितारो सह-अयने। ईदृशः 'पुरुषो' असंख्यपाणिपादाशिरोमयः, इन्द्रियैः 'अंग'-शब्दोक्तैः 'दश'भिश्चापि संयुतः,(४५०),'दशाङ्गुलीभिः' च युतः तथैव कायोर् द्वयोः, सर्वग्रहणशक्ताभिः, दक्षाभिः सर्वकर्मणि, 'स्पृष्वा', व्याप्य, महीं मर्यां, सर्वदेशेषु अधिष्ठितः। सर्वेषां 'अग्रजन्मा' च, ज्ञानकश्च आदिमो नृणां, शास्ता च, शासिता चापि, स्वस्यैवानन्तसन्ततेः, स्वयं मनुः शिक्षयति "पृथिव्यां सर्वमानवान्"; आद्याः मन्मंत्रिणः सप्त, पुत्राश्चापि, महर्षयः, येऽत्र 'शिष्टाः' पूर्वकल्पात्, 'शिष्टा'श्च बहुशिक्षिताः, कल्पेऽस्मिन्, मानवान् शास्तुं धर्मं जाग्रति अहर्निशं, युगप्रवर्तानुसारेण ते चैव अनुवदंति तं। (४५४ श्लोकाः)

### धर्मस्य द्वे रूपे।

"द्वे वाव ब्रह्मणो रूपे,मूर्त्तं चाऽमूर्त्तं एव च" (उप०),तथैव धर्मस्य अपि द्वे, (१) गौणो, (२) मुख्यो हि अकृत्रिमः; कर्मापि (१) काम्यं (२)नित्यं च, धर्मस्य रूपानुसारतः; (३) नैमित्तिकं कर्म तयोर्मध्ये तिष्ठति,उभे स्पृशत्। एक-रूपी परो ज्ञेयो, बहुरूपी अपरो भवेत्। 'सामान्यं' एकं,सततं अविकारि, सनातनं; अनेकाः तु 'विशेषाः' ये भिद्यंते देश-काल तः। रुद्राक्ष-तुलसी-काष्ठ-'हिलाल'-'क्रास'-धारणं, 'जंतर्'-'मंतर्'-'ऐम्युलेट्'-'तावीज़ानां' च वाहनं,एका शिखा वा,द्वे,तिस्रः,चतस्रः, पंच वा शिखाः,कपालस्य अग्रभागे वा,मूर्ध्नि,पृष्ठे,ऽथ दक्षिणे,सहिता श्मश्रुकूर्चाभ्यां रहिता वा,हनुस् तथा,(४६०),यज्ञोपवीत-'जुन्नार'-'रोज़री'-'तसबीह' वा; काषाय-पीत-श्वेत-नील-हरितं वसनं तथा; चर्च-मंदिर-पागोडा-मस्जिद्-जिनगृहेऽर्चनं; देवी-विष्णु-शिव-अल्ला-गाड्-जेहोवाऽदि अभिधासु वा;श्रद्धाऽभ्यासो क्रियेतां वै,यथारुचि, यथामति; परमात्मा इति यत् तत्त्वं निहितं सर्वनामसु, सर्व-रूप-क्रिया-द्रव्य-वस्तुषु/

व्यापक विभु,अवश्य,किन्तु,तद्ध्यान कर्तव्य सर्वमानवै । पृथक् पृथग् 'विशेषा' स्तु , 'सामान्य' तु एक एव तत्र । यद्वदाकृतयो भिन्ना , चैतन्य तु एकं एव ध्वे, वासांसि बहु भिद्यते, शरीर तु एकमेव हि, अणव परिवर्तते शरीरे तु प्रतिक्षण, तेषु व्यावर्तमानेषु, जीवो ननु अनुवर्तते, "योऽहं अन्वभवम् बाल्ये पितरौ, सोऽहं एष हि, तत् तत् अनुभवामि अद्य स्थाविरे, देहयो तयो , प्रत्यभिज्ञानगधो न मनाग् अपि", अन्यदेहवत्, (भामती), उत्सृज्यते, निर्मीयते,वित्तमाया ,क्षणे क्षणे, सर्वस्व बाधिनी चित् तु स्मृतिरूपा ऽनपायिनी, मालाया गुटिका सर्वा ,सूत्राऽस्मा एकोऽनुसीव्यति,धर्मसार तथा सर्वान् धर्मान् अपि अनुसीव्यति।(४७९) मत मार्ग सम्प्रदाय रिलिजन् मजहब् पथा सर्वेषा एकलक्ष्य , स 'परमात्मा' इति सूचित । "मम वर्त्मानुवर्तते मनुष्या ननु सर्वश (गी०), "रुचीना वैचित्र्याद् ऋजु कुटिल नाना पथ जुषा नृणा एको गम्य स खलु, पयसा अर्णव इव"(महिमस्तुति ), "इदानी, अस्माकं, पटुतर विवेक-अञ्जन जुषा, समीभूता दृष्टि त्रिभुवन अपि ब्रह्म मनुते" (भर्तृहरि ), ' एत एके वदन्ति अग्नि, मनु अन्ये प्रजापति, इन्द्र एके, परे प्राण, अपरे ब्रह्म शाश्वत ' (मनु), "इन्द्र, मित्र, वरुण, अग्नि, आहुर, अथो दिव्य स सुपर्णो गरुत्मान्, एक सद् विप्रा बहुधा वदन्ति, अग्नि, यम, मातरि श्वान, आहु" (वेद), ' केचित् कर्म वदन्त्येन, स्वभाव अपरे जना , एके, काल, परे दैव, पुस काम उतापरे" (भाग०), 'काल, स्वभावो, नियतिर, यदृच्छा, भूतानि, योनि , पुरुष ,इति चिन्त्य ' (श्वेत०उ०),'तप तम , अज, ज्ञान, प्रधान, प्रकृति तथा, माया, शक्ति, विमर्शो,ऽजो, ऽविद्या, विद्या, महातम , महाज्योतिश्, चितिश्च,ऽऽत्मा, स्वरसा च पराऽपरा, सत्, सत्ता, परमात्मा च, स्फुरत्ता, तत्त्व एव च, स्वातन्त्र्य, उदिता,औन्मुख्य, एश्वर्य,मातृका तथा,(४८०), मालिनी, हृदया, मूर्ति , स्व संवित् स्पद एव च—उद्घुष्यते परं तत्त्व ईदृक्शब्दै ,सदागमै विविधानः चिन्तकाना भिन्न-रुचि अनुसारत , (दुर्गा०, गुप्तवती टीका), 'ऋत, आत्मा, पर तत्त्व, सत्य, ब्रह्म, सनातन , विज्ञानमात्र, नैरात्म्य, मध्यं, शून्य, तथाऽलय , धत्ता, माता, पिता, भोक्ता, कर्ता, द्रष्टा च, भासक , ईश्वर , पुरुष , सर्व , शिवश्चपरमस्थता' ( यो० वा० ३ १ १२, ३ ५ ६–७, ५ ८ १ ९, ८७०१८०२०) बौद्धानामस्ति बुद्धोऽय, कर्ता नैयायिकस्य च, कर्म मीमांसकस्यापि, जैनस्य अर्हत् तथैव च, गाड्, अल्ला च, जिहोवा च, अपि अहुरा मज़

हा तथा, तियेन्, फ्ट्, इयोल्युशन् च, फोर्स, चान्स, खुदा तथा—विविधैर्नामभिर् भिन्न-देश-काल-गिरासु च, तदेव एकं परं तत्त्वं गीयते स्तूयते जनैः; यद् विशेषेषु अशेषेषु मन्थितेषु अवशिष्यते। इति एकत्वं अनेकानां यो 'धारयति' सर्वेषां हृदये, सर्व-संवादि, न असौ विवदते क्वचित्; प्रजाश्च 'धारयति' एव 'धर्मेण', प्रेमबन्धनैः; "किंतु, शांतोऽपि, समदृक्, जीवानां यदि उपेक्षकः, स्रवते ब्रह्म सत्यापि, भिन्नभांडात् पयो यथा" ( भा० )। 'सामान्यस्य' हि धर्मो अयं,'विशेषाणां' तु 'भारणं'; 'अरताः', कलहं कृत्वा, विशीर्यन्ति, परस्परं (४९०)। 'विशेष'-धर्माश्च अभीष्टाः संति, किंतु ततोऽधिकं'सामान्य'-धर्मोऽभीष्टो हि,नान्यथा जगतो 'धृतिः'। अतः 'साधारणं धर्मं', बलेन च, पुनः पुनः, अग्रे दधाति भगवान् मनुः स्वायंभुवः स्वयं; "चतुर्भिरपि चैव एतैर् नित्यं आश्रमिभिर् द्विजैः, दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः,धृतिः, क्षमा, दमो, ऽस्तेयं, शौचं, इन्द्रियनिग्रहः, धीः, विद्या, सत्यं, अक्रोधो, दशकं धर्मलक्षणं; दशलक्षणानि धर्मस्य, ये विप्राः समधीयते, अधीत्य चानुवर्तन्ते,ते यांति परमां गतिं। अहिंसा, सत्यं,अस्तेयं शौचं, इन्द्रियनिग्रहः, एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन् मनुः। यमान् सेवेत सततं,न नित्यं नियमान् बुधः; यमान् पतति अकुर्वाणः, नियमान् केवलान् भजन्। जप्येनैव तु संसिध्येद् ब्राह्मणो, नात्र संशयः,कुर्याद् अन्यन् न वा कुर्यात्, मैत्रो ब्राह्मणः उच्यते,सावित्रीमात्रसारोऽपि वरं विप्रः सुयंत्रितः,न अयंत्रितः त्रिवेदो ऽपि सर्वाशी सर्वविक्रयी। आ ह एव स नखाग्रेभ्यः परमं तप्यते तपः,यः स्रग्वी अपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहं"(म०)। (५००)। यमानां,नियमानां च,संख्यानं विविधं कृतं, विष्णुभागवते, चान्यपुराणेषु, महर्षिभिः; मनोः कुल्लूकटीकायां गणन तु समुद्धृतं, याज्ञवल्क्यादिभिः पूर्वैः, अर्वाचीनैश्च, यद् कृतं, गोविन्दराजेन यथा,यन् मेधातिथिनापि च। प्रसंख्यानं प्रसिद्धं तु,योगसूत्रेषु यन् कृतं—"अहिंसा सत्यं अस्तेयं ब्रह्मचर्य-अपरिग्रहौ",यमाः,च नियमाः "शौचं, संतोषः, तपः एव च, स्वाध्यायश्चापि,ईश्वरे प्रणिधानं" च कर्मणां (यो०सू०)।यमाः,परार्थरक्षार्थं,तस्माद् आवश्यकाः हि ते, स्वात्मोत्कर्षाय नियमाः,न तथाऽवश्यकाः सताः। "यमस्वरूपा सत्त्वा निवृत्तिः, तथा प्रवृत्तिः नियमस्वरूपा" ( संक्षे० शारी० )। श्रीमद्भागवते संख्या तयोर् एतादृशी कृता—(१) "अहिंसा, सत्यं, अस्तेयं, असंगो, ह्रीः, असंचयः, आस्तिक्यं, ब्रह्मचर्यं च, मौनं, स्थैर्यं, क्षमा, ऽभयं,(२) शौचं, जपः,

तपो, होम , श्रद्धा, आतिथ्य, मद् अर्चन, तीर्थाटन, परार्थेहा, तुष्टिर्, आचार्य सेवन —एते यमा सनियमा , उभयोर् द्वादश स्मृता ", "क शम , को दम , का ह्री , यमाश्च नियमा काति", इत्यादि उद्धवप्रश्नास्तु कृष्णोऽवादीत् समुत्तरन् (५१०)। "यमान् अभीक्ष्ण सेवेत, नियमान् मत्पर क्वचित्", इत्यपि आह, मनोर्वाक्य वासुदेवोऽपि अनुयुञ्जन् यत परार्था हि यमा , स्वार्था हि नियमा यत । ये हि द्वादशसंख्या हि, कृष्णोक्ते, उभयोर् अपि, योगसूत्रोक्तयो पञ्चसंख्योर् अन्तर्गते हि ते । परिमितया विना दिक्, योगे, काष्ठा परा व्रजन्, ( "जाति देश-काल-समय अनवच्छिन्ना महाव्रत '(यो०सू०) विरक्ताना, मुमुक्षूणा युयुक्षूणां हिताय, यत् सदैव हि गृहस्थार्थं, य सत्तो भगवान्मनु , कोमलीकृत्य दिशति, "धर्मं सामासिक" वदन्, "अहिंसा, सत्य, अस्तेय, शौच, इन्द्रियनिग्रह ", न एकान्तिक ब्रह्मचर्यं, नापत चापरिग्रह , "शौचात् स्वाङ्ग-जुगुप्सा च, अपि असंसर्ग परै सह", इति यद् योग सूत्रोक्त शौच तत्र अर्थं भावयो भावनीय गृहस्थैस्तु, न असंसर्ग परैर्भृश, "सर्वेषा मपि शौचाना अर्थशौच विशिष्यते, योऽर्थे शुचि स हि शुचि , न मृद्वारिशुचि शुचि , अद्रोहेणैव भूताना, अल्पद्रोहेण वा पुन , अजिह्मा अशठा शुद्धा" जीविका ह्युपजीवति यो वै, अर्थार्जन तस्य शुचि, सोऽर्थशुचि शुचि (म०)। तथापि, भाव शुद्धिर् या, शुचिता सा परा मता, "तपो न कल्को, अध्ययन न कल्क , स्वाभाविको वेद विधिर् न कल्क , प्रसह्य वित्ताहरण न कल्क, तानि एव भावोपहतानि कल्क " ( म० भा ), न स्वार्थिनो द्रोहिणश्च भाव शुध्यति कश्चन, न स्वार्थ द्रोहयोर् हान, सर्वाऽत्मैश्वर्यदर्शि विना, अतो हि अध्यात्मशास्त्रस्य मूर्धन्यत्व प्रतिष्ठित (५२०)। "नहि अनध्यात्मवित् कश्चित् क्रियाफल उपाश्नुते", "स एव धर्म , य यति हि एकोऽपि अध्यात्मवित्तम " (म० याज्ञ०)। सामान्यो धर्मसारश्च, सर्वधर्मेषु योऽन्वित , अध्यात्मविद्याया एव निष्ठित स सनातन । व्यावर्तते विशेषास्तु, सामान्य अनुवर्तते, प्रकृते परिणामित्वं, कौटस्थ्य प्रत्यगात्मन , धर्म सारो हि एक एव, व्यक्तयोऽस्य तु अनेकधा, न एकस्या एव कस्याचिद् हठो व्यक्ती प्रशस्यत, तथा, कस्याश्चिद् एकस्या तिरस्कारोऽपि नोचित , धर्मसार न सा व्यक्तिर् विरुधे चेद्, हिनस्ति वा । न एकजात्या एव पुष्पस्य शोभा उद्यानस्य भाविनी, बहु वर्ण रूप-गन्ध पुष्पै सम्पाद्यते हि सा। किंतु शोभाविवृद्ध्यै च मिथ तेषा, अपेक्षितं एकोद्याने समवर्णं, तथा सम्यक् निवेशनं, एक बुद्ध्या, उद्यानविद्याज्ञातुर् एकस्य

चेव वै। एव, एकस्य परिधे धर्मसारस्य च अन्तरे विशेषा सन्निवेश्या स्यु धर्माणा, वैरवर्जित, न केवल वैरशून्य, अपि ▪ प्रीतिपूरित। धर्मसारोऽध्यात्म-धर्म, यो गीताया अनूदित, मन्वाशयानुकूल्येन, वासुदेवेन, तस्वत, सोऽध्येतव्य, तथाऽभ्यस्य, मनुष्यैर् अखिलैर् अपि, तिर्यक्पुण्ड्रोर्ध्वपुण्ड्रादि भिद्यता तु यथा-रुचि, यावद् अस्पृश्यताआक्षेप तद्धरा नहि कुरुते, परस्पर, यतस् तेन धर्मसारो विरुध्यते। एतादृग्धर्मसारस्य अध्यात्मशास्त्रानुवर्तिन सुप्रासभूतो ऋषिभिर् वर्णधर्मो निरूप्यते। ( ५३० श्लोका )।

समाज, तद्व्यवस्थाया रूप, दर्शन,
सिद्धान्ता, वर्णा आश्रमा, धर्म, पुरुषार्था।

'सम जना अजंति अस्मिन्' समाजो जा स उच्यते, सम जनाना अजन, सुख चेवापि कस्यचित्, जीवनेऽपि च व्यक्तीना, समूहस्यापि वै तथा, सुव्यवस्था विना, नैव सिध्यतीह कदाचन। चतुर्भिरेव वर्णैश्च, चतुर्भिश्चाश्रमैस्तथा, सुव्य-वस्था ईदृशी साध्या, इत्याशा सर्वविद्वो मनो। मनो सकाशात् स्वपितु, अत एव, महर्षय वर्णाना आश्रमाणा च धर्मान् आदौ शिशिक्षिरे। सा सुव्यवस्था, आधारेण सिद्धान्ताना, सुसिध्यति, अध्यात्मशास्त्रमूलाना ते धार्या हृदये सदा। परात्मनो यतो नित्य प्रकृतिस्त्रिगुणात्मिका, ततस्तोऽत प्रकृतय नृणा, गुणत्रि भेदत —सत्त्वाऽधिका, रज प्राया, तथैव च तमोऽधिका, (न त्वेव एकान्तत क्वापि), गुणसाम्याच् चतुर्थिका। गुणाना मिथुनत्वाच्चापि, अपृथक्त्वाच्च सर्वथा, सर्वासा प्रकृतीना हि बीज सर्वत्र सर्वदा, हेतुना च विशिष्टेन विकासस्यास्ति सभव, यस्यापि एकस्य, कुत्रापि, कस्मिश्चिद्वा, गुणस्य वै, एषो ह्यध्यात्मशास्त्रस्य साख्य योगस्य निर्णय।"आत्यन्तरपरिणाम आपूरात् प्रकृतेर् भवेन्"(या०सू०),(५४०), "अन्योन्य अभिभव-आश्रय-मिथुन जनन-वृत्तयश्च गुणा "(सा०का०)। "न तदस्ति पृथिव्या वा दिवि देवेषु वा पुन, सत्त्व प्रकृतिजैर् मुक्त यत् स्याद् एभिस् त्रिभि-र्गुणै", "चातुर्वर्ण्य मया सृष्ट गुण-कर्म विभागश, कर्माणि प्रविभक्तानि स्वभाव-प्रभवैर्गुणै "(गी०), "इज्या आचार दम अहिंसा दान-स्वाध्याय-कर्मणा, अय ▪ परमो धर्मो, यद् योगेन आत्मदर्शन"(या०स्मृ०), "सर्वेषामपि चैतेषा आत्मज्ञान पर स्मृत, तद्धि अग्र्य सर्वविद्याना प्राप्यते ह्यमृत तत, सम्यग्दर्शनसपन्न कर्मभिर् न निबध्यते, दर्शनेन विहीनस्तु ससार प्रतिपद्यते" (म०)। 'सम्यग्दर्शन'-

शब्देन प्रोक्तम् अथ अदर्शन, आत्मन प्रकृतेश्चापि दर्शन खलु 'दर्शन' ।
"सुखाऽभ्युदयिकं चापि नैश्रेयसिकमेव च,प्रवृत्त च निवृत्त च,द्विविध कर्म वैदिक" (म०),यद् आभ्युदयिक चैव,नैश्रेयसिकमेव च,सुख साधयितु मार्ग दर्शयेत् तद्धि 'दर्शन', "यतस्तु अभ्युदयस्यापि,तथा निःश्रेयसस्य च,सिद्धिर्भवेत्,स धर्म स्यात्", सूत्र वैशेषिकं यद् (वै०सू०)।(५५०)। आत्मदर्शनजो ह्येव धर्मस्तु उभयसाधक ।
त्रिवर्गोऽभ्युदय ' प्रोक्त , मोक्षो 'निःश्रेयस' स्मृत,"धर्मश्चार्थश्च कामश्च त्रिवर्ग इति तु स्थिति " (म०), चतुर्थ पुरुषार्थाना वर्गो मोक्षस्तु कथ्यते । "सर्वविद्या प्रतिष्ठा हि ब्रह्मविद्येव" घोषिता (उ०), "अध्यात्मविद्या विद्याना, वाद प्रवदता अह " (गी०), ब्रह्मविद्याऽध्यात्मविद्या स्याद्, अध्यात्म शास्त्रमेव च, तस्या अंतर्गत सर्वं जीवात्मविषय यत , जीवस्याऽनुभवाना हि, तथा चित्तशरीरयो अतर्बहि करणयो वर्णन यत्र विद्यते । कर्मकाडीयवेदाना अते यत् सा उप दिश्यते, ज्ञान-काडमिश्रा सर्वा, तस्माद् वेदान्त उच्यते, 'गति ', 'विशरण', 'साद ', षद्-रूपाणा सन्ति वेदिता , समीप 'उप 'सद्राय', निषण्णाय हि दिश्यते, 'नयनाय' आत्मतश्च उप', तु ज्ञाना 'सादनाय' च, भवेद् 'विशरण' चापि बन्धाना चेतस यथा, जीव ससरणस्य अपि भवेद् 'विशरण' यत , रहस्य परम, ब्रह्म विद्या, सा 'उप नि षद्' स्मृता, ( सायण ), सत रहस्य, यत् किंचित्, तेन शब्देन गद्यते, यद् एकान्ते 'रहसि' एव कथ्यते तु परस्पर । ( ५६० ) । तत्प्रणी तेन धर्मेण, तत्सिद्धान्तानुसारिणा, सप्रध्यते समाजश्चेज् जीर्णोद्धारो भवेत् तदा।"वर्णस्तु कर्मणा त्व'इति सिद्धान्त प्रथम स्मृत , प्रमतोऽस्मिन्, विना एतेन, दुर्दशैव विवर्धिनी । "कृतयज्ञ तु राजन्य, वैश्य वा, ब्राह्मण वदेत्"—इत्याशा पयति स्पष्ट सत्या शतपथी श्रुति (श० ब्रा०), "एता प्रष्टा अथष्टम्य सर्वो ब्राह्मण उच्यते"—'ब्रह्मविद्' विषये ख्येय यत्ति 'वार्त्तिक' कारक (बृ०उ०भा०) । गल्युपकवषऐल्यान, वेदेषु प्रतिपादित, विसष्ट एत एवाऽथे भवतीति सुविनिश्चित, शूद्रस्य पुत्र कवष , तपसा वर्चसा युत , ऋषिभिर् ब्राह्मणत्वेन स्वीकृत , सिद्ध , आनर्त (वे०) ( ५६६ श्लोका ) ।

धर्मेषा वर्ण , पुराणोदाहरणानि ।

आदौ युगे मनुष्याणा सर्वेषां एकवर्णता, चतुर्षु वर्णेषु कृता युगे चापि विभा जन, तृप्यर्थ कल्पे जाते,शूद्रे, वै 'ब्रह्म'नामभि , इतिहासपुराणेषु वर्णित हि पुन

पुन, स्थाने स्थाने तथा चैव धर्माना परिवर्तन, स्वस्वकर्मानुसारेण, जीविकावृत्तिभिस्तथा, उपाख्यानैस्तु विविधै शतशश्चास्ति उदाहृत, न ह्येकेन विद्याभिसम्बन्धवृत्तान्तेन एव केवल(५७०)। "इतिहासपुराणाभ्यां वेद समुपबृंहयेत्, बिभेति अल्पश्रुताद् वेदो मा अय प्रतरिष्यति"(म०भा०), "धर्मेणाधिगतो येस्तु वेद सपरिबृंहण, ते शिष्टा ब्राह्मणा ज्ञेया, श्रुतिप्रत्यक्षहेतव"(म०), कर्णैरेव श्रुत यत्, तत् नेत्रेभ्यो दर्शयति ये, श्रुतीना साधिक चार्थं मार्मिक ख्यापयति ये, बहुश्रुतास्ते विज्ञेया 'श्रुतिप्रत्यक्ष हेतव'। विना उदाहरणै स्पष्टं सम्यग् अर्थो न बुध्यते, शास्त्रेषु अतर्ध्वताना हि सिद्धाताना कथन, "अत्राप्युदाहरति इम इतिहास पुरातन"—इत्युक्तया, बहुधाऽख्यानैर् अर्थो व्यासै स्फुटीकृत। महाभारतगाथा इय सुप्रसिद्धा एव वर्तते—"न विशेषोऽस्ति वर्णाना, सर्वं ब्राह्म इद जगत्, ब्रह्मणा पूर्वसृष्ट हि, कर्मभिर्वर्णता गत" (म०भा०)। सर्वेष्वपि पुराणेषु तथा रामायणेऽपि च, बहुशो भारते चापि, कीर्तिता कर्मवर्णता। यथा, "कृतयुगे पूर्वं एकवर्णं अभूत् किल, धर्माऽधर्मौ न तासु आस्तां, निर्विशेषा प्रजास्तु ता, तुल्य आयु, सुख, रूप, तासा, तस्मिन् कृते युगे, कृते तु अमिथुनोत्पत्ति, वृत्ति साक्षाद्, अलोलुपा प्रजा तृप्ता सदा सर्वा, सर्वानन्दाश्च, योगिन, (५८०), अधम उत्तमता नास्मा, निर्विशेषा, पुरजय!, तुल्य आयु, सुखं, रूपं, तासा तस्मिन् कृते युगे" (कूर्म पु०), "अप्रवृत्ति कृतयुगे कर्मणो पुण्यपापयो, वर्णाश्रमव्यवस्थाश्च न तदा आसन् न संकर, अनिच्छाद्वेषयुक्तास्ते वर्तयति परस्पर, तुल्यरूपआयुष सर्वा अधमोत्तमवर्जिता, सुखप्राया हि अशोकाश्च, उपपद्यते कृते युगे, नित्य प्रहृष्ट मनसो, महासत्त्वा महाबला, निर्विशेषा कृता सर्वा, रूप आयु शील चेष्टिते। अबुद्धिपूर्वक वृत्त (चेष्टा, वृत्तिश्च) प्रजाना जायते स्वय, अप्रवृत्तौ शरीरेषु प्रजास्ता स्थिरयौवना। तासा विशुद्धसत्त्वत्वात् जायते अमिथुना प्रजा, सम जन्म च रूप च, म्रियते चैव ता सम, तदा सत्य अलोभश्च, क्षमा, तुष्टि, सुख, दम, धर्माधर्मौ न तासु आस्ता, कल्पादौ तु कृते युगे, स्वामाल्पभौ न तासु आस्तां, मित्रामित्रे, प्रियाप्रिये। मनसा विषय (आहारादि) तासा निरीहाणा प्रवर्तते, न लिप्सति हि ता अन्योऽन्य, नाऽनुगृह्णन्ति चैव हि(५९०)। त्रेतायुगे तु अविकल कर्मारम्भ प्रसिध्यति, वर्णाना प्रविभागाश्च त्रेतायां तु प्रकीर्तिता, तत प्रभृति, कल्पेऽस्मिन्, मिथुनानां च सम्भव" (वायुपुराण, अध्याय ८, ३२, ३९, ५७ आदि)। चत्वारोऽपि प्रजा-

यन्ते वर्णा एककुलाद् इति—बहु उदाहरणानि अस्य पुराणेषु भवन्ति वै। "एते तु अंगिरस पुत्रा जाता वंशेऽथ भार्गवे, ब्राह्मणा क्षत्रिया वैश्या शूद्राश्च, भरतर्षभ', सम्बन्धो ह्यस्ति वंशोऽस्मिन् ब्रह्मक्षत्रस्य विश्रुत, x दिवोदासश्च राजर्षि अहल्या च यशस्विनी, x दिवोदासस्य दायादो ब्रह्मर्षिमित्रयुर्नृप, x नाभागादिष्टपुत्रौ च वैश्यौ ब्राह्मणता गतौ" (हरिवंश० अ० ३२, श्लो० ११)। "मनुर्नाम्नी तु पत्नी या कश्यपस्य पुराऽभवत्, सा मनुष्यान् अजनयद्, राम!, पुत्रान् यशस्विन, ब्राह्मणान्, क्षत्रियान्, वैश्यान्, शूद्रांश्च, मनुजर्षभ' (वाल्मी० रामा०), "धर्मोऽस्मर स मनुर्धीमान्, यत्र वंश प्रतिष्ठित, मनोर्वंशो मानवाना ततोऽयं प्रथितोऽभवत्, ब्रह्मक्षत्राद्य तस्मान् मनोर्जातास्तु मानवा" (म० भा०), "कृत नाम युग, तात!, यत्र धर्म सनातन, कृत एव, न कर्तव्य, तस्मिन् काले युगोत्तमे '(वनपर्व), (१००)। न प्रजानां तु कर्तव्य कृत्यर्थं अभवत् तदा, कृष्यादि, मृतया वापि, वृत्ति सिद्धा स्वतो हि अभूत्, आद्यौ तु मानसी सिद्धि, कल्पनाद् एव मानसाद् विषया उपतिष्ठन्ते, येऽपि स्युर् अभिवाञ्छिता, ततो, रसोल्लासा सिद्धि", वायुतो जन्मतस्तथा, घनीभूतेषु देहेषु, 'वार्क्षी' सिद्धि ततोऽभवत्, "अकृष्टपच्या वसुधा, कृष्ट पुष्ट अन्नसंकुला", जीवनआवश्यकं सर्वं वृक्षेभ्यो हि एव लभ्यते, 'कल्पवृक्षा ततो जात, सिद्धिर् वार्क्षी' इति च स्मृता फलवन्त सदा वृक्षा, फलैस्तृप्ताश्च मानवा, परस्पर प्रेमवन्त, नहि व्यथामिपगृभ्नव, न च संचयकर्तार, संचयस्य अप्रयोजनात्। "तत कालवशात्, तासां रागद्वेषादिकोऽभवत्'। परमात्मा, महाकाल, "काल कलयता अह', तस्यैव वासना, माया, "संसारस्थितिकारिणी", एष यथोऽपि अविद्या सा, प्रवृत्ति, च तत परं, निवृत्ति सा महाविद्या, चित्तवृत्तिनिरोधिनी, त्रेतादौ तु, जगन्नाटये, 'अविद्यातो हि 'अस्मिता', तत, 'रागद्वेषौ', 'अभिनिवेश', वर्धयती प्रवर्तत (११०)। यदा कालवशात् तासां रागद्वेषादिकं अभूत्, "तत या सहजा सिद्धि तासां नातीव जायते", परिग्रहार्थं कलहे, वृक्षाणा च विलुंपने, बलात्कारेण, ते वृक्षा 'कल्पवृक्षा' व्यनीनशन्, "तासु (सिद्धिषु) क्षीणासु अशेषासु, कालयोगेन, ता प्रजा, वार्तोपायं पुनश्चक्रु, हस्तसिद्धिं च कर्मजा', हस्ताभ्या कृषिकर्मादि, "हस्तसिद्धिर्" अत स्मृता, "रागलोभौ समास्थाय प्रजा चक्रुस्त्रियो, पुन, तत ता पर्यगृह्णन नदीक्षेत्राणि, पर्वतान्, वृक्षगुल्मौषधीश्चैव, सा सर्वाश्च च, यथाबल, तेन दोषेण वा तेषु ओषध्यो निपतता, द्विज!, तत

"वैश्ययोन्या समुत्पन्ना , शूद्रयोन्या तथैव च, महर्षय इति प्राप्ता पुरागाः द्विजसत्तमा ,(६४०),लोकोऽनुमन्यते चैतान्,प्रमाणं ह्यत्र वै तप । × वसिष्ठो महर्षि चाण्डाल्यामुदपद्यत । × अदृश्यन्त्या पिता वैश्यो, नाम्ना चित्रमुख , पुरा, ब्राह्मणत्व अनुप्राप्तो, महर्षिश्च च, कौरव !, कन्यां चित्रमुख , दत्त्वेऽर् वसिष्ठस्तन यस्य वै, शुभा प्रादाद्, यतो जातो महर्षिस्तु पराशर , तथैव दाशकन्यायां सत्यवत्या, महानृषि , पराशरात् प्रसूतश्च, व्यासो योगमयो मुनि , वीतहव्यश्च नृपति- श्रुतो मे विप्रता गत , भृगोर्वचनमात्रेण स च ब्रह्मपिता गत , वीतहव्यो महाराजो, ब्रह्मवादित्वमेव च"(म०भा०,अनु०,अ०५३-८) । वेदेषु अन्यानि अपि ईदृशि वृत्तानि उक्तानि सन्ति वै । "शूद्रयोनौ हि जातस्य सद्गुणान् उपतिष्ठत. वैश्यत्व भवति, महान् !, क्षत्रियत्व, तथैव च, आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते ।× ×ब्राह्मण , पतनीयेषु वर्तमानो विकर्मसु, दाम्भिको, दुष्कृतप्राय , शूद्रेण सदृशो भवेत् । यस्तु शूद्रो, दमे सत्ये धर्मे च सततोत्थित , त ब्राह्मण अह मन्ये, वृत्तेन हि भवेद् द्विज " (म०भा०वन०,अ०२१६-२१९, धर्मव्याध कथा)।(६५०)।"शृणु,यक्ष !,कुल नैव,न स्वाध्यायो,न च श्रुत,कारण हि द्विजत्वे तु, वृत्त एव तु कारणं"(म०भा०वन०अ०२१६)। "जन्मना जायते शूद्र",संस्काराद् द्विज उच्यते, वेदपाठी भवेद् विप्र , ब्रह्म जानाति ब्राह्मणो भवेत्" (अत्रिस्मृ०) । "शूद्रेण हि समस्तावद् यावद् वेदे न जायते । अश्रेयान् श्रेयसीं जातिं गच्छति आ सप्तमाद् युगात् ,(अत्राऽर्थो युग शब्दस्य पाञ्चवत्सरिको युग , या यु पू अ ११ ), शूद्रो ब्राह्मणताम् एति ब्राह्मणश्चैति शूद्रताम् ,क्षत्रियाज्जातमेव तु विद्याद्, वैश्यात् तथैव च । यादृग्गुणेन भर्त्रा स्त्री संयुज्येत,यथाविधि,तादृग्गुणा सा भवति,समुद्रेणेव निम्नगा । अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा, शारंगी मन्दपालेन, जगाम अभ्यर्हणीयताम्" (म०) । "ब्राह्मण्यां क्षत्रियाज्जात स सूत इति कथ्यते, प्रतिलोमजवर्णाना स हि एव एको द्विज स्मृत , सूतैश्च सह सम्बन्ध पूर्वं नृपतिभि कृत "(म०भा०,विराट०, कीचकाख्यान०) । "आर्ष्टिषेण , कौरव्य !, ब्राह्मण्य,सशितव्रत ,तपसा महता,राजन्!,प्राप्तवान् ऋषिसत्तम ,सिन्धुद्वीपश्च राजर्षि , देवापिश्च महातपा ,ब्राह्मण्य लब्धवान् अत्र,विश्वामित्रो यथा मुनि "(म.भा.शल्य )। (६६०) । "पुत्रो गृत्समदस्याथ सुनको, यस्य सौनक , ब्राह्मणा , क्षत्रिया चैव, वैश्या , शूद्रा तथैव च, एतस्य वंशे संभूता , विचित्रा कर्मभि कृता."

(वा०पु०)। "बृहत्क्षत्रस्य सुहोत्र, सुहोत्राद् हस्ती, य इदं हस्तिनापुरं आरोपयामास, अजमीढ द्विमीढ पुरुमीढा स्त्रयो हस्तिन' तनया, अजमीढात् कण्व, कण्वात् मेधातिथि, यत काण्वायना द्विजा'। "एते क्षत्रप्रसूता वै पुनश्चाङ्गिरस स्मृता, रथीतराणां प्रवरा, क्षत्रोपेता द्विजातय" (वि०पु०)। "पौण्ड्रकाश्च, औड्रद्रविडा, काम्बोजा, यवना, शका, पारदा', पह्लवा, चीना, किराता, दरदा, खशा, शनकैस्तु, क्रियालोपाद्, इमा क्षत्रियजातय, वृषलत्वं गता लोके, ब्राह्मण अदर्शनेन च"(मनु), संस्कर्तृणां,शिक्षकाणां, अभावाद्, इति यावत्, न केवलं जन्म विप्र मुखस्थानचर्णीकनात्। पुराणकाल अवस्थाया सम्यग्बोधाय चाधुना, उदाह्रियतेऽन्यस्यास्तु काचन ऐतिह्यकारिका। ईस त पूर्वकालेषु, रोमराष्ट्र यदाऽभवत् स्वराज्य,तदा,येभ्य कुलेभ्यो ये 'पुरोहिता' 'पाटिफ्रेक्स'-'हारस्पेक्स' 'फ्लामेना 'धर्म-कर्मणे,(६७०),अग्नी आहुतिदानाय,पशुयज्ञाय चापि ये, शकुनानां विचाराय अन्यस्मै च ईदृशकर्मणे, धर्माध्यक्षा वृता 'विप्रा' कुलेभ्यस्तेभ्य एव हि वृता शासनकर्तार, 'कान्सला', 'सेन्सारा' तथा, 'डिक्टेटरा','प्रीटरा'श्च 'प्राइटर' आद्याश्च 'क्षत्रिया'। यूरोपस्य युगे मध्येऽपि अवस्था एतादृशी हि अभूत्। राजयाक्षेषु धनाढ्येषु तेषु तेषु कुलेषु वै, कचित् भ्रातरोऽभूवन् 'भूपा' 'प्रिंस् आफ दि लैंड्' इति, अन्ये'प्रिंस् आफ् दि चर्च' इति, तेषां एवात्मजानुजा, 'बिशपा', 'ऐबटा', 'प्रीस्टा', मठाधिपतय, तथा, 'पोपा', 'कार्डिनला' चापि, विविधा 'धर्म-पा'इति। एवं बौद्धयुगे, ऽत्रापि भारते, समदृश्यत, एक सिंहासनआरूढो भ्राता, अन्यो भिक्षुनायक। एतादृशस्यऽचारस्य कारणं द्विविधं ननु, (१)अर्थशोप्य गुणव्यक्तौ, यथाऽनुक्रमत, कुले, उत्साहश्चापि युद्धेषु प्राचुर्यात् तु कुले खलु,कार्ययोर् उभयोश्चापि क्षमताया विभावन, जन्मना वर्ण 'इत्यस्य नियमस्यापि अभावत, स्व स्व-रुच्यनुसारेण कर्मणां वरणं तथा, (६८०),(२) एव, इच्छा च, बलिना कुलानां, द्वितयं तु तत्, शासनस्याधिकाराश्च, धर्मनेतृत्वं एव च, अस्माकमेव हस्ते स्यात् सदा, न च, कदाचन, हस्तक्षेपो भवेत् केषांचिद् अन्येषां, तथा, एतयो। ऐतिह्यकैर् ईदृशि पौराणी बुध्यते दशा, यथाऽन्यत्र तथैवाऽत्र मानवी प्रकृतिर्ननु। (६८३)।

अन्यानि पुराण प्रमाण वाक्यानि।

"एक एव पुरा वेद प्रणव सर्ववाङ्मय, देवो नारायणो, नान्य, एकोऽग्निर्,

यर्ण एव च । यस्य यत्लक्षण प्रोक्त पुंसो वर्णाभिव्यञ्जक, यदि अन्यत्रापि दृश्येत, तत् तेनैव विनिर्दिशेत्' (भा०स्क०७,७)। "एकवर्णं इदं पूर्वं विश्व आसीद्, युधिष्ठिर !, क्रिया कर्म विभेदेन चातुर्वर्ण्यं प्रतिष्ठित' (म०भा०वन०अ०१८०) 'जाति अत्र मनुष्यत्वे महामर्प !, महामते, सङ्करात् सर्ववर्णाना दुष्पराक्ष्या इति मे मति, इद आर्षं प्रमाण च 'ये यजामहे' इत्यपि, तस्मात् शील प्रधानेष्टं विदु, दे तत्त्वदर्शिन, तस्मिन् एवं मतिद्वैधे, मनु स्वायम्भुवोऽब्रवीत्, कृतकृत्या सर्वे वर्णा, यदि वृत्त न पश्यति' („१८२), (६९०) (न लभ्यते स्वय श्लोको, लभ्यापा तु मनुस्मृतौ, 'कृतकृत्यै' जन्मनैव, वृत्तहीनैं, विलोपित । अर्थोऽभ्याम्नि तु विस्पष्ट, वृत्त नो चेत् परीक्ष्यते जन्मना एव द्विजा सर्वे मस्यते पुनर् आत्मन कृतकृत्यान्, स्वर्क कृत्य न करिष्यति वस्तुत)। "न योनिर, नापि सस्कारो, न श्रुत, न च सतति, कारणानि द्विजत्वस्य, वृत्त एव तु कारण' („२१२)। "जात्या न क्षत्रिय प्रोक्त, क्षतात् त्राण करोति च, चातुर्वर्ण्यबहिष्ठोऽपि, स एव क्षत्रिय स्मृत" („शान्ति० ७२)। "शूद्रे चैतद् भवेल्लक्ष्म, द्विजे तच्च न विद्यते, न वै शूद्रो भवेच् छूद्रो, ब्राह्मणो न च ब्राह्मण" („१८७)। "न कुलेन, न जात्या वा, क्रियाभ्या वा ब्राह्मणो नहि, चाण्डालोऽपि व्रतस्थश्चेत्, ब्राह्मण स, युधिष्ठिर !, एकवर्णमिद सर्वं पूर्वं आसीद्, युधिष्ठिर ! क्रिया कर्म विभागेन चातुर्वर्ण्यं व्यवस्थित, सर्वे वै योनिजा मर्त्या, समाना, मपुरीषका, शूद्रोऽपिशीलसम्पन्नो गुणवान् ब्राह्मणो भवेत्, ब्राह्मणोऽपि क्रियाहीनो शूद्रात् प्रत्यवर भवेत् (७००), न जातिर्दृश्यते तावद्, गुणा कल्याणकारका, जीवित यस्य [illegible]मार्थं, धर्मार्थं यस्य जीवित अहोरात्रं चरेत् क्षान्तिं, त नर ब्राह्मणं विदु" („अनु०)। "× नष्टेषु मधुना सार्धं कल्पवृक्षेषु वै, प्रजा, स्वयभुव प्रभु जग्मु क्षुधाऽविष्टा प्रजापति, ब्रह्मा स्वयम्भूर्भगवान् × × दुदोह पृथिवीं इमा, (ओषध्यो जज्ञिरे तस्या) ग्राम्यारण्यास्तु ता पुन, × व्रीहयश्च यवाश्चैव गोधूमाश्च तिलादय × × उपज्ञा प्रथमा होता आदौ त्रेता युगस्य तु, × तत स तासा वृत्त्यर्थं वार्त्तोपायान् चकार ह, ब्रह्मा स्वयम्भू भगवान् दृष्ट्वा सिद्धिं [illegible] कर्मजाम्, संसिद्धायां तु वार्त्ताया, ततस्तासा स्वयम्भुव, मर्यादा स्थापयामास यथाऽरब्धा परस्पर, ये वै परिग्रहीतार तासा आसन् विधायका, इतरेषां कृतत्राणा, स्थापयामास 'क्षत्रियान्', उपतिष्ठन्ति ये तान् वै, बोधयन्तश्च, निर्भया, सत्य ब्रह्म यथाभूत ब्रुवतो, 'ब्राह्मणाश्च' ते ये चाऽन्येऽपि अबला तेषां,

वैश्यकर्मसु संस्थिताः, 'कीटादीन् नाशयंति' स्म पृथिव्यां,प्राग् , अतंद्रिताः'वैश्यान्' एव तु तान् आहुः 'कीनाशान्' वृत्तिसाधकान् ;'शोचन्तश्च द्रवन्तश्च',परिचर्यासु ये रताः,निस्तेजसो ऽल्पवीर्याश्च 'शूद्रां'स्तान् अब्रवीत्तु सः(७१०) । शान्ताश्च,शुष्मिणश्चैव, कर्मिणो, दुःखिनस्तथा ; तेषां कर्माणि धर्मांश्च ब्रह्मा तु व्यदधात् प्रभुः, संस्थितौ प्राकृतायां तु चातुर्वर्ण्यस्य सर्वशः । पुनः प्रजास्तु ताः मोहात् तान् धर्मान् नान्वपालयन् ; वर्णधर्मैर् अजीवंत्यो व्यरुध्यंत परस्परं । ब्रह्मा तमर्थं बुद्ध्वा तु याथातथ्येन वै प्रभुः,क्षत्रियाणां बलं दंडं युद्धं 'आजीवं' आदिशत् ;याजनाध्यापने चैव तृतीयं च प्रतिग्रहं, विप्राणां ; कृषि-गोरक्ष-वाणिज्यं च विशां ददौ ; शिल्पाजीवं भृतिं चैव शूद्राणां व्यदधात् प्रभुः ; सामान्यानि तु कर्माणि ब्रह्मक्षत्रविशां पुनः, यजनाध्ययनं दानं, समानानि तु तेषु च" ( वायुपुराणे, पूर्वभागे, अ० ८ ) । पुराणे तु भविष्येऽपि, ब्राह्मपर्वणि, विस्तरात् , अध्यायैः बहुभिश्चायं विषयः सुविचारितः, निर्णीता चाऽपि, विस्पष्टं, 'कर्मणैव हि वर्णता' ; कण्वआख्यानेन चैवापि पुराणेऽस्मिन् प्रदर्शितं, चातुर्वर्ण्यव्यवस्था हि नूतना विहिता यथा 'मिस्र' देशे च ऋषिणा,यत्र नऽासीत् पुरा तु सा । "पुरा कृतयुगे,राजन् !, ब्राह्मणाः वै तपस्विनः; न अब्राह्मणस्तदा,राजन् !,न अतपस्वी कथंचन; (७२०) ; तस्मिन् युगे प्रज्वलिते, महाभूते त्वनावृते,अमृत्यवस्तदा सर्वे जज्ञिरे,दीर्घदर्शिनः;ततस्त्रेतायुगं नाम,मानवानां वपुष्मतां, क्षत्रियास्तत्र जायंते पूर्वेण तपसाऽन्विताः, वीर्येण तपसा चैव तेऽधिकाः पूर्वजन्मनि मानवाः ये महात्मानस्तत्र त्रेतायुगे युगे,ब्रह्मक्षत्रं च तत्सर्वं यत्पूर्वमपरं च यत्, युगयोरुभयोरासीत् समवीर्यसमन्वितं, अपश्यंस्तु न ते सर्वे विशेषमधिकं; ततः स्थापनं चक्रिरे तत्र चातुर्वर्ण्यस्य संमतं" (वा० रामा०, उत्तर० अ० ७४ ) ।

"कृतं नाम युगं श्रेष्ठं,यत्र धर्मः सनातनः, कृतमेव, न कर्तव्यं, तस्मिन् काले युगोत्तमे; देव दानव-गंधर्व-यक्ष-राक्षस-पन्नगाः नाऽसन् कृतयुगे, तात !, तदा न क्रयविक्रयः, न सामऋग्यजुर्वेदाः, क्रिया नाऽसीच्च मानवी; अभिध्याय फलं तत्र, धर्मः सन्यास एव च न विग्रहः, कुतस्तंद्री, न द्वेषो, न च पैशुनं, न भयं, नापि संतापो, न चेर्ष्या, न च मत्सरः; तपः परमकं ब्रह्म,सा गतिर्योगिनां परा; आत्मा च सर्वभूतानां शुक्लो नारायणः तदा, (७३०); ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्च अकृतलक्षणाः कृते युगे समभवन्; स्वकर्मनिरताः प्रजाः; समाश्रयं समाचारं समज्ञानं च केवलं,तदा हि समकर्माणो वर्णाः धर्मानवाप्नुवन्,

एक देव-सदा-युक्ताः, एक-मंत्र-विधि-क्रिया ऽपृथग्धर्मास्त्वेकवेदाः,धर्मं एकं अनुव्रताः, अकामफलसंयोगान् प्राप्नुवंति परां गतिं; एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितं" (म० भा०, वन० अ०-१५१)। "पुरूरवस एवासीत् त्रयी त्रेतामुखे,नृप !,अग्निना प्रजया राजा लोकं गांधर्वमेयिवान्" (भा०)। (पाठकानां लेखकानां बोधह्रासात्तु, कालत, पाठास्तु विकृताः नूनं ; आशयः किन्तु सर्वथा स्पष्टः एवेतिहासानां पुराणानां च संमतः, यद्—आदिकाले नैवआसन् वर्णाः वेदाः तथैव च, मानस-आप्त-आदिसिद्धिभ्यो हि अग्निनांपेक्षितोऽपि च ; त्रेतायामेव वर्णांश्च, वेदाश्चौषधयस्तथा, अग्न्युद्दीसेरुपायाश्च,प्रजास्त्वासन् व्यवस्थिताः; पाश्चात्यानां च विदुषां प्रायो ह्येतादृशं मतं,मानवानां जीवनस्य विकासस्य युगैरपि;,७४०),युगानि गणयंति एते, परन्तु, अन्यादृशानि वै,अन्येषु अपि विशेषेषु मतभेदोऽस्ति भूरिशः)। बुद्धोऽपि भगवान्, योऽवतारो हि दशमः स्मृतः,धर्मसंस्थापनार्थाय,विष्णोर् जातस्तु भारते,सोऽपि ननु इमं एवाऽर्थं भूयोभूयः उपआदिशत्, "न जच्चा ( जात्या ) वसलो (वृषलो) होति,न जच्चा होति ब्राह्मणः;कम्मुना वसलो होति,कम्मुना होति ब्राह्मणः"(वसलसुत्त,२१)। बुद्धस्य समकालीनः, बन्धुश्च, भगवान् जिनः महावीरो, 'हिन्दु'-वरः तं एवार्थं शशास च, "कम्मुणा बम्भणो होइ, कम्मुणा होइ खत्तिओ, कम्मुणा वइसो होइ, सुद्दो हवइ कम्मुणा; सक्खं खु दीसइ तवोविसेसो न दीसई जाइ विसेस कोई"; ( साक्षात् खलु दृश्यते तपो-विशेषो, न दृश्यते जाति-विशेषः कोऽपि ); ( उत्तर-अध्ययन-सूत्र ) "अन्नदेसजाया, अन्नाहारवड्ढियसरीरा, जिनसासने पवन्ना सव्वे ते बंधवा भणिया", ( अन्याऽन्यदेशजाताः, अन्याऽन्यआहारवर्धितशरीराः, जिन-शासने प्रपन्नाः, सर्वे ते बांधवा. भणिताः );"मनुष्यजातिर् एका एव, जातिनामो-दयोद्भवा, वृत्तिभेदाद् हि तद्भेदः चातुर्विध्यं इह अश्नुते ; ब्राह्मणाः व्रत-संस्कारात्, क्षत्रिया. शस्त्रधारणात्, वणिजोऽर्थार्जनात् न्यायात्, शूद्राः न्यग्वृत्ति-संश्रयात्",(जैनागम)।(७५०)। भार्गवोऽपि इमं एवार्थं स्व-नीतौ वक्ति असदायं - "न जात्या ब्राह्मणश्चात्र,क्षत्रियो,वैश्यः एव वा, न शूद्रो, न च वै म्लेच्छो;भेदिता गुणकर्मभिः, ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं न ब्राह्मणाः? न वर्णतो,न जनकाद्, ब्राह्मं तेज प्रपद्यते ; ज्ञान-कर्मो-पासनाभिः देवताआराधने रतः, शांतो दांतो दया-लुश्च ब्राह्मणस्तु गुणैः कृतः ; लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी दुष्टनिग्रह-शीलो य स वै क्षत्रियः उच्यते ; क्रयविक्रयकुशलाः ये नित्यं पण्यजीविनः, पशु-

रक्षा, कृषिकरा, ते वैश्या कीर्तिता भुवि, द्विजसेवार्चनरता शूरा शान्ता जितेन्द्रिया, सीरकाष्ठतृणवहा ते नम्रा शूद्रसंज्ञका, त्यक्तस्वधर्माचरणा निर्घृणा परपीडका, चण्डाश्च हिंसका नित्य, म्लेच्छास्ते हि अविवेकिन" (शु० नी० अ० १)

उक्त, ब्रह्मा प्रकार एव वर्ण वृत्ति विभाजन, त्रेतायुगमुखे पूर्वं, अवधार्य तु तत्र यद् 'ब्रह्म (!)' शब्दस्तु बह्वर्थं स्मर्तव्योऽस्य, यथा 'मनु', (७६०), (१) 'महत्तत्त्व, बुद्धितत्त्व', यत् जगद्व्यापक सत्ता, धाता विधाता सर्वेषां नियमाना जगद्गते, तस्यैव यो रजोंऽशोऽस्ति, स 'ब्रह्मा' अस्ति विशेषत, महत्तत्त्वस्य सत्त्वांशो विष्णुरित्यभिधीयते, तमोंऽशश्च महेशोऽस्ति, पुराणपरिभाषया, सत्त्वद्गुणाभिमानेन, देवजीवास्तथैव, च, (२) गुरु, वृद्धतमो, मान्यो, 'मनो' रपि च य 'पिता', 'पितामह'श्च सर्वेषां, आप्तस्तु उपदेशक परः, (३) सर्वेषु 'यज्ञ'-कृत्येषु 'ऋत्विक् मुख्यो,' निरीक्षक, 'यज्ञ'श्च सर्व कार्यं सद् यत् लोकस्योपकारक, एते त्रय प्रधानार्था, 'ब्रह्म(!)' शब्दस्य हि स्मृता। 'मनो, महान्, मति, ब्रह्मा, पूर, बुद्धि, ख्याति, ईश्वर, प्रज्ञा, चिति, स्मृति, संविद्, विपुर (८), चोच्यते बुधे। × तत्त्वानां अग्रजो यस्मात्, महांश्च परिमाणत शेषेभ्योऽपि गुणेभ्योऽसौ, महान् इति तत स्मृत, × बृहत्त्वाद्, बृंहणत्वाच्च भावानां सलिलाश्रयात्, यस्माद् बृंहयते भावान्, 'ब्रह्मा' तेन निरुच्यते,। × बुध्यते पुरुषश्चात्र सर्वभावान्, हिताहितान्, यस्माद् बोधयते चैव, तेन बुद्धिर्निरुच्यते (७७०), × वर्तमानानि अतीतानि तथाऽनागतानि च, स्मरते सर्वकार्याणि तेनासौ स्मृतिरुच्यते, × यस्मात् पुरि अनुशेते च तस्मात् पुरुष उच्यते, × पर्यायवाचकै शब्दै तत्त्व आद्य तु गायते" (वायु०पु०पू०अ०४)। "कूटस्थो योऽक्षरोऽव्यक्तो हि, अन्तरात्मा, सनातन, स सिसृक्षु सहस्राशाद् असृजत् पुरुष प्रभुं, 'मानसो' नाम य पूर्वो विश्रुतो वै महर्षिभि, × मानसस्य इह या मूर्ति 'ब्रह्म(!)'त्व समुपागता, तस्यासनविधानार्थं पृथिवी पद्म उच्यते, × तस्मात् पद्मात् समभवद् 'ब्रह्मा' वेदमयो निधि, 'अहङ्कार' इति ख्यात· सर्वभूतात्मभूतकृत्" (म०भा०शां० १८०)। "महान् आत्मा, मति, विष्णु, जिष्णु शंभुश्च वीर्यवान्, बुद्धि, प्रज्ञा, उपलब्धिश्च, तथा ख्याति, धृति, स्मृति, पर्यायवाचकै शब्दै महानात्मा विभाव्यते" (अनुगी०)।

"आर्योनार्ययो कर्मेण व्यतिरेके साम्य, वर्णान्तरगमन मुत्कर्षापकर्षाभ्यां सप्तम

पञ्चमे वा" (गौतमधर्मसू० २-२ ६९, १-४-१८)। "अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ, धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं" (आपस्तम्बसू०)। "जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽथवा, व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरं" (याज्ञ० अ० १)। (७८०)। "कुलानि अकुलतां यान्ति, कुलत्वं अकुलानि च, अश्रेयान् श्रेयसीं जातिं गच्छति आसप्तमाद्युगात्, शूद्रो ब्राह्मणतां एति, ब्राह्मणश्चैति शूद्रता" (म०)। "तपो बीजं प्रभावैस्तु ते गच्छन्ति, युगे युगे, उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः। तपः श्रुतं च योनिश्च द्विजत्वे कारणं स्मृतम्। सङ्करे जातयस्त्वेता, पितृमातृप्रदर्शिताः, प्रच्छन्ना वा प्रकाशा वा, वेदितव्याः स्वकर्मभिः, शुचिरुत्कृष्टशुश्रूषुः, मृदुवाग्, अनहंकृतः, ब्राह्मणाद्याश्रयो नित्यं उत्कृष्टां जातिं अश्नुते' (म०)। 'वर्णार्थो 'जाति'शब्दोऽत्र पाञ्चसांवत्सरिकं युगं, वत्सराणां च पञ्चानां नामानि कथितानि अपि, संवत्सरो, परिवत्सरश्च, परिवत्सरः एव च, अनुवत्सरस्तथैव उद्वत्सरश्चेति पञ्च ते। (शब्दकल्पद्रुमे विष्णुधर्मोत्तरपुराणोद्धरणम्)। "संवत्सरोऽसि, परिवत्सरोऽसि, इदावत्सरोऽसि, इद्वत्सरोऽसि, वत्सरोऽसि। उषसस्ते कल्पताम्, अहोरात्रास्ते कल्पताम्, मासास्ते कल्पन्ताम्, ऋतवस्ते कल्पताम्, संवत्सरस्ते कल्पताम्" (यजु, २७ ४५ ३०-१५)। संवत्सरोऽसि, परिवत्सरोऽसि, इदादिकं शीतमयूखमाली, प्रजापतिश्चाप्यनुवत्सरः स्याद्, इद्वत्सरः शैलसुतापतिश्च" (वृ०सं० ८,१४)।(७९०)। परं अर्थे, परम् अर्थे, अपि, 'युग'शब्दः प्रयुज्यते, प्रपितामह इत्येकं, द्वितीयस्तु पितामहः, तृतीयश्च पिता ज्ञेयः, पञ्च पुत्रश्चतुर्थकं, पौत्रस्तु पञ्चमस्तत्र, षष्ठं स्वयं परस्य तथा, हित्वा 'पुत्रौ' च 'पौत्रौ' चाप्यस्य स्थानान्तराणि हि। 'स्वकर्मभिर्वेदितव्याः', कर्म शब्दोऽत्र सार्थकः, कर्मैव 'वर्ण' निर्णेता इत्याशयोऽभिमतस्ततः।

जन्मवर्णाभिमानस्य भयंकरः परिणामः।

यतः त्रयोऽपि द्विजाः भ्रष्टाः स्वधर्मात् प्रायशोऽधुना, देशिनः छलिनो जाताः, तारकाश्चापि मारकाः, पोषकाः शोषकाश्चैव, धारकाश्चापहारकाः, 'जन्मनैव हि वर्णस्य' सर्वं विलसितं त्विदम्। 'जन्मनैव हि वर्णता' चेद्, अलं कुर्याद् अपार्थकं "कृतकृत्याः सवर्णाः, यदि वृत्तं न पश्यति" (म०भा०)। जन्मनैव हि सिद्धः सन् 'क्षत्रियो', 'ब्राह्मणो' अथवा, रक्षां शौर्यं स्वकं कृत्यं, तपोविद्यात्मकं नु वा 'स्वधर्म'मप्य अकृत्वाऽपि 'स्वोच्चवर्णात्' न हास्यते, पूर्वां कृत्योचितां चापि कृत्य

अभावेऽपि लप्स्यते, एव विगतभार् इस कर्त्तव्य स्व प्रहास्यति, जिघृक्षिष्यति सर्वेषा अधिकाराश्च मत्तधो । सर्वो दण्डभिया लोक स्व स्वं कृत्य करोति हि, "सर्वो दण्डजितो लोको, दुर्लभो हि शुचिर्नर, दण्डस्य हि भयात् सर्वं जगत्" कृत्ये ऽधितिष्ठते(म०), (८००), "भयाद् एवाग्निस्तपति, भयात् तपति सूर्य , भयाद् इन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम "(उ०)।"ब्राह्मणो न अवमतव्य सद् असद् वा समाचरन्", "न जातु ब्राह्मण हन्यात् सर्वपापेषु अवस्थित", 'अविद्वो वा सविद्वो वा ब्राह्मणो मामकी तनु ", "बालोऽपि न अवमतव्यो मनुष्य इति भूमिप ,महती देवता ह्येषा नररूपेण तिष्ठति", 'सर्वेषा देवमुरयाना अशेशैर् विनिर्मित सद् असद् वा नृप कुर्यात् , सर्वं सह्य जनैस्तु तत्'—इत्यादीन्यान् श्लोकान् यत् केचन जना' मनु तन्त्र स्वापरायदण्डस्य वञ्चनार्थंय केवल, प्रक्षिप्ताश्च ईदृशा श्लोका स्वार्थसाधनतत्परै , असद् समाचरन्निश्च नून, इ यनुमीयते । नहि सद्-ब्राह्मण कश्चिन् , सर्वलोकहिते रत , पुण्यकारी, सदाचारी, ब्रह्म धर्म चर सदा, सत्य ब्राह्मणशब्दार्ह , वस्तु च्व इहार्हति । न अलाधसत्ये वापि राजा, प्रकृतिरञ्जक ,धर्मदण्डधरो,न्यायकरो,निष्पक्षमानस ,एव क्रूर अधर्मं च वस्तुमर्हति कर्हिचित् ,येन वृद्धिम् पापाना भवेद् भूयोऽपि पापिना ।(८१०)। मिथ्याश्लोकान्यैव इमे विरुध्यते मनूक्तिभि । नैवासौ 'ब्राह्मणो' य स्यात् "सर्वपापेष्वपि स्थित", असद् समाचरद् यस्तु स कथ 'ब्राह्मणो' भवेत् ? "योऽनधीत्य द्विजो वेद अन्यत्र कुरुते श्रम,स जीवन्नेव शूद्रत्व आशु गच्छति सान्वय , न तिष्ठति तु य पूर्वां (सन्ध्या), नोपास्ते यश्च पश्चिमा, स शूद्रवद् बहिष्कार्यं सर्वस्माद् द्विजकर्मण ' (म०), नैतद् घोरतम पाप, वेदानध्ययन तु यत्, सर्वपापसमं नापि सन्ध्योपासनवर्जन, शूद्रत्वञ्चापि तत्रापि न्यो हि मनुना धृत ,ब्राह्मण्य अवशिष्येत सर्वपापस्थितौ कथ? ' ये बकव्रतिनो विप्रा , ये च मार्जारलिङ्गिन ,न वारि अपि प्रयच्छेत् तान् ,धात्मा येणापि नार्चयेत् । गुरु वा बालवृद्धौ वा, ब्राह्मण वा बहुश्रु , आततायिन आयान्त हन्याद् एवाविचारयन्"(म०),"(अग्निदो,गरदश्चापि,शस्त्रोन्मत्तो,धनापह , क्षेत्रदाराहरश्चापि, षडेते आततायिन " (शु०नी०), (यस्मात् आतत आयाति, 'अति'च अस्य अयन तथा,'आततायी'इति नाम्ना इह ततोऽसौ अभिधीयते)।(८२०) "दण्डो हि सुमहत्तेजो, दुर्धरश्च अकृतात्मभि , धर्माद् विचलित हन्ति नृपमेव सबान्धव, दुष्टेषु सर्वयत्नाश्च, क्षिपेरन् सर्वमतय , सर्वलोकप्रकोपश्च भवेद्,

दण्डस्य विभ्रमात्, न राजा प्रणयन् सम्यक्, त्रिवर्गेण अभिवर्धते कामात्मा विषम क्षुद्रो, दण्डेनैव निहन्यते, अदण्ड्यान् दण्डयन् राजा, दण्ड्यांश्चैवाप्यदण्डयन्, अयशो महद् आप्नोति, नरकं चाधिगच्छति" (म०)। आशयाश्च, तथाऽऽज्ञाश्च, पुण्या एवंविधा मनो, क्षिप्तश्लोकशयान् नाथ भगवान् वक्तुमर्हति। स्वय भीष्ममुखाद् व्यास प्रशास्त्येव युधिष्ठिर—"पुत्रवच्च प्रजा स्वाश्च भृत्यांश्च परिपालय। योग क्षेमश्च ते नित्य ब्राह्मणेषु अस्तु भारत, अनर्थो ब्राह्मणस्य एव यद् वित्त-निचयो महान् श्रिया हि अभीक्ष्ण सवासो, दर्पयेत्, सम्प्रमोहयेत्, ब्राह्मणेषु प्रमूढेषु,धर्मो विप्रणशेद् ध्रुव, धर्मप्रणाशे, भूताना अभाव स्यात्, न सशय"। धिक् तस्य जीवित राज्ञो, राष्ट्रे यस्य अवसीदति द्विजो वा,ऽन्यो मनुष्यो वा, शिबिर् आह वचो यथा,(८३०),यस्य स्म विषये राज्ञ स्नातक सीदति क्षुधा अवृद्धि एति तद्राष्ट्र, विन्दते 'सहराजक', ( समूहीभूय राजान तद् अन्येऽभिद्रवति यं, प्रजाकोपाद् विप्लव च विन्दते 'तद्धि अराजक)। क्रोशन्त्यो यस्य वै राष्ट्राद् ह्रियन्ते तरसा स्त्रिय, क्रोशता पतिपुत्राणा, मृतोऽसौ,न स जीवति, अरक्षितार हर्त्तार विलोप्तार अनायक, त वै राजकलि हन्यु प्रजा, सन्नह्य, निर्घृण, अह वो रक्षिता इत्युक्त्वा, यो न रक्षति भूमिप, स सहत्य निहन्तव्य श्वा इव सोन्माद आतुर, पाप कुर्वन्ति यत् किंचित् प्रजा राज्ञा हि अरक्षिता, चतुर्थ तस्य पापस्य राजा विन्दति भारत" (म० भा० अनु० अ० ६१)। बहवश्चापि राजान उद्दण्डा दण्डिता भृश, प्रजापीडापरा ये हि, पूर्वकाले महर्षिभि। "वेनो विनष्टो ऽविनयात्, नहुषश्च नराधिप" (म०)। अर्वाचीनेतिहासेऽपि दुष्टा शिष्टैर्हता नृपा बहवो, बहुदेशेषु, न अधर्मो निष्फलो भवेत्। तृतीयस्य द्विजस्यापि वैश्यस्य विषये स्मृत, धनातिगृध्नु, कृपण, पात्रेभ्यो न ददाति य, जनता हितकार्यार्थं, धन तस्य हरेत् नृप,(८४०),"यो वैश्य स्याद् बहुपशुर्, हीनक्रतुर, असोमप, कुटुम्बात् तस्य तद्द्रव्य आहरेद् यज्ञसिद्धये; आदाननित्याच्च अदातुर् ( विप्रस्यापि ) अप्रयच्छत, योऽनाहिताग्नि शतगु, अयज्वा च सहस्रगु; तयोरपि कुटुम्बाभ्यां आहरेद् अविचारयन्"(म०)।अथवा,यदि न क्लिष्टा श्लोका स्ते, तर्हि तेऽन्यथा व्याख्येया स्यु, प्रसगाना अवस्थाना विवेकत, ("न जातु ब्राह्मण हन्यात् सर्वपापेष्वपि स्थित, महती देवता हि एषा राजा"—इत्यादयस्तु ये) 'देशकालनिमित्ताना भेदैर्धर्मो विभिद्यते, अन्यो धर्म समस्थस्य, विषमस्थस्य

द्वापर, न हि सर्वहिता कश्चिद् आचार मवप्रर्तते, तस्माद् अन्य प्रभवति, सोऽपरं बाधते पुन आचाराणां अनैकाग्र्य तस्मात् सर्वत्र दृश्यते, नहि एव ऐकान्तिको धर्मो, धर्मस्तु आवस्थिक स्मृत" (म०भा०शा०)। कस्मिंश्चिद् अपि पूर्वस्मिन् काले, अन्यान्यपरिस्थितौ, भवेयुर् उचितान्यानकस्तोरा, नैव अद्य ते तथा—यद् दृष्टोऽपि नो दृश्यते 'ब्राह्मण','क्षत्रियो'ऽपि वा। समये समयेऽस्तो हि, स्मृतयोऽपि यथा नवा कृता, आदिस्मृतेर् एव मनो, संकोच विस्तरे भवतो, न तु मूलोऽस्य सिद्धान्त परिवर्तित, वर्णाश्रमात्मको वस्तु, "गुण कर्म विभागश", स्वभावात् तु गुण, तस्मान् कर्म, वर्ण. तत स्मृत।(८५२)।

'जन्मना वर्ण' इत्यस्य सत्य अर्थ च ?

'जन्मना एव हि वर्णोऽस्ति'–इति अभीष्ट यदि कस्यचित्, व्याख्या तत्रापि कार्या इयं, सर्वसम्पादनाधिका—'जन्मना एव हि शूरोऽस्य, बलवान् जन्मनाऽपर, जन्मना एव हि रुग्णोऽस्य, देहेऽस्य जन्मना दृढ, सद् वा कवितासारि सद् जाता ऽस्य जन्मना, जन्मना मह ज हास्य चक्रवर्तित्वलक्षण जन्मनैव हि जातोऽस्य गीतविद्याविशारद, अन्यस्मात् जन्मनैव अभितेषु विचक्षण, विलक्षणाऽन्यस्य नवि ओषधीषु तु जन्मना, अहिर्वातिल अस्मानि निर्भयस्य तु जन्मना, परस्य भूषिता तद्वद् वहुव्यापारदक्षता, धनसंचयकर्तृणि भाग्यानि अपि च, जन्मना'। सिध्यतु व्याख्यया एवं हि,'जन्मनाऽपि च वर्णता'। कृष्णो भवति 'जवाल, बृहज् जंघ, पतोऽर्जुन, सतत भ्रमणं रत ततोऽस्य ननु जन्मना',(८६०), एक द्वार, परो भीर, क्रूरोऽन्यो, अन्यो दयापर, कर्ता चाऽन्यो ऋजुश्चान्यो, धीमान् एको, वि धी पर, काणोऽयं, बधिरोऽस्य वा, मूक, खञ्जो, उदर्रकिम, सर्वाङ्गसुन्दरो वाऽत्र अन्यो, भवति 'जन्मना'। प्रकृतोना, स्वभावाना, वीरुध्यमनयोस् तथा, भिन्नस्य विविध हि एतद् अखिल खलु 'जन्मना'—एव चेद् दृ यते वाक्य,'जन्मना वर्ण' इति अद, सत्य तन् नूनं अस्ति एव, वय च मम ओम् इति।

गुण कर्म वर्ण-सिद्धान्त सत्पस, गुणभेदकारण।

कर्मणा यदि वर्णं स्याद्, कृत दृष्ट्वा, विवेकत, कर्माणि प्रविभज्यते "स्वभाव प्रभवैर्गुणै, स्वे स्वे कर्मण्यभिरत संसिद्धिं लभते जन, स्वधर्मे निधन श्रेय, पर धर्मो भयावह" (गी०)। स्वधर्मो हि स्व कर्माणि, स्वभावज गुणो स्थित,

स्वभाव प्रकृतिस, तज्जा गुणा, सत्त्व रजस्, तम, अवस्थाभेदतोऽन्योन्य जन यन्त्यपि ते गुणा, परस्पर चाऽऽश्रयन्ति, तथैव अभिभवन्त्यपि सयोगश्च सदा तेषा, न पार्थक्य कदाचन (सा० का०, गौ०)। एकयोरेव दम्पत्योर् अतस्तु विविधा प्रजा प्रत्यक्षमेव दृश्यते, शास्त्रेऽप्योऽत्र नार्थवान्। (८७०)। 'न नाम अनुपपन्न हि प्रत्यक्षे" किंचिद् दृश्यते "प्रमाणानि च प्रत्यक्षपराणि", अत्र न सशय, 'प्रमिति प्रत्यक्षपरा" इत्यादि वै सर्वसमत (न्या०)। "न श्रुताना शतमपि घट पटयितु क्षम" (भामती)। "न प्रमाणान्तरेण इह, माहात्म्य अभिभूयते प्रत्यक्षस्य, तथाऽन्यानि प्रमाणानि, अखिलानि अपि, लभते व्यवहार तु प्रत्यक्षस्य बलेन हि" (योगभाष्य)। एकपित्रोर्भिन्नगुणा प्रजायन्ते सुतास्तु यत्, तत्र हेतु समाख्याति ज्योतिष, वैद्यक, तथा, सर्वज्ञानमयश्चापि स्वय हि भगवान्मनु। गर्भाधानमुहूर्तस्य प्रभावस्तत्र कारण, शारीरमानसावस्थाभेदा पित्रोस्ततो मत। "सत्त्व रजस्तमो वा, त्रिशाश यस्य भास्करस्य तादृग् बलिन सदृशी मूर्ति, कुरुते वा जातिकुलदेशान्। गुरु शशि रवय सत्त्व, रज सित ज्ञौ, तमोऽर्कसुत सौम्यौ, एतेऽन्तरात्मनि स्वा प्रकृति जन्तो प्रयच्छन्ति। यो यो ग्रहो बलिष्ट, प्रसूतिकाले नृणा स्वमूर्तिसम कुर्याद् देह नियत बहवश्च समागता, मिश्रं' (वराहमिहिर, लघुजातक)। ग्रहाणा च स्वरूपाणि वर्णितानि पृथक्पृथक्। (८८०) ९*

*आत्मशान्तिवा चित्तभावा मृच्यन्ते ग्रहनामभि। मनुष्याणा स्वभावाना शान्ती, सम्वादिनी मति, कलहाना प्रशमनी, विपदा प्रतिकारिणी, विवेकिनी सदसतो, बुद्धिर्या, असौ बृहस्पत'। आत्मज्ञानवती प्रज्ञा सर्वत्र ब्रह्मदर्शिनी, आत्मवत्सर्वभूतेषु पश्यन्ती अपि विवेकेन आचरन्ती तथाऽपि एषा, सौशील्यपरिवर्धिनी, अतर्ज्ञानप्रधाना च बाह्यज्ञानोपबृहिता, प्रत्यक्चेतनसम्पन्ना, पराग्ज्ञानवती तथा, निरन्तर सावधाना सम्यग्दर्शननिष्ठिता, स्वस्य चापि अपराणा च गुणदोषविवेचिनी, सर्वकालेऽविलुप्तधी प्रत्युत्पन्नमति, तथा अनागतविधात्री च भूतवृत्ते सुशिक्षिता—सा वै 'जीवो', 'गुरु,' 'सू' 'रि', सूरिरक 'सर्ववित्मति'। 'ॐ बृहस्पते। अति यद् अर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच् छवस, ऋतप्रजात।, तद् अस्मासु द्रविण धेहि चित्र (१०), ॐ गणाना त्वा गणपति हवामहे, कवि कवीना उपम श्रवस्तम, ज्येष्ठराज ब्रह्मणा, ब्रह्मणस्पते', आ न शृण्वन् ऊतिभि सीद सादन, न त अहो न दुरित कुतश्चन, नारातयो तितिरु, न द्वयाविन, विश्वा इद् अस्माऽध्वरसा

"शुक्रशोणितसंयोगे, यो भवेद्दोष उत्कट प्रकृतिर्जायते तेन", इति सुश्रुत-शासन सु०)। सुश्रुते चरके चैव षड्‌वय प्रकृतय स्मृता, पित्तवातकफाना या

---

विवाधसे च सुगोपा रचासि,ब्रह्मणस्पते। ॐ(ऋग् वेद)। ॐ वेदाहमदाभि सवितुर्वरेण्य भर्गो देवस्य कवयोऽन्नमाहु, कर्माणि धियम् तदु ते प्रब्रवीमि, प्रचोदयन् सविता याभिरेति, सुनीतिभिर्नयसि, त्रायसे जन, तस्तुभ्य दाशान्न त अंहोऽश्नवत्, ब्रह्मद्विष स्तपनो मन्युमीरसि, बृहस्पते।, महिमसे महित्वन (अथर्व०)। 'बुधो' बहिर्मुख ज्ञान, त्रिशलं विविध तु यत्,चतुर्मुख च चातुर्य, दर्शन स्पर्शन बहु विषयाणां, चञ्चलत्व (न'सम्यग्दर्शनं खलु), राजसी कामसपृक्ता बुद्धिर्—'बुध' इति दृश्यते। चौधाद्धु निग्रही भूयो–'मङ्गलो'ऽव अमंगल, रजोमयो विशेषेण, क्रूरोऽसौ भूमिजो ग्रह। 'सोम' सौम्यो, मृदुरपि, मिष्टभाषी, सुशोभन, बहुप्रिय, प्रीतिकर, व्यभिचारा प्रदारदा, क्षयिष्णुश्चापि वर्धिष्णु रोगप्रवण एव च, रजोऽधिक, अल्पसत्त्वश्च तामसोऽल्पतर तथा। 'शुक्र', बोधेन सत्त्वज्ञ ज्ञानविज्ञानवान् प्रभु,'असुराणां' गुरु, गाम्भाद् बृहस्पतिसमोऽपि च, (१०), विज्ञानेष्वधिकस्तस्मात्, न प्रज्ञान तथा स्थिर, तेजस्वी च, शुभाकांक्षी दययाऽसुरसम्पदाम्, जानन् यत् सा महादेवी, "ससारस्थिति कारिणी" महामाया, महाकाली, महाकालस्य गेहिनी तच्छक्तिरूपिणी, नित्य द्वन्द्व काल यते जगत्, सुरासुराभ्यां द्वाभ्यां वै कुर्वती उदधिमथन उभौ च पालयंती एव, जगन्ना टकधारिणी, रसयन्ती रसौम् तस्य, हसती रुदती तथा। बलिं बोधयन् शुक्र सद् गुरु, सावधानयन् वामनस्य छलान् त हि, शिक्षयन्, वाक्य अब्रवीत् 'सत्य पुष्पफल विद्यद्, अनृतं मूल आत्मन" (भा०)। अविद्या चाऽपि विद्या च, मूल चापि फल क्रमात्, जगद्-अश्वत्थ वृक्षस्य भवतो हीय नित्यशः, न फलेन विना मूल न मूलेन विना फल, न अनृतेन विना सत्य, न सत्येन विनाऽनृत, नान्धकार विना ज्योति, न प्रकाश विना तम, न सुखेन विना दु ख, न दु खेन विना सुख, न पापेन विना पुण्य, न पुण्येन विनाऽपि अघं,(२०),न दैत्येन विना देवो,न देवेन विनाऽसुर,न जीवेन विना शुक्र,न शुक्रेण विना गुरु, उभाभ्यां एव चक्राभ्यां सिध्यतीह जगद्गति, तस्माच्च् छत्रु च मित्रे चाप्येतौ शुक्रबृहस्पती, उभावपि महाविद्यौ, उभावपि महा-मती, महाशक्तिर्, महाकाली, महालक्ष्मीर्, महागिरा, या, ऽस्या एव हि उभौ हस्तौ, दक्षिणो वाम एव च। सत्त्वाधिको, रजोविद्, शुक्रोऽसुरगुरुस्तत। 'केतुर' अस्थिरता, भ्रान्ति यत्र तत्र, यदृच्छया। 'राहुश्' छाया,ऽन्धकारो हि, तमो, मोहो

माग्रणा भेदत: कृता । सात्त्विका सप्त, षट् तत्र राजसास, तिस्र एव तु तामसा: वर्णिता, किन्तु 'भाक्ता लक्षणतो", नहि सर्वा शक्या प्रसख्यातु, प्राधान्येनैव

---

ऽविवक्षिता 'आलस्याद् अन्नदोषाच्च मृत्युर् विप्रान् जिघांसति" (मनु) 'निद्रा ऽऽलस्यप्रमादोत्थ सुख तामस उच्यते"(गी ), जिह्वालौल्याद्अन्नदोष, उपस्थस्याऽपि अनिग्रहात्, प्रमादो, मदनो, मारो, मन्मथो, मादको, मद, जायते प्रबलत्वे तु राहु रागा मृषा बहु शारीरा मानसाश्चाऽपि, क्रूरा पीडाकरा भृश। तमोऽधिकौ उभौ एव केतौ किंचिद्रजोऽपि च। रजस्तमोमयो घोर सूर्यपुत्रोऽद्भुत 'शनि', कदाचिद् भ्रामयति एव, कदाचित् स्थिरयेद् भृश, कदापि उन्मादकारी स्याद्, दीर्घध्यानकरो ऽन्यदा।(४०)।ग्रहराजस्तु भगवान्'सूर्य 'सर्वनियामक ,"ॐआकृष्णेन रजसा वर्तमान, निवेशयन् अमृत मर्त्य च, हिरण्ययेन, सविता, रथेन, देवो याति, भुवनानि पश्यन्। सविता पश्चात् सविता पुरस्तात् सविता उत्तरात्तात् सविताऽधरात्तात् सविता न सुवतु सर्वताति सविता नो रासता दीर्घ आयु। श नो भव चक्षसा, श नो अह्ना,श भानुना, श हिमा श घृणन,यथा श अध्वन् शमसद् दुरोणे,तत् सूर्य !,द्रविण धेहि चित्र। विश्वा हा त्वा सुमनस सुचक्षस प्रजावन्तो अनमीवा अनागस, उद्यन्त त्वा मित्र महो दिवेदिवे ज्योग्जीवा प्रतिपश्येम, सूर्य!" (ऋग्वेद)। श्रेष्ठराजत्वबुद्धिर्या सा 'सूर्य' इति वेत्स्यते, शिष्टसमाह्विणी शक्तिर्, दुष्टनिग्रहकारिणी, निबर्हणी च पापाना, तेजसा नित्यभासिनी, प्रकाशिनी सुसत्त्वाना, तमसा अभिभाविनी, जगता सद्व्यवस्थाया, जीवाना च, नियामिनी, सूर्यस्य उभौ हि सचिवौ ज्ञिग्धौ शुक्रबृहस्पती, मनूना प्रभव सूर्य, महत्तत्त्वमयो महान "सर्वेषा अवताराणा निधान बीज अव्यय" (भा०), देवाना आदिदेवोऽसौ, आद' त्योऽसौ हि कीर्त्यते एन परिक्रमते हि ग्रहा सर्वेऽपि अहर्निश, विराजमा सम्राट् अभितो भगिनो यथा, "कालेन चानव च्छेदात् पूर्वेषा अपि अय गुरु" (यो० सू०) यत कालस्य गणना सम्भाव्या एव हि नाभवत्, प्राक् प्रादु० र्भवनात् स्वस्य सवितुर्यदा मन, अयं 'स्वयम्भूर्भगवान्, अव्यक्तो व्यजयन्"उभौ, 'इद' दृश्य, तथाऽस्मान,"प्रादुरासीत् तमोनुद", "उद्बभौ स स्वय चैव', निबर्ह तमोऽखिल, "उद्बबर्ह आत्मनश्चैव' एतद् मत "सद् असद् आत्मक', 'काल, काल विभक्तीश्च' सर्वा एता 'ससर्ज" (मनु),सर्वसत्त्वमय सूर्य महासात्त्विक एव स, तत्समेनापि रजसा सत्त्व अस्य परिष्कृत, रजोमात्राऽनुविद्ध बुद्धिसत्त्व भवेन् ननु, धर्मज्ञानोपग चापि वैराग्यैश्वर्यग तथा" (यो० भा०)। (१४)।

लक्षण, "महाप्रकृतयस्त्वेता रजस्सत्वतम कृता "(सु०), "ब्राह्मादिषु विवाहेषु (सात्त्विकेषु) अनुपूर्वश ,ब्रह्मवर्चस्विन पुत्रा जायंते शिष्टसम्मता:, (रजस्तम प्रधानेषु) नृशंसाऽनृतवादिन जायंते दुर्विवाहेषु ब्रह्म धर्म-द्विप सुता , अनिन्दितै विवाहै तै अनिंद्या भवति प्रजा, निन्दितैर्निन्दिता नृणा, तस्मान् निंद्यान् विवर्जयेत्" (म०) । सगमे सात्त्विके नूल सात्त्विकी भवति प्रजा , रजस्तमोऽधिके तद्वत् राजसी तामसी तथा , स्त्रीपुंसयोर् यथा भावो मिश्रणे स्यात् शरीरयो , उत्पद्यते नयो देह तादृग्भावेन भावित । दुर्वृत्ता जार जन्मानो भवंति, अत्र । कारणं सदैव गर्भाधाने पत् पुंस्त्रियो दुष्टभावता।(८१०)। दृश्यते जन्मपत्रेषु बालकाना अनेकदा कुलव्यासे विभिन्नस्य वर्णस्य खलु लिखितिः । "सत्त्वाधिको ब्राह्मण स्यात् , क्षत्रियस्तु रजोऽधिक , तमोऽधिको भवेद् वैश्य , गुणसाम्यात्तु शूद्रता"(म०भा०) "सत्त्वगुणो ब्राह्मणो वर्णे , क्षत्रियस्तु रजोगुण , तमोगुणस्तथा वैश्य गुणसाम्यात्तु शूद्रता" ( भविष्य पु० ३,४,२३ ) । सत्त्वविद्ध रजश्चापि, सत्त्वविद्ध तमस्तथा, द्विजत्वमुत्पादयति क्षत्रिये,विशि चैव,हि , रजस तमसो विद्ध एवं चैवाऽल्पभागशः, द्विजत्वमुत्पादयति गुण सर्वं हि ब्राह्मणे । विसर्तव्य शूद्रादिषु न पुनर्—त्रिगुणेष्वपि, नैक कश्चित् स्वरूपेणास्ति उत्तमोऽधम एव वा , अवस्थाभेदतश्चापि, प्रयोगस्य च भेदत ,न कोऽपि दूषण कुर्यात् , न कोऽपि ननु भूषण । रजोऽधिक स्मृतो ब्रह्मा, विष्णु सत्त्वाधिक स्मृत , तमोऽधिक शिवश्चापि , त्रयश्चापि महेश्वरा । "सत्त्व ज्ञान, रज कर्म, तम इच्छा (अज्ञान) । इहोच्यते" (म०) । एतयोरेव विश्लेषस्तु जायते विविधा प्रजा , चत्वारोऽपि यथा वर्णा गिराद्गुद्विजयो मनु, (९००) रजोऽधिका ,तम प्राया ,चापि सत्त्वतो प्रजा ,एव सत्त्वाधिकाश्च एव अन्यथोऽपि, क्वचित् कश्चित् । "अमैथुना प्रजा पूर्वं , न ता ववृधिरे , तदा मैथुन्य असृजद् ब्रह्मा , प्रजा ववृधिरे तत , वैचित्र्य चाभवत् तासा"—पुराणे विवदि पठ्यते । यत्र न व्यभिचारस्य शका काचिद् मनाग् अपि , पति पत्नीव्रतो यत्र, पत्नी चापि पतिव्रता, परस्परं भृशा रता, परस्पर अनुव्रतौ, तत्रापि भाव भेदेन, सर्गे सर्गे, ऋतौ ऋतौ, जायंते एव प्रत्यक्ष भिन्नप्रकृतय सुता , केचित्तु सदृशा मातु कश्चित् सदृशा पितु , (अतो गाथा प्रवृत्ता इव, "पुत्रो मातृमुख शुभ , तथा पितृमुखी कन्या", प्रेमाऽधिक्यस्य सूचनात् ), उभयोर्विसदृशा केचित, विसदृशाश्च परस्पर । (९०७ श्लो०, २ अध्याये ४९० श्लोका: ) ।

## ३ अध्यायः

### कामशास्त्रस्य भ्रंशः ।

अन्यश्च वर्त्तते हेतुर् वैरस्ये पितृपत्न्योः । यत्तु अन्यशास्त्रवद् भ्रष्टं कामशास्त्रं; ततोऽधिकं अपि ; यत् पामरं जातं लोकशास्त्रायतोऽधुना । गार्हस्थ्यस्य हि तच्छास्त्रं दाम्पत्यस्य उत्तमस्य च, चतुःषष्टिकलानां च, गृहोपकरणस्य च, उद्यानानां कृषीणां च, सत्यस्याऽर्थस्य चैव हि, सौन्दर्यस्य भगस्तवस्य स्त्रियाः पुंसः तथैव च, उत्कृष्ट-सन्ततेश्चापि, रति-प्रीति-विवर्धकं; तत् शिष्यतेऽधुना नूनं मैथुनायैव केवलं; पशूनां अनुकारेण शास्ति चित्ररतानि च, चत्वारि चापि अशीतिश्च, योगासनविवर्त्तनः । ईदृशाद् अनुकारात् तु पशूनां, खलु, संगमे, भावोऽपि तादृशो भावी, तादृशी च प्रजा ध्रुवं । अतः एव हि दृश्यंते बहवः पशुवज् जनाः, कुबुद्धय , कुरूपाश्चापि, अथ किं, पशुवद्गुरवः, काम-क्रोध-भय-अमर्ष-तर्ष मोह-मदैर्भृताः, राजसास्तामसा-श्चापि; सात्त्विकास्तु क्वचित् क्वचित् । स्त्रीपुंसयोर्विवाहस्तु तदैव भविता उत्तमः, यदा न केवलं तत्र मिथुनं स्थूलदेहयोः, अन्योऽन्यऽाश्लेषणं, किन्तु, सूक्ष्मयोरपि वर्ष्मणोः (१०) । सूक्ष्मयोरेव हि श्लेषः सम्बन्धे गुरु-शिष्ययोः । प्रीतिर्हि लक्षणं, चित्तमेलनरूपा हि तत् सुस्फुटं । अतो वैवाहिको मंत्रः, औपनायनिकस्तथा, एकः एवाऽस्ति, शब्दस्य भेदेन एवस्य एव हि; "मम व्रते ते हृदयं दधामि, मम चित्तं अनु चित्तं तेऽस्तु, मम वाचमेकमनाः शृणुष्व, बृहस्पतिस्त्वा नियुनक्ति मह्यं" (वे०); प्रसबंधे तु मंत्रेऽयं विवाहे परिवर्त्यते, पादे चतुर्थे, यत्, स्थाने देवऽादेष्टुः बृहस्पतेः, आहूयते प्रार्थ्यते च 'प्रजानां' जनकः 'पतिः' । पिता चापि, गुरुश्चापि, बाले स्वस्या-न्तिके तु यद् आद्ये रक्षति कालं तु कश्चित्, तद् गर्भधारणं, यथा मातुः स्थूलदेहे, तथा सूक्ष्मे तयोरपि । ग्रन्थस्यापि नवीनस्य कर्तुर्मस्तिष्के एव हि, एवंमाधीयते बीजं संयोगेन केनचित्, ग्रन्थस्य हृदयं तत् च, तत्त्वं, सारं च, मर्म च; बहुकालं रक्ष्यते च, वर्ध्यते च प्रयत्नतः, परिष्कृत्य ततश्चायं साङ्गोपाङ्गः प्रकाश्यते; एवं विचारजातस्य जनन, चित्तदेहतः सूक्ष्मात्, ऊर्ध्वं गतेः पुष्टाद् रेतोभिर् ध्यानवेगतः । कामशक्तेः परिणतिः उत्तमा एतादृशी मता (२०) । काम-शास्त्रीय-कामस्तु केवलं न हि मैथुनं; ज्ञानेन्द्रियाणां पंचानां विषयाः ये परिष्कृताः, ललितआस्वादनं तेषां कामः सर्वोऽपि सात्त्विकः ; सूर्योदयाऽस्तौ, सरितः, "आपो ज्योती रसोऽमृतं" (वे०), महीधराणां माहात्म्यं आश्चर्यं गौरवं गुरु, शोभा समुद्रवेलायाः, ताराऽाढ्यं नभो महत्, पुष्पो-

द्रुमो वसन्ते च, वृक्षा बहुफलानता , साम-गान विहगानां उष काले मधुस्वन, शीत-मन्द सुगन्धस्य समीरस्य निषेवण, पान 'अमृतवर्षस्य' मुहूर्तैक तदैव हि—रसेषो रसन सर्व उत्कृष्ट काम एव हि। प्रकृते सुषमा सन्ध्याकाले पुण्ये विलोक्यते,या ऊर्जस्वल विराड्रूप ईश परमभास्वर—ताञ्चा चिति 'भस्म' अस्मिन्, व्योम श्याम 'गजाजिन', आकाशगंगा 'गंगे व, 'भाले' प्रत्यक्षचन्द्रमा ,'भुजगा' वेष्टितात्मन्य ग्रहनक्षत्रतारका रेखा , येषा अभिख्यापि नित्य कुंडलिनीगति , चन्द्रतारामयी ज्योत्स्ना रात्र्या, भास्करभा दिने, सर्वप्राणमयी 'देवा' शक्तिर्धारिणी सदा, सर्वेषां 'ब्रह्मणो अंडानां' सवित्री 'भ्रामयित्री' अपि, माया चाध्यात्ममोहशाना जीवानां 'भ्रम'कारिणी (२०)। 'उत त्व पश्यन् न ददर्श वाच,उत त्व शृण्वन् न शृणोति एना,उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा । चित्र देवानां उदगाद् अनीक चक्षुर्मित्रस्य वरुणस्याग्ने , आ प्रा द्यावापृथिवी अंतरिक्ष, सूर्य आत्मा जगतस्तस्थुषश्च । विश्वाहा त्वा सुमनस सुचक्षस , प्रजावतो अनमीवा अनागस , उद्यन्त त्वा मित्र महो दिवेदिवे, ज्योग्जीवा , प्रतिपश्येम सूर्य'' (वे०)। ''विशेषस्तस्य देहोऽय स्थविष्ठश्च स्थवीयसा,यत्रेद दृश्यते विश्व भूत भव्य भवच्च सत्, द्यौर् अक्षिणी, चक्षुर् अभूत् पतंग , पक्ष्माणि विष्णोर् अहनी उभे च,× हासो जनोन्मादकरी च माया, दुरन्तसर्गो यदपांगमोक्ष , ब्रह्मा उत्तरोष्ठो,अधर एव लोभो, धर्म स्तनो,ऽधर्मपथोऽस्य पृष्ठ,× प्राणोऽस्य गन्धो, मुख अग्निरिद्धो,× कुक्षि समुद्रो, गिरयोऽस्थिसंघा , नद्यो ऽस्य नाड्यो, ऽथ तनूरुहाणि महीरुहा विश्वतनोर् नृपेन्द्र , अनन्तवीर्य श्वसन मातरिश्वा , गतिर् वय कर्मगुणप्रवाह , ईशस्य केशान् विदुर् अम्बुवाहान्,वासस्तु सन्ध्या अमला च भूम''(भा०)।(२७)।

शिवस्य' उपासना याऽऽस्मात्, शक्तेरपि तथैव या, उत्तमा, 'दक्षिणा, सा हि 'वाम'मार्गेषु पालिता। महादेवा,महामाया,महाविद्या,महेश्वरी,महामाता च जगता, शशिशिवस्वरूपिणी,ज्ञान इच्छा-कर्म-शक्ति साकर्तु शक्नोति चार्वस्वलं; पुरुषोत्तमश्च पुरुष ,सर्वभूतअन्तरस्थित ,सर्वेषु सु शेते य ,सर्वकल्याणकारक ,सर्वज्ञ ,सर्वकामश्च सर्वसंहरणस्तथा,व्यापको,व्योम पर्याय व्योमकेशा विभु प्रभु एतयो शिवशक्त्योर्या उपासना चित्तपावनी,साधिनी चापि ससारयात्राया , मोक्षदाऽपि या,संमिता सम्यग् भाग् साहर्य,ग्रथिता कल्पभेषु यै,नकुलीशादिभिर्वाममतंत्रप्रचारप्रवर्त्तकै । ''तस्य ते सौन्दर्य, परमशिवदृङ्मात्रविषय, कथंकार ब्रूम , सकलनिगमअगोचरगुणे ।''

"वाग अर्थौ इव सम्पृक्तौ पार्वती परमेश्वरौ", न पूज्येते शुद्धचित्ते, पूज्येते योनि लिंगकौ, कामक्रमभि दुष्टचित्ते सर्वसम्स्कारवै । मायाया एव नियतिर् ईदृग् द्वन्द्वमयी सदा, विद्याया पूर्वरूप तु, सूर्यस्य उषा यथा, तथा अविद्या एव भवेत् पूर्व, पश्चाद्विद्या प्रवर्तते, 'पूर्वदेवा' स्मृता दैत्या, 'असुरा, अभवन् पुरा, ते एव पश्चात् सजाता, 'सुरा,' नाम्ना इहाऽपि च । ऊर्ध्व नाभेस्तु पुरुषो मेध्यो, ऽमेध्यो नाभेरधम् तथा, विराट्पुरुषनाभ्यूर्ध्व लोका सह स्थिता, तथा सह अध खलु पाताला तस्य नाभे निवेशिता इमस्तभुवन चापि, इद्वानि निरियाणि च, मनुष्य देहे स्थितानि दृश्यते सूक्ष्मदर्शिभि (५०) । प्रत्यक्ष एव चक्रोऽस्य, मध्ये भकान् ततो मल सवपाहि मनुष्याणा उदरे द्वयम् एव हि, नाभेरूर्ध्व दुग्धपाम, अधोऽन्ते मल सचय । मयतु सम्प्रदायेषु बौद्धे, जैने च, क्रिस्चने, मुहम्मदाये ज़र्दुस्त-पारसीके, यहूदके शिन्तो नाक्कि, तथा क कुन्फ्यू के, लौ-त्साभिधे तथा, सिक्ख, वाल्लभ चैतन्य माध्व लिंगायतेषु च, अथान्तरेषु चैतेषां मतेषु च पथेषु च, एतादृशो हि अध पात, स्वल्पो वाप्यधिकोऽथवा, पुण्याद् दक्षिणमार्गात् तु वामे व्यसनमेव हि, जैह्व औपस्थ्य मये प्राय सर्वत्रैव हि दृश्यते । 'गुह्य-समाज-तन्त्रे'तु, 'वज्र-यान' अपर ाभिधे, शुद्धो बुद्धोपदेशोऽपि कश्चिदेर्विनिपातित, माता स्वसा दुहिता वा मैथुन यत्र यानिभि न वर्ज्यते 'म कारणा पचक मध्यतेऽखिल, वामशास्त्रैर्यथा, (पूर्व एषा मार्गास्तु वर्णित )।' त्रिविध नरकस्येद द्वार नाशनमात्मन, काम क्रोधस्तथा लोभ, तस्माद् एतत् त्रय त्यजेत्' (गी०) (६०) योषार्थ च, धनार्थ च, दपार्थ च, कलहा सदा जायते हि मनुष्याणा, एषणात्रयकारिता, स्वार्थिनो, दाम्भिका, मिथ्याधर्म ाभास प्रवर्तका, धनसम्पत्तिलुब्धाश्च, लम्पटा, व्यभिचारिण परदाररताश्चापि, कुमारीदूषका अपि, प्रवर्तयति घोरांस्तान् मकारान्' पंच याम् विदु । 'देवा अकुर्वन् यत् किंचित् तद्, अभिद्रुत्य, पाप्मना अविध्यन्, खलु दैत्यास" ते, (उप०) पूर्वे देवा हि येऽभवन् पूर्वकल्पे, तथा चास्मिन् देवानां भ्रातरो हि ते वैमात्रा, कश्यपसुता, अदितेश्च दितेरपि "वाहिनी उभयतो हि इयं नाम चित्तनदी सदा, पापाय वहन्त्येषा, कल्याणाय च पूरुष" ( यो० भा० ), पाप पुण्य आत्मके च उभे सपृच्येते हि वासने, नियमेव, मनुष्यस्य, विद्वान् जयति पापिका । सुर असुरकृते हि अब्धिमंथने, मार्थकालिके, वारुणी चापि दुर्जाता, क्षणैकसुखदायिनी पूर्व, सतापिनी पश्चात्, सुजाताऽस्य स्वसा सुधा, शाश्वतआनन्ददा, चित्ततोषिणी,

देहपोषिणी, (७०), सुरा अविद्वान् गृह्णाति, सुधा वै विज्ञपूरुष, क्षीरोदधे समुत्पन्ना प्राय क्षीरमयी तु या। एतस्य सम्प्रदायस्य मन्दिरेषु मठेषु च, कालेन महती ऋद्धिर् यदा भवति वर्धिता, तदा भवति साऽन्येषां ईर्ष्यायास्तु विवर्धिनी, उत्तिष्ठते सम्प्रदाय तदाऽन्यो 'धर्म'-नामत। 'वैदिकानां' तु सम्पत्तिं अमुष्णन् 'भिक्षव' क्रमात्, पूर्वं प्रलोभनैर् व्याजैः, बौद्धराजबलैस्तत, समचिन्वन् 'विहारेषु' ता, गृहासु शिलासिषु, तल्लोभाद् अन्यराजान 'वीरशैवा' तदाऽभवन्, कुर्वन्तो 'धार्मिक' व्याज उपाय धनसाधने, विहाराश्चापि अथऽस्कन्दन्, भिक्षून् अघ्नन् तथा बहून्, रत्नानि सञ्चितानि मुषा, प्रामादश्चेतापि अमोषिषु, भिक्षवो हतशेषा ये तेऽन्यदेशान् पलायिता। 'हिन्दूराज्ये पुन पश्चात्, मन्दिरेषु महर्धय, राज्ञा कोषेषु अपि तथा, समचीयन्त भूरिश, व्यवर्धतापि बहुल "कामजो दशको गण", आधामस् तास् तदा भूय पर्यायेण हि 'मुस्लिमा', हिन्दू 'धर्म धरा' चापि बहवस्तेर् निपृक्षिता, देवालयाश्च शतशो लुण्ठिता नाशिता अपि, (८०), अजनिषत 'विहाराश्च' 'भिक्षव'श्चाप्युपद्रुता, तिब्बतादीनन्य देशान् भिक्षवो बहु विद्रुता, हिन्दू'धर्मधरा' किन्तु निरुत्साहाश्च भीरव, मुस्लिमाना हि भूयश्च चेतसोऽनुपिष्टो गता। मुस्लिमाश्च क्रमेणैव यूरोपीया हि क्रिस्चना अवर्धन्त स्म सर्वत्रापि आरम्भादेव भूरिश, प्रतिस्पर्धितया कस्तु अन्यास्तु स्थानुयायिन। क्रिस्चनाना सम्प्रदायास् चायुध्यन्त परस्पर, 'रोमन् काथलिकाद् चापि, प्राटिस्टेन्ट' तथैव च, अन्योऽन्य बहुसर्गेषु पशुमार अमार यन्, 'रोमन् पापाई'श्च'स्तत्राभूवन् क्रूरतरास्तमाम्। 'रोमन' धर्मधरैश्चापि 'महाधीशैश्च' 'पादिभि', सम्पत्तयो महत्यो या, चलाश्चाप्यचला अपि, सञ्चिता बहुकालेन, स्वभोगाय, न च हृद्ये, (='यज्ञाय', परोपकाराय), जगृहुश् 'चर्च'मन्दीर् ता, बलाद्, विप्लवकारिण, फ्रान्सदेशे च, रूसे च, स्पेनेऽन्यासु अपि भूमिषु। (९०)। जमदग्ने, तत्सुतस्य च, अर्जुनेन तु योऽभवत्, विश्वामित्रेण चेचापि वसिष्ठस्य च योऽभवत्, प्रजाविनाशको घोरो युद्धो यै बहुवार्षिक, गो, अर्थात् कृष्यभूमेस्तु, लोभोऽभून् तत्र कारणं, भूमिरेव हि विस्पष्ट सर्वकामदुघा सदा। कामो वासस्वभावश्च, वाम मार्गं प्रवर्तक, लोभेन पोषितो भ्राता ज्येष्ठेन, अतृप्यता, भृशं, पर्यायेण वर्धयति स्वानुजौ क्रोधमत्सरौ।

सात्विकयुवमनास्तु उग्र पूर्वं यद् रमन शुचि, सौन्दर्यस्य महादेव्या प्रवृत्ते पर -

४

मात्मनः, सर्वमेतत्तु कामस्य 'सामान्यो' विषयः स्मृतः, मनःषष्ठेन्द्रियाणां हि, 'विशेषो', मैथुनं तथा । वेदा वदन्ति पुरुषं सर्वं काममयं किल ; 'मायाया' एव नामैतद् अपरं 'काम' इत्यपि, अपि "काममयोऽयं हि पुरुषो" ननु सर्वथा (वे०) ; "पंचेन्द्रियाणां, मनसा ऽधिष्ठितानां, स्वके स्वके विषये हि अनुकूला या प्रवृत्तिः, कामस्त्वसा, आभिमानिकरूपेण याऽनुविद्धा सुखेन तु विशेषे स्पर्शविषये प्रतीतिः, फलवती अपि, प्राधान्याद् अयं वैशेष्यात् सा 'काम' इति कथ्यते" (वा० काम० सू०) । (१००) । "कामात्मता न प्रशस्ता, न चैवेहास्ति अकामता, यद्यद् हि कुरुते किंचित् तत्तत् कामस्य चेष्टितं, काम्यो हि वेदाधिगमः, कर्मयोगश्च वैदिकः, (९०), अकामस्य क्रिया काचित् दृश्यते नेह कर्हिचित्" (म०), धर्मकामाः, अर्थकामाः, कामकामास्तथैव च, अथ किं, मोक्षकामाश्च, अप्यार्षग्रन्थेषु वर्णिताः, "धर्माविरुद्धः कामोऽस्मि भूतानां भरतर्षभ" (गी०) । सायं प्रातः द्विजातीनां सन्ध्योपासनमस्ति यत्, जलाशयसमीपे च, तत् कामोत्तमसाधनं, ज्योतिषोऽग्ना च सतर्गे "आपो ज्योती रसोऽमृतं", क्रियन्ते क्रियते सम्प्रति, एतदुद्देश्यतश्च, तत् ? ईदृशी कामशास्त्रस्य दुर्दशा दृश्यतेऽधुना, धर्मार्थमोक्षशास्त्राणां विकृतिश्चापि तादृशी ।

धर्मशास्त्रदुर्दशा ।

बाह्याडम्बरमात्रो हि 'धर्मो' ऽस्त्वे ऽवशिष्यते, वर्णितं हि यथा पूर्वं, 'दम्भअहंकार' विग्रहः । 'मुच्यते सर्वपापेभ्यो गंगास्नानेन केवलं', 'जपमात्रं हरेर्नाम्नः सर्वपापनिष्कृतिः', 'हरेर्नाम, हरेर्नाम, हरेर्नामैव केवलं, विनैव धर्माऽचरणं, सर्वपापप्रमोचनं', 'अपि ब्राह्मणनामभ्यो दानं, एकं, कलौ युगे, सर्वपापापनोदाय सर्वथैव अलं इष्यते', 'ऊर्ध्वपुण्ड्र त्रिपुण्ड्रादि तीर्थमृद् भस्म धारणं, रुद्राक्ष-तुलसीकाष्ठ मालानां परिवर्तनं, (१००), प्रणामैर्वाऽपि साष्टांगं मूर्त्तीनां, तीर्थमज्जनं, नितान्तमस्पृश्यानां च तथाऽधमैरपि तीर्थ नामक कुण्डादि जलानां अप्रगन्धिनां, (आचामति स्वयमेव यानि तीर्थपुरोहिताः), केवलं श्रद्धया भक्त्या—सर्वपापैः प्रमुच्यते', 'पिपीलिकादिजन्तुभ्यः शर्कराक्षेपणैस्तथा, सर्पाणां पूजनैः, तेभ्यो दुग्धदानैस्तथैव च, पालनैर्वानरादीनां परिक्रमणवन्दनैः, भूतप्रेतनिविष्टानां वस्तूनां अपि वर्जनैः, ईदृशैः कर्मभिश्चान्यैः, पुण्यं तु बहु लभ्यते'—इत्यादि भावाः प्रचुरं देशेऽस्मिंस्तु प्रचारिताः कुटिलैः, सरलैश्चापि, विपर्यस्ता तु हेतवः । सरला विप्रलभ्यन्ते एवं तु कुटिलैर्भृशं, प्रतारिताश्च सरला नयन्ति अन्यांश्च तत्पथे । "स्त्रियः कामितकामिन्यः, मूर्खाः पूजित-

पूजका, गतानुगतिको लोको, न लोक पारमार्थिक" (म०भा०)। अन्यथा चापि तैर्भावै क्रियते पापवर्धन, सर्वपापनिवृत्तिश्चेत् स्नानाद्यैरेव केवल, कस्माज् जनो न कुर्याद् हि पाप यत् सुखदायक ? (११०)। स्नानेनैव तु गगाया, हरि नामजपेन वा, 'शूद्र' कि 'ब्राह्मण' हत्वा, सर्वपापाद् विमोक्ष्यते ? कोऽपि, एतद्, ब्राह्मणमन्य कि, कदापि, अनुमस्यते ? "आत्मा नदी, सयमपुण्यतीर्था, सत्यो-दका, शीलतटा, दयोर्मि, तत्राभिषेक कुरु, पाण्डुपुत्र !, न वारिणा शुध्यति हि अन्तरात्मा"(म०भा०), गगायो मज्जन हि एव सर्वपापहर यदि, जीवन्मुक्ता सदा मत्स्या एते मत्स्य कुम्भीर कच्छपा। नैतादृशो महर्षीणा आशयस्तु कदाचन। "भोगाद् एव क्षयो भावी, प्रारब्धाना तु कर्मणा", "न अभुक्त क्षीयते कर्म, शुभ वा यदि वा ऽशुभ", "न अधर्मश् चरितो, लोके, सद्य. फलति, गौर् इव, शनैर् आवर्तमानस् तु, कर्तुर् मूलानि कृन्तति" (मनु), इत्येव हि पुराणाना महर्षीणा विनिर्णय। "फल पापस्य नेच्छन्ति, पाप कुर्वन्ति यत्नत, पुण्यस्य फलमिच्छन्ति, पुण्य नेच्छन्ति जनाः"। गुणाना फल ईर्ष्यन्ति, हेतुभूतान् न तान् गुणान् ईर्ष्यन्ति, अत, वैधेया, दुर्बुध्या विधिना हता। "श्रूयता धर्मसर्वस्व, श्रुत्वा चैव अवधार्यता, आत्मन प्रतिकूलानि परेषा न समाचरेत्, (१२०), यद्न्यैर्विहित नेच्छेद् आत्मन कर्म पूरुष, न तत्परेषु कुर्वीत जानन् अप्रिय आत्मन, अपत्रपेत वा येन न तत् कुर्यात् कथ चन, यद्यद् आत्मन इच्छेत तत्परस्यापि चिन्तयेत्" (म०,म०भा०), "धृति क्षमा दमोऽस्तेय शौच इन्द्रियनिग्रह धी विद्या सत्य अक्रोधो, दशक धर्मलक्षण, अहिंसा सत्य अस्तेय शौच इन्द्रियनिग्रह, एत सामासिक धर्म चातुर्वर्ण्य अब्रवीन् मनु" (म०), "आत्मौपम्येन सर्वत्र सम पश्यति योऽर्जुन, सुख वा यदि वा दु ख, स योगी परमो मत"(गी०), "तीर्थस्नानै तपोभिर्वा भावदुष्टो न शुध्यति, श्व दृति क्षालिता तीर्थे कि शुद्धि अधिगच्छति ? गगादितीर्थेषु वसति मत्स्या, देवालये पक्षिगणाश्च नित्य, भावोज्झितास्ते न फल लभते, तीर्थावगाहाच्च तथैव दानाद्", "ईश्वरैरपि भोक्तव्य कृत कर्म शुभाशुभ", "प्रारब्धाना कर्मणा तु भोगादेव क्षयो भवेत्", "स्वधर्मकर्मविमुखा कृष्ण-कृष्ण इति रावित्, ते हरेर् द्वेषिणो मूढा धर्मार्थं जन्म यत् हरे" (विष्णु पु०), "श्रुति-स्मृती मम एव आज्ञे, यस् ते उल्लंघ्य वर्तते, आज्ञाच्छेदी, मम द्वेषी, मद्भक्तोऽपि न वैष्णव (भा०) (१३०), "देवर्षे ! विहिता शास्त्रे, हरिं उद्दिश्य, या क्रिया, सा एव भक्तिर् इति प्रोक्ता,

तथा भक्ति परा भवेद्" (नारद-पाञ्चरात्र), नून भक्तौ गुणा सन्ति, नाम्नश्चापि जपे गुणा , स्व धर्म कर्म हानौ तु, तौ दम्भो हि एव केवल । "अर्चाया एव हरये पूजा य श्रद्धया ईहते, न तद् भक्तेषु चान्येषु, स भक्त प्राकृत स्मृत , ईश्वरे, तदधीनेषु, बालिशेषु, द्विषत्सु च, प्रेम मैत्री-कृपा उपेक्षा य करोति स मध्यम', सर्वभूतेषु य पश्येद् भगवद्भाव आत्मन , भूतानि भगवति आत्मनि, असौ भागवतोत्तम "(भा०), "मैत्री दया मुदा उपेक्षा भावनाभि ,यथाक्रम, सुख-दु ख पुण्य पाप विषयेषु, निरन्तर,चित्तप्रसादनं"साध्य, भजेन च मुमुक्षुणा (योगसूत्र) "यमो वैवस्वतो देवो, य तव एष हृदि स्थित , तेन चेद् अविवाद ते, मा गगा मा कुरून् गम " ( म०, म० भा० ) ।"अप्सु देवा मनुष्याणा, दिवि देवा मनीषिणां, बालाना काष्ठलोष्टेषु, बुधस्यात्मनि देवता, शिवं आत्मनि पश्यति, प्रतिमासु न योगिन , आत्मस्थं ये न पश्यन्ति, तीर्थे मार्गन्ति ते शिव, उत्तमा सहजाऽवस्था, द्वितीया ध्यान धारणा, तृतीया प्रतिमा पूजा, होमयात्रा ततोऽधमा ' ( अग्नि पु० ) । ( १४० ) । नून मृत्क्रीडनेषु एव बालस्यास्ति मनोगति , न ग्रन्थेषु अधिकारोऽस्ति , "धर्मो हि आवस्थिकः स्मृत " ( म० भा० ) , किंतु मस्तिष्को न सर्व इच्छतो—'नौ सुत सदा बाल एव भवेत्, न एव आमृत्यु यथेष्ट विषयया' । "माता शत्रु , पिता वैरी, येन बालो न पाठ्यते ', काष्ठलोष्टेषु तव सत्त्व क्रियते चाधिकाधिक, यथाऽत्र जनता, भाग्यहीने देशे तु, याजके । नून ध्याने गुणा सन्ति देहशुद्ध्यादिका बहु , यात्रासु अपि तथा ज्ञान-वृद्धि, देशाटने कृता, पुर ग्राम-नद-अरण्य पर्वत उदधि दर्शने , विविधाना मनुष्याणा चर्याणा चावलोकने , सत्कारश्चापि चित्तस्य, विकासश्च, विनोदन, अर्चाया 'दिवि देवानां' व्याजेन, स्वाच्च शिक्षण ज्योति शास्त्रस्य तत्त्वानां, ग्रहणावसरेषु च, देवालयानां मूर्तीनां—स्वच्छाभ्रत् स्थूल, शोभना —कलाकुशलताऽस्वादो, ह्लादो, विस्मय , एष च, सद् अभ्यासेन चैवापि धारणा-ध्यान-योग्यता, महती बुद्धिशुद्धिश्च, ख्यायेत यदि, मन्दिरे, रूपकाणां, पुराणेषु वर्णितानां पदे पदे, प्रतीकानां च, गूढार्थो—यथोक्त ऋषिभि पुरा (१५०)— " 'कौस्तुभ'-व्यपदेशेन स्वात्मज्योति बिभर्ति अज , तत्प्रभा व्यापिनी साक्षात् 'श्रीवत्स' उरसा विभु , स्व-मायां 'वनमाला'ख्यां नानागुणमयीं दधत्, 'वास ' छन्दोमयं 'पीत', 'ब्रह्म सूत्रं' त्रिवृत्-स्वरं, बिभर्ति सांख्य योगं च देवो 'मकरकुण्डले', 'मौलिं' पदं

पारमेश्र सर्वलोकाभयकर; अव्याकृत 'अनत'आख्य आसनं यदधिष्ठित , धर्मज्ञानादिभि युक्त सत्त्व 'पद्म' इह उच्यते, ओज -सहो-बल युत मुख्यतत्त्व 'गदा' दधत्, अपा तत्त्व 'दरवर'; तेजस्तत्त्व 'सुदर्शन , नभोनिभ नभस्तत्त्व 'असि'; 'चर्म' तपोमय, कालरूप 'धनु शार्ङ्ग , तथा कर्ममय 'इषुधिं', इन्द्रियाणि 'शरान्' आहु , आकूती अस्य 'स्यन्दन , तन्मात्राणि अस्याभिव्यक्ति, 'मुद्रया'ऽर्थक्रिया आत्मता, 'मण्डल' देवयजन दीक्षासंस्कार आत्मन', 'परिचर्या' भगवत आत्मनो दुरितक्षय , भगवान् भग शब्दार्थं 'लीलाकमल' उद्वहन् धर्म यशश्च भगवान् 'चामरव्यजने' अभजत्, 'आतपत्र' तु वैकुण्ठ, 'द्विजा' (दन्ता ) धाम अकुतोभय, (१६०), त्रिवृद्वेद 'सुपर्णआख्य' 'यज्ञ' वहति पूरुष अनपायिनी 'भगवती श्री साक्षाद् आत्मनो हरे ,'विष्वक्सेन' तन्त्रमूर्ति विदित 'पार्षदाधिप', 'नन्दादयोऽष्टौ द्वा स्थाश्च' तेऽणिमाद्या हरेर्गुणा , 'वासुदेव , संकर्षण , प्रद्युम्न ,' पुरुष स्वय,'अनिरुद्ध ' इति, ब्रह्मन् ', मूर्त्तिव्यूहोऽभिधीयते, स विश्व , तैजस , प्राज्ञ तुरीय , इति वृत्तिभि , एक एव हि लोकाना सूर्य आत्माऽऽदिकृद् हरि ( भा० स्क० १२ )। "यदाहु 'वासुदेव'आख्य 'चित्त' तन् महदात्मकं अहंकार' च त्रिविध , सहस्रशिरस ( विभु ) 'संकर्षण आख्य पुरुष य 'अनन्त' प्रचक्षते ('मनो' 'अनिरुद्ध' , 'प्रद्युम्न "कामो 'बुद्धि' स्तथैव च) ' (,, ३) । महाय एतादृशार्थं ,जनताशिक्षणाय वै,बुद्ध्युत्कर्षाय चैवापि 'बालाना', स्थविरै क्रम , मूर्त्तिदर्शन-यात्रादि-स्नानादि किल कार्यते मेघीव्रतायतन् किंतु, सवमाहाय केवल, 'रौप्य स्थापय मूर्त्यंम, पुष्प किर, जल क्षिप, क्षिप्र परिक्रमा कृत्वा गच्छ इत्येवोपदिश्यते । ईदृशी धर्मशास्त्रस्य धर्मस्यापि च दुर्दशा, नि श्रे यस चाभ्युदय तत् कथ साधयिष्यति ? (१७०) ।

अर्थशास्त्रदुर्दशा ।

विलुप्त स्वार्थशास्त्रं प्रायो अद्यत्वे न लभ्यते, कौटलीय 'अर्थशास्त्र' न शास्ति खलु'नागरिका 'का का ,प्रजाभि काभिश्च,साधनीया ,कथं कथं प्रायशस्तस्य लक्ष्य राजकोषपरिवर्धन, न प्रजाभ्यस्तु सर्वाभ्यो सद्वृत्तीना प्रबोधन । आदिष्ट मनुना स्पष्ट विषयेऽस्मिन् पुन पुन —"सर्वेषा ब्राह्मणो विद्याद् वृत्त्युपायान्, यथाविधि, प्रब्रूयाद् इतरेभ्यश्च, स्वय चैव तथा भवेत्" (म०) वर्णाना वृत्तयश्चापि आदिष्टा इतेन चतुर्विधा , षट् कर्मणा विप्रस्य "त्रीणि कर्माणि जीविका, अध्यापन याजन

च, विशुद्धाच्च प्रतिग्रह, शस्त्रास्त्रभृत्त्व क्षत्रस्य, वणिक्पशुकृषिर्विश" (म०), "शिल्पानि, सेवा, शूद्रस्य, प्रभु, कर्म समादिशत्" (म० भा०)। सर्वथा वृत्त्युपायान् के प्रयुञ्जन्ति अद्य 'ब्राह्मणा'? धनुर्वेद, तथा वार्त्ताशास्त्र, शास्त्र कृषेस्तथा, शास्त्र गो-माहिष अज अश्व हस्त्यादीना विदन्ति के? वस्त्र धान्तु धातु रत्न शास्त्राणा केऽद्य पठिता? चिन्ता विविधशिल्पानि केऽद्य शिक्षयितु क्षमा? उक्त, "धिग् जीवित राज्ञो,राष्ट्रे यस्य अवसीदति द्विजो वा, अन्यो मनुष्यो वा" (म० भा०), प्रजाना वृत्तिस्स्पर्श, भरण पोषण धर्म्यं, नृप धर्मा विशेषत, (१८०), साम्प्रत क्षत्रियम्मन्या वनि न्त कुर्वते 'नृ पा'? स्व गोप्ता नृ त भाव, कुविलासार्थमेव च। "निशा विवादाय, धन मदाय, शक्ति परेषा परि पीडनाय, खलस्य, साधो विपरीत एतत्, ज्ञानाय,दानाय च, रक्षणाय", विप्रस्य, वैश्यस्य च, क्षत्रियस्य, द्विजत्रयस्य प्रमत तद् त्त्र। बुभुक्षिता प्रजा सर्वा अर्थशास्त्रविलोपनात्। ईदृश प्रकार स्वर्यशास्त्राणा अद्य दृश्यते।

मोक्षशास्त्रप्रश्न।

वैश्य शास्त्र वेदान्त, मोक्षशास्त्र हि तत् स्मृत, त्रिवर्गसाधनाना तु येन्नी दाना समाप्तौ, आश्रमक्रमतो हि, अन्ते, वेदान्त उपदिश्यते, चतुर्थाश्रम योग्यो य, चतुर्थार्थस्य साधक, चतुर्थ पुरुषार्थ त आहु 'नि श्रेयस' बुधा। चतुर्थं, मार्गभिश्च, मितैर, उपनिषत्पर्व, विरक्तमनस्कैश्च, न जरत्क विलडिभि, प्रशा न्तचित्तै ऋषिभि वेदान्त उपदिश्यते। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो तु निर्वेद मायात्, नास्ति अकृत कृतेन, तद्विज्ञानार्थं स गुरु एव अभिगच्छेत्, समित्पाणि श्रोत्रिय ब्रह्मनिष्ठ (१९०), तस्मै, स विद्वान्, उपसन्नाय सम्यक् प्रशान्तचित्ताय, शमान्विताय यया अक्षर पुरुष वेद सत्य, प्रोवाच ता तत्त्वतो, ब्रह्मविद्या" (मुडक उ०)। वेदान्तिना सदा भाव्य अतिवादतितिक्षुणा, नाव धित्लापयेत् नैव, न विमृयात् निगृह्य च, भद्र भद्र इति ब्रूयाद् वेदान्ती [illegible] विवादिन, सम्वाद एव चान्विच्छेत, सवत्रादसमन्वय, शम धर्म्यहाना च, न तु तेषा विजृम्भण, ईदृशी वेदमर्यादा!, कथ सा पाल्यतेऽधुना? तेषा एव हि सूत्राणा भाष्याणि द्वि त्रि धा अधा, महावाक्यपदाना च, उपनिषद्वचसा तथा, कृतानि यावदूर्मुम् बहुजल्पवितडिभि, ईर्ष्यालुभि, अहकार प्रेरितै द्वैपदूषितै, अन्योऽन्यखण्डने रतै, न विरतै कथचन, विकराला, महाकाया, सद्विरक्त भय

कराः, जिज्ञासु-त्रासकाश्चापि, विरोधपरिवर्धकाः, अस्पार्थाः, बहुशब्दाश्च, जटिला दुर्गमास्तथा, अप्पयदीक्षिताकाराः, ग्रन्थाश्च बहु निर्मिताः । (२००) । 'शङ्कर-दिग्विजये' हि एव माधवेनास्ति वर्णितम्, काश्या वृद्धस्य कस्यापि विदुषो व्यास-रूपिणः, शङ्करेण विवादोऽभूत् चिरकालयितव्या भृशम्, सूत्रवक्ता एक बहुधा निघ्नतो "त्रिनाडिक यावत्कलहो जज्ञे" । अद्वैतेन, मण्डनस्य, प्रविष्ट शङ्करो, गृह, अन्यदा खलु अनाहूत, विवादे विजिगीषया । तेन अन्यत्वेन स्पृष्टु, व्यग्र सन् यज्ञ-कर्मणि, मण्डनो विस्मृति न सम्प्राप्त, परपाक्षर, अवादीत्, शङ्करश्चापि अभद्र' एव उवाच ह, उभौ परमविद्वांसौ, किन्तु क्रोधवश गतौ—" 'कुतो मुण्डी ?', 'आगलात् मुण्डी !', 'पन्थास्ते पृच्छ्यते मया'; 'किं आह पन्था ?', 'त्वन्माता मुण्डा इत्याह तथैव हि', 'पन्थान त्व अपृच्छस्, त्वा पन्था प्रत्याह, मण्डन !', 'त्वन्माता इत्यत्र शब्दोऽयं न मा ब्रूयात्, अपृच्छक', 'अहो पीता किमु सुरा ?', नैव, श्वेता यत, स्मर', 'किं त्व जानासि तद्वर्णं ?', 'अह वर्णं, भवान् रस', 'कन्था वहसि, दुर्बुद्धे !', गर्दभेनापि दुर्वहा, शिखायज्ञोपवीताभ्या कस्ते भारो भविष्यति ?','कन्था वहसि, दुर्बुद्धे !, तव पित्रापि दुर्वहा, शिखायज्ञोपवीताभ्या श्रुतेर्भारो भविष्यति',(२१०), 'त्यक्त्वा पाणिगृहीतीं स्वा, अशक्त परिरक्षणे, शिष्य-पुस्तकभारेच्छोः व्याख्याता ब्रह्मनिष्ठता', 'गुरुशुश्रूषणालस्यात् समावर्त्य गुरोः कुलात्, स्त्रिय शुश्रूषमाणस्य व्याख्याता कर्मनिष्ठता', 'स्थितोऽसि योषिता गर्भे, ताभिरेव विवर्धित, तासु, मूर्खतम !, कासु, पशुवद् रमसे कथ ?'—इत्यादि अभूत् एवमनयोः बहु अन्योऽन्याधिक्षेपन, धुरंधरमीमांसकाचार्य वेदान्त्याचार्य-वर्ययो ! विशिष्टविदुषोः एव शिष्टाचार परस्पर, भैरवानो 'जगद्गुरौ ' मान्यवरौ 'विश्ववन्द्ययो '!, ततोऽन्यदा मण्डनमिश्रपत्न्याऽप्यासीत् विवाद खलु शङ्करस्य, "न दिवा न निशि अपि स वाक्कथा विरराम, नियमितकाल स्वैः, अतितरस्यतो मम अमलधियो दिवसाश्च मासद्वय चात्यगमन्" ( श०दि० ) । महाकृति-मान् अन्य', 'खाद्यखण्डन' कारक , आत्मान ईदृश सर्वं वर्णयन् जपते नहि—"य साक्षात् कुरुते समाधिषु परब्रह्मप्रमोदार्णव, ताम्बूलद्वय आसन च लभते य कान्यकुब्जेश्वरात्", ताम्बूलद्वय आसन च गणयन् प्रज्ञाभिमाने मम, का-क्यान् कष्टतरा हि अतोऽपि पतिता वेदान्तधारा-दुर्दशा !, क गाम्भीर्यं महर्षीणा, धामस्य, क्वापि मार्दव, सन्याय मितभाषित्व !, क ईदृशी क्षुद्रताऽधमा, पाश्चात्त्व

च चापल्य स्वचातुर्य प्रदर्शन ? (२२०)। तर्कश्च, प्रतितर्कश्च, प्रश्नाश्च उत्तरणानि च, दास्त् तथा समाधान—सर्वं तत् सर्वथा उचित, बुद्धिवृद्धिकर, ज्ञानप्रतिष्ठापकमेव च, जिज्ञासा शान्तिभावेन चेत्, न जल्पवितण्डने। अधीतौ न्यायशास्त्रस्य जल्पन चानुमोद्यते, यथा यूना नियुद्धानि, व्यायामार्थं च, रागाय च, परस्परमुखायापि, न तिरस्करणाय तु। शकर अमर-वेशस्य कृतेसु कथयाऽप्यद।

त्रिगुणत्व पदार्थानां, त्रिगुणस्यानुसारत, कृष्णेन गीत गीताया, वैराग्य त्रिविध तथा, आलस्यनिमित्त यत्तु तत् तामस उदाहृत, ईर्ष्या-क्रोध-स्वार्थनाश कृत यद् राजस तु तत्, तु सम्यक्संसारनिःसारण्यात् सात्त्विकं स्मृत, यथा रामस्य बाल्येऽपि, यथा बुद्धस्य यौवने, यथाऽर्जुनस्य स्वजनसंहारे समुपस्थिते।

दाम्भिक खलु वैराग्य, बुद्धस्याप्यस्य वै यथा, कथाया पंचतंत्रेषु वर्णित, तत्तु वञ्चन। राज्ञा स्वदाश्च बहवो भवति यतिरूपिण। यद्यु वेदान्ति सन्यासिना कस्यै ईदृशी कथा, तथा च साम्प्रते काले मोक्ष शास्त्रस्य दुर्दशा। (२३०)।

कथ सच्छास्त्रोद्धार ?, शास्त्राऽशास्त्रनिर्णेता क. ?

नष्टभ्रष्टआगमोद्धार कथ खलु पुनर्भवेत् ? कि सत् च, किं असत्, शास्त्र, इति निर्णेष्यति इह क ? "तस्माच्छास्त्रं प्रमाण ते कार्याकार्यव्यवस्थितौ (गी०), श्लोकार्धमेतद् गीताया पुन पुनरनूद्यते धर्माधिकारिणस्मन्यै अपि धर्मोपदेशार्थं। तत्र एतत् तु विचार्य स्यात् 'पण्डितेन' इह धीमता—कृष्णेन उद्दिश्य किं शास्त्र वाक्य एतद् उदीरित ? "सद् असद् विवेकिनी बुद्धि यस्य यस्य, स पण्डित", अध्यात्मशास्त्र तच्छास्त्र इति पूर्वं प्रदर्शित। अन्यद् विवेचनीय च सूक्ष्म अत्र विवेकिना—अस्तु शास्त्र प्रमाण न कार्याकार्यव्यवस्थितौ, किन्तु किं न प्रमाणं स्यात् शास्त्राशास्त्रविनिर्णये ? मेधा एव, तत्र, "विहितारिवलशास्त्रसारा" (दु०स०), कुर्यात् प्रमां, न तु सुधाऽर्चितपुस्तभारा, बुद्धेः अधो न गतिर्—इत्यपि बुद्धिसाध्य, बुद्धे प्रभुत्व इह नैव कदापि बाध्य। खडन तु विचारस्य विचारेणैव सम्भवेत्। न जातु जनयतीह शास्त्राणि पुरुष क्वचित्, पुरुषा एव शास्त्राणि सर्वत्रोत्पादयति हि। पाश्चात्यैर् निर्मित शास्त्र अद्भुत बलवन् नव, येनाप्रतिहता तेषां गति खेऽपि स्थले जले, प्रभुत्वमपि सर्वेषु देशेषु पृथिवीतले। (२४०)। अपिजानन् स्वात्तु मन्वाना, परमात्मानधिष्ठिना, वय किं अवसीदामो हस्तपादादिसंयुता, कतिचित्पुस्तिकादासा 'शास्त्र शास्त्रे ति-राविण ? वेदो मान्य, 'कुरानो' वा, 'बैबलो'

वा, इति संशये, ऋते तु बुद्धिं आत्मीया क प्रभूयाद् विनिर्णये ? सर्वे ते स्व स्व एव इह सर्वश्रेष्ठ वदन्ति हि, क तन्मध्ये शाङ्किताको, मनीषा मानवा ऋते ? अय मान्यो, न मान्योऽन्य, इत्येवमपि निश्चिते, वाक्य अत्रस्थ एतत्तु प्रक्षिप्त, विकृत तु वा, मौलिक वापि, शुद्ध वा—इति प्रश्न समुपस्थिते, सन्दिहाने जने भूय, उत्तर क प्रदास्यति, विना बुद्धिमता बुद्धि पक्षद्वयविवेचिनी ? पाठोऽय मौलिक, शुद्धो, अपि इत्येव निर्णये कृते, वाक्यस्य अस्य अयमेवार्थो, अन्योऽर्थो वा सभवेद्, इति संशयाने जने भूरि, कस्तमर्थ विनिर्णयेत् ? स्पष्टमेव प्रमाकर्त्री बुद्धिरेवात्र सिद्धिदा । "व्याख्या बुद्धिबलापेक्षा", बुद्धि नास्त्येति कश्चन, स्वीयां छाया यथा नैव कोऽपि लघयितु क्षम । "यस्य नास्ति स्वय प्रज्ञा, शास्त्र तस्य करोति किं ? लोचनाभ्या विहीनस्य दर्पण कि करिष्यति ?", (२५०)। गायति अतो नैकवार भगवान् उरगायम, "बुद्धौ शरण अन्विच्छ, बुद्धिनाशात् प्रणश्यति," "बुद्धिर् बुद्धिमता अस्मि," बुद्धिग्राह्यो अतीन्द्रिय," बन्ध मोक्ष च या वेत्ति बुद्धि सा, पार्थ !, सात्त्विकी, - इति गुह्यतम शास्त्र इद उक्त मया, अनघ !, एतद् बुद्ध्वा बुद्धिमान् स्यात्, कृतकृत्यश्च, भारत ", एव आह अध्यात्मशास्त्र सारत प्रतिपादयन्, तदेव शास्त्र भूयश्च 'शास्त्र' शब्देन लक्षयन्, "इद गुह्यतम शास्त्रं", "गुह्याद् गुह्यतर" तथा, "सर्वगुह्यतम चापि शृणु मे परम वच" (गी०)। 'प्रज्ञा' शब्दस्य पर्यायवाचकेषु अभिधीयते 'बुद्धि' शब्दोऽपि यत्, तत्र कारण तु इद एव हि—ऋषीणा परमो 'ब्रह्मा' परमेष्ठी पितामह, परात्मनो 'बुद्धि'रूप जगत्सृष्टिकारक, अतएव मत 'बुद्धि' सर्वदा 'परमेष्ठिनी'। "मनुष्या अब्रुवन् देवान्, उत्क्रामत्सु ऋषिषु, अथ-को ऋषिर्भविताऽस्माकं (धर्ममार्गप्रदर्शक)? तर्कं एत ऋषि देवा प्रायच्छंस्तेभ्य" एव ते (निर० परिशि०), 'ऋषति' आक्षेति मन्य यद्, 'ऋषि' तर्क मत स्मृत । ऋषीणां अपि उपायोऽय, आराध्यो, निश्चयाय वै, आर्ष, परम्पराप्राप्त, बहुभि सुपरीक्षित, प्रत्यक्षेण, अपि तर्केण, अनुमानेन, आगमेन च, स्थिरीकृतश्च सिद्धान्त धर्मो भवति, नान्यथा। बुद्धेरेव हि कार्योऽय, तर्कं यस्तु अभिधीयते, "प्रत्यक्ष च, अनुमान च, शास्त्र च विविधागमम्, त्रय सुविदित कार्य, धर्मशुद्धि अभीप्सता" (मनु), (२६०), प्रत्यक्षस्य, आगमस्यापि, प्रमाणस्य इतरस्य च, यत् किंचित् तद् भवेत्, सम्य ग्राहिणी बुद्धिर् अतत । योगवासिष्ठकारश्च स्पष्टमाचष्ट भूरिश, "युक्ति

सम्प्रहमेवापि पश्यतः कर्तुमर्हसि" (गी०), सत् शास्त्राणां च सर्वथा जीर्णोद्धार, लर्धेन च नवीनानां उपज्ञान, प्रज्ञया, सत्त्या, पुन ,(२८०), यथा हि याज्ञवल्क्येन सूर्योपासनया कृता अयातयामा शुक्लाश्च वेदा वाजसनेयिना । 'वाजो' वार्य, शुक्र, इति, चयन, पूजन, 'सनि', वीर्य रक्षति ये, चोर्ध्वं नयति ब्रह्मचर्यया, 'विरोभते ' च योगोर्ने येस्तु सत् परिणाम्यते बुद्धि इन्द्रिय मन पेशी हृदा वर्चसि, अथ ओजसि,तेजसि अपि, बले चैव, सहसि अपि तथा, क्रमात , अथ कि, सूक्ष्म देहेन यच्छक्त्यैव निजर्यते, तपस्विनस्ते ऋषय तथ्या 'वाजसनेयिन ' । "मर्वेश्वर ह्लिकाता चात्माश्रय सूर्य "उच्यते(निरु०),शीर्षाणां अप्रमेयाणां शक्तीनां निचयो महान् , नाम 'वाज सनि ' सम्यास्ति अन्वर्थश्चापि इंगुभि , उपासकाश्च तस्याता ज्ञाता 'वाजसनेयिन ', तच्छास्त्राणां उपज्ञाने शक्यस्ते, अपि सवत्र्त । प्राचीनमत मन्वर्थं उज्जीवयत स पुन ,अध्यात्मशास्त्रस्य तु,य सर्वथा सम्मतो भवेत , प्रवर्तयत नूतनाश्चाप्याचारान् समयोचितान् , सर्वथा अध्यात्मशास्त्रस्य ये भवन्त्यनुसारिण । निश्चिनोति चतुर्वर्गं अध्यात्म शास्त्रमेव हि, तथा तत्साधनोपायान् तस्यैव विशिनष्टि च, "न ह्यनध्यात्मवित् कश्चित् क्रियाफलं उपाश्नुते, अर्थकामेष्वसक्तानां धर्मज्ञान विधीयते, धर्मं जिज्ञासमानानां प्रमाण परम श्रुति "(म०), श्रुति श्रुषु समासाता आत्मज्ञान परायण । (२९०) । "आत्मैव देवता सर्वा सर्वमात्मनि अवस्थित, आत्मा हि जनयत्येषां कर्मयोगं शरीरिणां, यस्तु सर्वाणि भूतानि आत्मन्येव अनुपश्यति, सर्वभूतेषु चात्मानं, ततो न विजुगुप्सते, ये चैव सात्त्विका भावा , राजसा , तामसाश्च ये, 'मत्त ' एव हि ते सब, न तु 'अह' तेषु, ते 'मयि', यस्य सर्वं अभूत् आत्मा सर्वजनस्य विजानत , को मोहस्तस्य क शोक एकत्व अनु पश्यत , सर्वं भवति विज्ञात ज्ञातेन एकेन चात्मना, मृत्पिण्डेन यथैकेन सर्वमेव हि मृण्मय, निकृन्तनेन चैकेन सर्वमेवायसं यथा, अभि सर्वान् पदार्थांश्च, स्वयान् अत्येति अपि स्वय, सर्वत्र अतति यत् चाय सतत सर्वभुग् विभु , आनन , सनता व्यापी सर्वेश्वर, निरन्तरं, अमित सन् स्वय, सर्वान् अन्यान् य परि-माति च, सर्वान् परि 'मिता'श्चापि 'मा' इत्यनेन निषेधति, 'न इति' 'न इति'इति नित्य च, तस्माद्'आत् मा' इति कथ्यते। सर्व आत्मनि सपश्येत,सत् च असत् च,समाहित , सर्वं आत्मनि सम्पश्यन् न अधर्मे कुरुते मन. । इमे समुद्रा गिरय महाद्रयि जगन्ति च, अन्त करणसत्त्वस्य सदा बहिरिव स्थिता", ( म०, उ०, गी०,

उ०, पु०, म०; यो० वा० )। (२००)। येन एतद् अपरोक्षेण, न शब्दैरेव केवल, अनुभूत, यस्य वृत्तं साक्षिन्व कुरुतेऽत्र च, लोका च सुचरित्र च नि स्वार्थं चापि जानते, स एव धर्मं निश्चेतु सशये सम्यग् अर्हति , "य वं ब्रूते स धर्म स्याद् एको वाऽध्यात्मवित्तम" ( या० स्मृ० )।

वेदपुराणेतिहासार्थभ्रश , कथ तदुद्धार ?

"सरहस्योऽधिगन्तव्यो वेद सपरिबृहण , धर्मेणाधिगतो यैस्तु वेद सपरिबृहण , ते शिष्टा. ब्राह्मणा ज्ञेया श्रुतिप्रत्यक्षहेतव , इतिहासपुराणाभ्या वेद च परिबृहयेत्, बिभेत्यल्पश्रुताद्वेदो—माम् अय प्रतारेष्यति" (म०, म० भा०)—इत्यादेशो मनोरस्ति, व्यस्तो व्यासेन चाऽप्यसौ। नह्येकमेव शास्त्र तु जानन् जानाति किंचन, "एकं शास्त्र अधीयानो न विद्यात् शास्त्रनिश्चयं, तस्माद् बहुश्रुत शास्त्र विजानीयात् प्रयत्नत" ( सुश्रुत, सूत्र० अ० ४ )। प्रायो लुप्तस्तु वेदाना रहस्यार्थो, विनाशनात् तद्व्यञ्जकाना ग्रन्थाना, बुद्धिह्रासाच् च सर्वत , विरूद्धया बहुशश्चापि भारतेऽनधिकारिणा, आध्यात्मिके निरस्ताना, सत्तानामाधिभौतिके, (यथा भागवते, पूर्वं, तन्माहात्म्ये च, वर्णितं), पर्वतारण्यदुर्गेषु, गुह्य विद्या विजानता, ताश्च गोपयता, स्व च, योगसिद्धतपस्विना, पापसम्पर्कभीताना, ऋषीणा चाप्यप्रकाशात्। (२१०) "विद्या ह वै ब्राह्मणं आजगाम—'गोपाय मा, शेवधिस्तेऽहमस्मि, असूयकाय अनृजवेऽयताय न मा ब्रूया , वीर्यवती तथा स्याम्'; य आतृणोति, अवितथेन ब्रह्मणा, शिष्यस्य श्रोत्र, अमृत सम्प्रयच्छन्, त जानीयात् पितर मातर च, त न द्रुह्येत् कतमच्चनाह, अध्यापिता ये गुरु नाद्रियन्ते विप्रा , वाचा, मनसा, कर्मणा च, यथैव ते न गुरोर्भोजनीया ,तथैव तान्न भुनक्ति श्रुत तत्, 'यमेव विद्या शुचिं, अप्रमत्तं, मेधाविन, ब्रह्मचर्योपपन्न, यस्ते न द्रुह्येत् कतमच्चनाह, तस्मै मां ब्रूया , निधिपाय, ब्रह्मन्' " ( ऋग्वेदशाखामन्त्रा , निरुक्ते यास्केनोदाहृता , सायणेन ऋग्वेदभाष्यभूमिकाया अपि निरुक्तात् )। "विद्ययैव सम कामं मर्तव्य ब्रह्मवादिना,आपदि अपि हि घोरायां न तु एनां इरिणे वपेत्, अधर्मेण च य आह, यश्चाधर्मेण पृच्छति, तयोरन्यतर प्रैति, विद्वेष वाऽधिगच्छति सावित्रीमात्रसारोऽपि वर विप्र सुयन्त्रित , नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ' (म०),"तप श्रद्धे ये ह्युपवसन्ति अरण्ये, शान्ता , विद्वास , भैक्षचर्यां चरन्त , सूर्यद्वारेण ते विरजा प्रयान्ति, यत्रामृत स पुरुषो ह्यव्यय-

ऽस्मा, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणि श्रोत्रियं ब्रह्मनिष्ठ, तस्मै स विद्वान् उपनिषण्णाय सम्यक् प्रशान्तचित्ताय शमान्विताय, येन (यया)अक्षरं पुरुषं वेद सत्यं, प्रोवाच तां तत्वतो ब्रह्मविद्यां"(उ०)। अध्यापकाश्चाध्येतार कति अद्यत्वे 'सुयन्त्रिता' ? परस्पर च वर्त्तन्ते पितृपुत्रवत् कति ? ( ३२० )। तथापि , ऋषिभि , लोके , मातृवत् हृदयालुभि , कथंचित् लोभने व्याजे , आगमविद्या तु शिक्ष्यते, श्रोतुमिच्छति नैव एते किन्तु, मोहवश गता , 'संस्कृत' चापि, धर्मं चापि, उपजीवन्त्येव च, इतिहासपुराणान्तर गूढार्थां ह्यवितोऽखिल , बृंहयतु कथ वेदान्, तयोर् अर्थेऽपि अशिक्षिता ?

आश्रमदुर्दशा ।

ब्रह्मचर्यऽश्रमार्थाय दुर्लभा योग्यशिक्षका , सद्ब्रह्मचारिणश्चापि दुष्प्राप्या साम्प्रत तत , सद्ब्राह्मणा न गुरव , कुत सद्ब्रह्मचारिण ? दुर्विनीता, ऽसस्कृतश्च, स्वय अध्यापको यदा, अध्येतारं कथ सोऽय सस्कुर्याद् विनयेत अपि ? भगवन्मनुनाऽऽदिष्टा मर्यादा गुरवे तु या, न दृश्यते पाल्यमाना गुरुभि साम्प्रत तु सा । "उपनीय गुरु शिष्य शिक्षयेत् शौच आदित , आचार, अग्नि कार्यं च, सन्ध्योपासन एव च" (मनु०), आवश्यक्य इमा शिक्षा शिष्यम्भ्ये अध्यापके कति ? स्वय न शिक्षितास्तत्र, शिक्षयतु अपरान् कथ ? शास्त्रार्थवत् तु शास्त्रार्थं भूय पंडितमानिना, सभासु दृश्यते प्राय, कोलाहलमयी भृश; (३३०), राक्षसी श्रूयते प्राय वाग् , न मायस्तु सूनृता, "त्रयवो राक्षसीं आहु वाच उन्मत्तदृप्तयो ,सा योनि सर्ववैराणा, सा हि लोकस्य निर्ऋति , एव्मीं दुग्धे, विप्रकर्षति अरश्मीं, कीर्ति सूते, दुष्कृत या हिनस्ति, ता चापि एता मातर मङ्गलाना, धेनु धीरा सूनृता वाच आहु "(उत्तरचरित), न जिज्ञासा, न शुश्रूषा, नापि तत्पदभुञ्जता, 'विद्यार्थिनो' भवन्तु स्वाम्, सन्या 'विद्यार्थिता' नहि, विद्वास मन्यमानेषु सत्या विद्यापि नो, तथा । "उपनीय तु य शिष्य, वेद अध्यापयेद् द्विज ,सकल्प, सरहस्य च,त 'आचार्यं' प्रचक्षते, एकदेश तु वेदस्य, वेदाङ्गानि अपि वा, पुन , योऽध्यापयति, वृत्त्यर्थं, 'उपाध्याय ' स उच्यते, निषेकादीनि कर्माणि य करोति यथाविधि,सभावयति च अन्नेन स विप्रो 'गुरु'रुच्यते"(मनु)। आचिन्य सर्वान् शास्त्राधान् धर्मान्, य स्वय आचरेत्, अनुसारेण तेषा च, शिष्यैश्चाचार येन् तथा, निदर्शनेनऽचारस्य स्वस्य, गाढ प्रभावयन्, आचारेण शिक्षयेद् य , स

'आचार्य' इति स्मृत, नान्यो, यो न ईदृश, न तु शब्द उत्तम अर्हति । "यद् यद् आचरति श्रेष्ठ तत्तदेव इतरा जन" (गी०), (२४०), आचार्या, वापि, उपाध्याय, गुरवाश्च तादृशा, क्रियतो भारते वर्षे दृश्यते ननु साम्प्रत ? इदानीं विंशवर्षीया युवानो, ऽल्पबुद्धय, अदृष्टव्यवहाराश्च मौग्ध्येऽपि न सुस्थिरा, न शिक्षिता सदाचारे, न स्थितप्रज्ञता गता, पठित्वा कतिचिद् ग्रन्थान्, प्रश्नैस्तेषु परीक्षिता, 'आचार्य' पदवीं गुर्वीं लभते हि सहस्रश । अत 'आचार्य'-शब्दोऽद्य, न स्व अर्थं व्यनक्ति अस्मां । शास्त्रात् न शास्त्रा निश्चेतु सदाचारान मनाननात्, आचारयेयुर् अन्यांस्ते नआचरत स्वय, कथ ? दूरापेत सदाचार, विस्मृत ब्रह्म (शुक्र) रक्षण, कामार्थांस्तु दुराचारान् आचरन्ति स्त्रियैति अपि, अध्यापकाश्चाध्येतार भृश स्व पर-दूषका । आचार्योपाध्यायशब्दैर भूषितानां इय दशा । ब्रह्मचर्याश्रमो नष्टो भ्रष्टोऽधर्मे तु सर्वथा ।

गृहस्थधर्मान् के नु अद्य, समृन्नान्, पालयन्ति च ? वानप्रस्था- प्रस्थितास्तु प्रायशो लोप एव हि, सन्यासि मठधीशानां दशा चापि न तिरोहिता ।

विद्यार्थी, पाठशालाया पत्नीमेव विवाहते, जनयति अपि अपत्यानि गृहस्थो ऽपि भवेस् तथा, (२५०), एकत पुस्तके व्यग्रो, अपरतो जीविकाऽर्जने, वानप्रस्था चिते काम व्यग्रैरेव योज्यते, 'देशभक्ति' 'देशहित' नामके अदूरदर्शिभि, कारा वासेषु चैवाय क्लेश्यतेऽपि, तथाऽन्यथा । अथवा, स्वयमेव अद्य, प्रतिष्ठार्थं तद् ईहते, प्रेरणाद् देशसेवादिभावाश्रयेण चाथवा, तद्ध्यानेन अथवा, दम्भात्, स्वार्थं साधयितु [illegible] वा । बाल्ये वा, यौवने वा, ऽन्य धत्ते काषायचीवर, दुराचारेषु च सत पतति व्यथ पुन पुन, धर्षितो, दाम्भिकैर् दुष्टै, प्रकृत्या मोहित स्वया, इतो भ्रष्टस्ततो भ्रष्टो,ऽन्येषां च भ्रंशकारक । एव सर्वाश्रमाणां हि धर्माणां घोर संकर, देश प्रवृत्त, कुरुत घोरानर्थपरम्परा । विद्यार्थिन 'स दाराश्च' 'ब्रह्मचर्य'-आश्रमे स्थिता, सापत्या, जीविकाव्यग्रा, 'देशसेवा' रता अपि, गृहस्था, न गृहे पुन, ईर्ष्या द्वेष अर्दिता भृश, स्त्रिय परनरआसक्ता, परदाररता नरा, काषाय वेषा निर्लज्ज महासम्पत्तिधारिण, विरक्तरूपिणो रक्ता भक्तभार्याऽभिमर्शन वञ्चनपरा क्वचिद्, वैडालव्रतिका परे, (२६०), आश्रमाणां दशा हि इय, दारुणा कलि-कारिता । रौप्याणां बहुकोटीभिर् मित आयो हि धार्मिक, मठ-मंदिर तीर्थानां, कुपात्रैर अद्य लभ्यते, अनाचार-दुराचार कार्येषु अपि अपव्ययते । सुवि

धार्मिककार्येषु, देशोद्धारकरेषु, स वीर्येण चेद्, अभ्युदय प्रजाना सर्वतो भवेत् । नरा. नार्यश्च बालाश्च विश्वड् नन्देयुर् अजस्रा ; विद्याप्रचारशालाश्च, सत्कर्माणां चित्तदेहयो , पुष्टयुपायानुशीलिन्य , चिकित्सालयास्तथाऽन्यथा , मनुष्याणा पशूना च रक्षणात्र आदरस्रा. , वाणिज्यवार्त्ता विविधा, कर्मान्ता विविधास्तथा, धृतिदा ये मनुष्याणा,'स -म्यंग-मग्ना ' अपि , व्यायामप्रयुद्धशालाश्च , अप्युद्यानोपवनानि च, क्रीडास्थानानि रम्याणि, विहारा शोभनास्तथा , मुमुक्षु भनुरुशुश्रूना, सम्यग दर्शनसाक्षिणा, आत्मध्यानोपयोगीनि स्थानानि सुखदानि च—"शुचौ देशे प्रति ष्ठाप्य स्थिर आसन आत्मन , कृत्वा एकाग्र मनो, युञ्ज्याद् योग, आत्मविशुद्धये" ( गी० ), सुन्दराणि सुरम्याणि मन्दिराणि शुभानि च, सात्त्विकीना हि मूर्तीना, पुरुषाणा तु नेत हि, ( २७० ) ; सर्वमेतत् , निराबाध, प्रवर्धेत दिने दिने, जनाना ननु भोगाय भुक्ति मुक्ति प्रसिद्धये, त्रिवर्गाभ्युदयायार्थे, पश्चात् नि श्रेय साय च-पूर्वोक्तो धार्मिको भाव चेद् वीर्येत विवेकस । किन्तु आशा सा निरस्ता पुन धैर्यैर् आधमसकरै॰ । यत॰ 'स्वराज्य लाभाय, योऽन्, दासत्वतु त्रिते , परराज्यात् भ्रष्टोद्विग्नै , क्षुधा चापि नियोजितै , सम्यह परदेशीयैर् अधिक्षिप्तैर् निमानितै , राजभृत्यै स्वदेशीयैरपि एव अवमानितै , पराधीनत्वपीडाना अभीक्ष्ण तीक्ष्ण वेदिभि —तस्मिन् यत्ने यदि तु एते सर्वे 'काषायधारिण ', 'वैरागिण ', 'उदा सीना ', 'कल्कीशा ' 'दुर्दर्शका ', 'अराक्षिन ', तथा, 'नागा ', 'जनूपटा ', यत्कुप-श्रिन , नानारूपधरा भिक्षाऽऽजीवा कार्पटिका खला , भारायमाणा गृहिणा, साहाय्य कुर्युर् एकदा, न दूरा स्यात् स्वराज्यस्य प्राप्तिर् अथ तदा ननु । भोगे विलासे च रता किन्तु वैराग्यदम्भिन , कृत्येभ्यो विमुखा सर्वे, क्षुद्रस्वार्थेषु तत्परा ( ३/० ) ।

विद्यार्थिनो,गृहस्थाश्च,स्वराज्योद्योगकारिण कारावासे प्रवेश्यते,पीड्यते बधबधनै , भ्रमदेशैश्च दण्ड्यन्ते तद् आश्रित विनाशनै , 'विरक्ता ' किन्तु मोदन्ते, वेशिनो, निर पत्रपा ।"काम्याना कर्मणा न्यास सन्यास कवयो विदु "(गी०),एव भावोऽस्य शब्दस्य, पूर्वं, कृष्णेन शासित , इदानीं स तु सर्वोऽपि भृश विपरिवर्तित , जैह्मय औपस्थ्य परे , मूढे , मिथ्यासन्यासवेशिभि , "सद्-भावे, साधु भावे च, सद् इति एतत् प्रयुज्यते, प्रशस्ते कर्मणि तथा, सत् शब्दोऽय उदीर्यते" (गी०), सर्व-सद्भाव-साधुत्व सत्कर्मन्यास एव वै, चर्या च तद्विरुद्धानां, सत् ( न् )

क्षिप्यते। दैत्या राजासनं प्राप्ता, राक्षसा ब्राह्मणासन, यक्षा वैश्यासन आसीना', नरके पातिता प्रजा। युवानो वृद्धवज्जीर्णा, वृद्धा यौवनकांक्षिण। "दुरितैर् अपि कर्तुं आत्मसात् प्रयतते नृपसूनवो हि यत्, तद् उपस्थित अग्रहीद् अज पितुर् आज्ञा इति, न भोगतृष्णया, स्वल्पदस्वर, प्रतापवान्, व्यवहार आसन आददे युवा, त्रिषु दण्डधरम, निदण्डवान्, गुरुचीर प्रययास्तु विष्टर' (रघु०), "वाग्दण्डश्च, मनोदण्ड, कायदण्डस्तथैव च, यस्यैते निहिता बुद्धौ, त्रिदण्डीति स उच्यते" (म०) (३९०)। "अग्निवर्णं अभिषिच्य राघव स्वे पदे तनय अग्नितेजस, शिश्रिये, श्रुतवता अपश्चिम, पश्चिमे वयसि नैमिष वशी, तत्र तीर्थसलिलेन दीर्घिका, तल्प अन्तरितभूमिभि कुशै, सौधवास उटजेन विस्मृत, सञ्चिकाय फलनिस्पृहस् तप। शैशवेऽभ्यस्तविद्याना, यौवने विषयैषिणां, वार्धक्ये मुनिवृत्तीना, योगेनान्ते तनुत्यजा" (रघु०)। अथ ▪ रुचिरआदर्श, लोककल्याणकारक, प्रज्ञानिना प्राचीनानां, मर्वांऽस्माभिस्तु विस्मृत', सङ्करोऽपि आश्रमाणा च, वर्णाना चापि सङ्कर, प्रसृत सर्वतो हि अन्ध, देशाध पात कारक। वयोऽनुरूपधर्मस्य चरणे 'श्रम्यते' जनै, समाहितेन मनसा च, आदरेण उद्यमेन च, 'आ' समन्तात्, स्थिती तस्मिन्, तस्मात् ख्यातोऽय, 'आश्रम,' सम्प्रति एषा निरर्थिकेषु सर्वथा वितथीकृता।

रूपकाणि, तदर्थलापन आवश्यक।

'समुद्रे' शयन विष्णो, तन्नाभे 'पद्म'-जन्म च, उत्पत्तिर्ब्रह्मणस्तत्र, 'मधु कैटभ'स्तो भय, ऊरौ 'भनाई' हनन तयोरपि च विष्णुना, 'समुद्रमन्थन, देवै दैत्यैर्, मंदरदण्डत', 'कूर्मपृष्ठे' निधाय एत, रज्ज्वा 'वासुकि'ना तथा, तस्मात् चतुर दशानां च 'रत्नाना', च 'श्रियो', जनु, हालाहल'विष'स्यापि, 'वारुण्या', 'अमृत स्य च, (४००) 'सैंहिकेय शिरश्छेद 'दिव्यचक्रा' विष्णुना, लुब्धस्यामृतपानार्थे दैत्यस्य तु सुरद्विप, स्थितस्य कपटेनापि 'मध्ये' 'भास्कर चन्द्रयो', 'गिरणोद्गिरणं' 'राहु शिरसा' ग्रासकृत् तयो, 'वृत्र'सुरवधश्चापि, यस्यैका 'तनुर्' अस्पृशत् दिव, भुव द्वितीया च, 'दधीचि अस्थि'-कृतेन च 'वज्रेणैव' 'महेन्द्रेण', हत्यायाश्च विभाजनं', वृक्षयो-जल-कूलेषु नारीष्वपि, चतुर्विध, सर्वथा 'पापचिह्नानां' 'धरै' प्रच्छादन तथा, 'चन्द्रेण' 'गुरु'-भार्यायाः 'ताराया' हरण', तथा तस्यां 'बुध'स्य जन्म, अथ 'सग्राम' 'तारका'मय', तदन्ते 'गुरवे' 'दान' 'ताराया' ब्रह्मणा पुन,

बुधस्य-तारागमने वृष्ण्यां, 'चंद्र-वंशस्य' जन्म च; 'सूर्य-भार्या-अश्विनी-नासा-पुटयोर्' जन्म चा'अश्विनोः' 'नाम'त्वयोः, भिषक्त्वं' च 'देवानां'उत्तमं तयोः; विन्ध्यस्योच्छ्रयणे, सूर्यमार्गरोधः ततो, विधेः आज्ञया अगस्तेः'आसन्ने' 'दक्षिणे', पर्वतस्य च 'प्रणामो' अर्घ्यं दंडवद्, यः न अधुनापि समाप्यते; सप्त-द्वीप-अब्धिनिर्माणं 'प्रिय-व्रत-रथ-धर्मैः'; सिन्धोः 'पानं' अगस्त्येन, 'मूत्रत्वेन' विसर्जनं; (४१०); 'अहल्या'-अभिचारश्च, शापन च 'इन्द्र-चन्द्रयोः', तस्याः अपि च, तद्भर्त्रा 'गौतमेन' महर्षिणा, 'सहस्राक्ष'त्वमेकस्य, 'पाक्षिको' ऽन्यस्य च 'क्षय':, अहल्यायाश्च निः-संज्ञ-'शिलात्वं' बहुवार्षिकं, 'राम'स्य 'पादस्पर्शेन' संज्ञालाभः पुनस्तया; ब्रह्मणश्च अश्रुबिन्दुभ्यो'ऽसंख्यरोगसमुद्भवः; क्रोधात् च शुनेभ्यः केशेभ्यः तस्य 'भवानी'च संभवः; स्खलितस्य महेशस्य, मोहिनीरूपधारिणः, धातूनां पारदादीनां उत्पत्तिर्, वीर्यतः तथा; 'वराह-विष्णोः, भूम्येण, सहात् भौमस्य जन्म च, 'भार्याः', 'दक्ष'-सुताः सर्पाः, 'कश्यपस्य' प्रजोद्भवः, ताभ्यश्च जीवजन्तूनां सर्वेषां जननं तथा, देव-असुर-नराणां च, तिरश्चां, यादसां अपि—ईदृश्यः संति शतशः पुराणेष्वद्भुताः कथाः; अप्रतर्क्याः, असंभाव्याः, बुद्धिमाद्यास्तु नैव याः।

उक्तं महर्षिभिः सर्वं किं पुनर् मत्तजल्पितं? नैवं। किं तर्हि?। सन्त्येव कृत्रिमाणि ॥ सर्वथा, कृतानि आख्यायिकारूपैः अद्भुतैः, बुद्धिपूर्वकं, वैज्ञानिकानां तथ्यानां रूपकाणि एव, तत्त्वतः (४२०)। आध्यात्मिकोऽर्थः केषांचित्, केषांचिदाधिदैविकः, तथाऽपरेषां केषांचिद् आधिभौतिकः एव हि; अनेकेऽर्थाश्च केषांचित्; सादृश्यात् सूचितास्तथा, सर्वत्वंगेषु प्रकृतेः 'समता'-न्यायदर्शनात्। यथा माहेश्वरैः सूत्रैः, पाणिनिश्चापि बोधितः तत्त्वं व्याकरणस्य, अथ वेदांतं कश्चिदप्यदपात्; 'संसार-चक्रं' इत्युक्तेः यथा, यश्च 'जगद्-भ्रमः', सर्वे परिमिताः हि अर्थाः 'संसरंत्ये'व 'चक्र'वत्, 'संगम्यंते' तथाऽगत्यांचद् 'भ्रमंति' च सर्वदा, इत्यर्थोऽयं गभीरस्तु सपदि एव हि सूच्यते। 'बालानां' रोचनाय, अपि प्रमदो बुद्धिवृद्धये 'विपृच्छिषावर्धनेन, जिज्ञासोद्बोधनेन च, कुतूहलात् कृते प्रश्ने, उत्तरैस्तदनंतरं, तत्त्वार्थानां च कथनैः, तेषां सच्छिक्षणाय च, तादृश्यो वात्सल्यैः पूर्वैः अद्भुताः निर्मिताः कथाः। एवं एव हि सर्वाणि रूपकाणि तु पंडितैः, 'स्वार्थैर्' आधुनिकैर्नु न व्याख्येयानि दयालुभिः, जनानां सुखबोधाय, वर्धनाय धियां क्रमात्। किंतु सर्वोऽपि तत्त्वार्थो रूपकाणां तु विस्मृतः पंडितैः स्वधर्मेवाद्य, अवधीर्यंते च पृच्छकाः, आक्रुश्यंते च; निंद्यन्ते, आक्षार्यन्ते च धर्षणैः—

(४३०) 'अक्षरार्थं न मशय्य', 'श्रद्धेयोऽस्ति अय एव हि' 'नास्तिक्यं अत्र जिज्ञासा', 'शंका पाप महत् खलु', 'सद्य स नरक गन्ता मदिग्धे यो मनाग अपि'। देश दशायां ईदृश्यां, स्वातन्त्र्येण विचारका, वदेषु च पुराणेषु मिराम्थाश्चावधारिण भवे युश्चेत् किमाश्चर्यं, 'हिन्दु'धर्म च सर्वथा ?। विज्ञानाना नवानाना पाश्चात्याना सहा यत, प्रज्ञानाना पुराणाना गमीरै मननै स्थिरै, लुप्तानि गूढज्ञानानि लप्स्यते प्रायश पुन । भारते तु एतदर्थं हि प्राक्प्रतीच्यो समागम, कल्याणाय उभयोरेव निर्दिष्टो जगदात्मना, किंतु उभयो पापबुद्ध्या जात पाश्चाकरलयो (४३१ आदिम १३४२ श्लो०)

---

४ अध्याय

बुद्धिविमद 'महाजन बुद्धिर्निर्णयत्री।

'बुद्धिरेव हि निर्णेत्री'—सत्यमेतत् तु भासते तथाऽप्युत्पद्यते प्रश्न —बुद्धिर्नाम्य न एकयते बुद्धे बुद्धे मतिर्भिन्ना, मतभेद पदे पदे, अश्वत्थामा यथा प्राह कृपं, पर्वणि सौप्तिके, 'सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तर सर्वस्यऽत्मा बहु मत, सर्वोऽप्यात्म प्रशसति तस्यैव तु मनुष्यस्य सा सा बुद्धिस्तदा तदा, काल योगे विपर्यास प्राप्याऽन्योऽन्य विपद्यते, अन्यया यौवने, बाल्ये, बुद्ध्या भवति मोहित, मध्येऽन्यया, जरायां तु सोऽन्या रोचयते मतिं" (म०भा०), मिथो विव दमानेषु धर्मकृत्ये च शास्त्रिषु, निश्चेय हि कथ—'मान्योऽयमेव अध्यामवित्तम ? इदमेवात्र तत्र—'कृत्ये सामाजिके सति, समष्टिबुद्धिरेवात्र कुर्यात् अन्त्य विनि र्णय—माननीयो हि सर्वेषा अयम् अध्यात्मवित्तम'। वैयक्तिके स्वके कृत्ये, स्वबुद्धि स्यात् प्रमा-समा। 'श्रुतयो विभिन्ना, स्मृतयोऽपि भिन्ना, नैको ऋषिर्यस्य वच प्रमाण, धर्मस्य तत्त्वं निहित गुहायां 'महाजनो' येन गत स पन्था" (म० भा० वन० यक्ष-युधिष्ठिर-सवादे)। 'सदाचारिभ्याच, च सद्वृत्तात्, यशसा च बहुश्रुते, तपो विद्या-समायुक्तोऽयमेवाध्यात्मवित्तम'—इत्येव निर्णय कर्तुं नान्य शास्त्री, महाजनात्। (१०)। 'महाजने', 'लोकमते', 'भूयसीये', वसन्, स्वय 'वासु देवो', महत्त्व, कुरुते त विनिर्णय, कार्यं तु स्तम्भ आपन्ने, नैवास्ति गतिर न्यथा। 'महाजन', तु 'जनता'जनानां निवहो महान्, यथोक्त धृतराष्ट्राय महा मान्येन मन्त्रिणा आद्या धर्मावतारेण विदुषा विदुरेण हि। "एक पापानि कुरुते

परम शुभे 'महाजन', देशाचारान् समयान् जातिधर्मान् बुभूषते यस्तु, परावरज्ञ, स यत्रतत्राभिगतः सदैव 'महाजनस्य' आधिपत्यं करोति"(म०भा० विदुरनीति), प्रेषितो दमयन्त्या यो नलस्यान्वेषणे द्विजः, "मृग्य वै जनसंसत्सु, तत्र तत्र, पुनः पुनः,'क्व नु त्वं,कितव !,छित्त्वा वस्त्रार्धं,प्रस्थितो,मम !", प्रत्येत्य नगरीं भैमीं, भैमीं मर्त्ये उवाच स —'अयोध्यां नगरीं गत्वा, भागास्वरिर् उपस्थितः, श्रावितश्च मया वाक्यं त्वदीयं ॥ महाजने,ऋतुपर्णो महाभागो, यथोक्तं, वरवर्णिनि".."(म० भा० नलो०)। स्पष्ट 'महाजन'पर्योऽत्र 'जनसमुद्' हि, मापर ❀

कुमारसम्भवे चोक्त कविना कुलशालिना, "त्रिलोकस्य गुरोऽसमधिष्ठित त्वया, 'महाजन' स्मेरमुखो भविष्यति" (कु० सं०)। (२०)। वात्स्यायनेनापि तथा कामसूत्रेषु भाषित—" .'महाजनेन' चरितं राज्ञां अनुविधीयते, यतो, अतम् एव न चापिष्टं कर्तव्यं पारदारिकं" (वा० का० सू०)। तर्केऽप्रतिष्ठे, मतिषु भिन्नेषु, श्रुतौ स्मृतौ चाप्यविके समक्षं, धर्मस्य तत्त्वे निहिते गुहायां, 'महाजन'-स्यैव हि बुद्धिरिष्टे—'अयं हि मान्यो, ह्यपगाम्यवेत्री, धर्मस्य तत्त्वं किल बुद्धयां अस्त्येव सर्वं निहितं च, सर्वं अस्त्येव बुद्धिश्च हितं करिष्यति'। व्यावहारिके वस्तुनि नैज बुद्धि, सार्वत्रिके बुद्धिसमष्टिरिष्टा, समाजधर्मे पतिते तु संशये, समाजबुद्धिर्हि पथप्रदर्शिका। एकाकिनोऽधिकारो वा, कृत्य वापि, न विद्यते, उभौ अपि प्रवर्तेते मध्यपन्थेऽस्मिं सह एव हि। "अनायका विनश्यति, नश्यति बहुनायका, कुनाय काश्च नश्यंति,तस्मात् कार्यं सुनायक", "सर्वे यत्र तु नेतारः, सर्वे पण्डितमानिनः, सर्वं प्राधान्यं इच्छति, तद् वृन्दं आशु नश्यति"। तथो विद्या-युतो नेता,निःस्वार्थी, सुपरीक्षित, रागद्वेषविमुक्तश्च, निष्पक्ष, कीर्तिमान् बहु,भूयसां श्रद्धितो, यत्र, तत्र स्यात् 'लोकसंग्रह', 'कर्मवर्णा'नुसारेण, सर्वेषां च सुखं तथा। 'लोक विग्रह' एव स्याद्, यत्र नेता न तादृश। (३०)। "सैनापत्यं च, राज्यं च, दण्डनेतृत्वमेव

❀महाभारतटीकायां पूर्वं एवास्ति ज्ञापित शब्दोऽयं नीलकण्ठेन, बहुविदेन, धीमता। 'महापुरुष' इत्यर्थो ग्रान्त्यैर अन्यैस्तु कथ्यते, महान्तः पुरुषा नूनं कथयन्तु भवति हि, परन्तु तेषां प्रामाण्यं, निर्णयाय भ्रान्तिमाय वै, निरस्तं पूर्वमेवास्ति, मतभेदात् परस्पर, ऋषीणां भिन्नवचसां नैकत्वादिति हेतुः। अन्यथापि विनाय वै प्रयोगेऽस्मिन् विशेषत, शब्दो गुर्जरभाषायां अद्यापि एव प्रयुज्यते, वक्तु लोकस्य निवहं, संघं, जन समागम। (५)।

च, सर्वलोकाधिपत्यं च, वेदशास्त्रविद् अर्हति" (म०)। प्रजा-वृतो 'नृ-पो' यत्र, तथैव च 'पुरो हिताः', प्रजा-वृताः मंत्रिणश्च, तत्र तु अस्ति समन्वयः, 'एक'-'प्रजा'-'संघ'-'गण'-राज्यानां किल सर्वथा। 'एको' नृपो, मंत्रि-'गणाः', 'प्रजा'-'संघ'स्य 'संमताः', प्रजाभिश्च 'वृताः', तस्मात् सर्वेषां अत्र संग्रहः।

सर्वमानवसंग्रहः।

संग्रहेणैव जेष्यंति 'हिन्दवो' न तु विग्रहैः ; अपरोधेन रंस्यंति, न विरोधैः कदाचन ; परिवेष्ट्यापरान् धर्मान्, जरयित्वा तथाऽऽत्मनि, प्रभविष्यंति सर्वत्र, शक्ष्यंति अपि आत्मरक्षणे ; इयमेव प्रथा पूर्वं आ-सम्राड्-हर्षवर्धनम् ; तावद्, याः परदेशेभ्यो भारतं समुपागताः जातयः, ताः समन्तात् चतुर्वर्णेषु मेलिताः, गुण-कर्मानुसारेण, क्रमशश्चार्यतां इताः ; शकाः हूणाश्च, यवनाः, हिमवत्प्रान्तवासिनः, अन्ये च केचित्, कविना बाणेन खलु वर्णिताः, हर्षवर्धनयोधेषु, ये गताः भारतीयतां ; तासां विशेषधर्माश्च कालेन विलयं गताः, मनोः साधारणे धर्मे, नाममात्र-विशेषिताः। (४०)। तत्पश्चात्, 'जन्म-वर्णस्य' प्राबल्येऽत्यधिके कृते कुमारिला-दिभिः, भूयान् विग्रहः समवर्धत, परस्परं च, 'हिन्दूनां', बाह्यागन्तुभिरेव च ; ह्रासश्च तेषां अभवत् ; भवत्येवाधुनाऽपि च।

यद्वे कुमारिलादीनां नूनं आसीत् तु कारणं ; बौद्धधर्मः स्वकाद् रूपात् शुद्धाद् भ्रष्टश्च भूरिशः ; प्रायशस्ते दुराचाराः 'भिक्खवो' वाममार्गिणः, प्रजासु मुग्ध-मूढासु काम-तन्त्र प्रचारिणः, बभूवुर्वै ; विहाराश्च भैरवीचक्रभूमयः, सामग्रीभिर्वि-लासानां, धनैः रत्नैश्च पूरिताः, राजनीत्युपजापानां षेटकानां च पोषकाः। तेषां विरो-धिनस्तस्मात् प्रायशो भारतेऽभवन्। 'भिक्खवो', दमनाय एषां, शकहूणान् न्यमंत्र-यन्। ततो देशीयराजानः क्रुद्धाः तेषु भिक्षुषु, तत्संचितानां कोषाणां भूयिष्ठां चापि लोभतः ; कुमारिलादीन् बौद्धानां दमनाय अनुजगृहुः ; बभञ्जुर् बुद्धमूर्तीश्च, विहारांश् चाप्यनेकशः ; स्वच्छंदोद्वाहापवाहात् व्यभिचारस्य च भयात्, प्रवर्ति-तान् भिक्खुभिश्च, विनिवर्तयितुं, तथा जन्मवर्णप्रथां भूयो दृढयामासुर् उत्कटं (४०)।

भवेद् व्यवस्था सा, तस्मिन् काले, देशोपकारिणी ; कालप्रवाहतो जाता सा-ऽधुना तु अपकारिणी, 'अति'-आदरात् जाति-नाम्नि, गुण-कर्मानपेक्षणात् ; "आश्र-येन् मध्यमां वृत्तिं, 'अति' सर्वत्र वर्जयेत्"। जन्म-वर्ण-व्यवस्थायां भ्रष्टायां 'अति'-वर्षणात्, 'कर्मणः' सर्वथा त्यागात्, सा युद्धेन विशोधिता, रक्षणेनापवादानां

जातानां गुण-कर्मतः। भ्रष्टायां तु पुनस्तस्यां, दोलानीत्या, पुनः तदा, कुमारिलादिभिर्यत्नःपरिष्कर्तुं कृतस्तु तां। साम्प्रतं सा पुनर्भ्रष्टा, नवं संस्कारं अर्हति। कुमारिलस्य एव काले, शंकरस्य च, मुस्लिमाः अवास्कंदन् सिन्धुदेशं, द्विविष्टे हर्षवर्धने ; तत्कालीनैर्द्विजैश्चापि 'म्लेच्छ-म्लेच्छे'ति निन्दिताः, कोपिताश्च भृशं ; नैव चतुर्वर्णेषु मेलिताः। संत्येव तेषु विद्वांसः, सन्ति चैव उद्भटाः भटाः, पाश्चात्यदीक्षालब्धास्तेषु, संति च धर्मकिंकराः। त एव किं मांसभक्षाः ? हिन्दवः किं न तादृशाः ? सुरा न पीयते तेभ्योऽधिकं किं ननु हिन्दुषु ? गोमांसं वर्जयन्त्येके ; वाराहं अपरे तथा; निरामिषभुजस्तु उभौ समाने परम-अशुची। वर्जनीये सुरा-मांसे इत्येवमादिशास्ति प्रभुः स्वायम्भुवस्तु भगवान्; मन्यते कति हिन्दवः? वदन्तोऽन्यान् 'अशुद्धांश्' च, अपि अशुद्धाः तु तरां स्वयं। 'देवलस्मृति'कारेण विदुषा दूरदर्शिना, बलाद्-धर्मं नीतानां 'शुद्धयै' यत्नः कृतः; परं नासौ सफलतां यातो; द्वेष एव व्यवर्धत (१०)। 'अन्ये हि अशुद्धाः' एव इति 'शुद्धि'-शब्देन ध्वन्यते ; स्व-समाज-शरीरे हि स्थापनं, मेलनं, तथा जारणं, पाचनं, तु नाभूवन् नीतिर्; अस्ति च साम्प्रतं। आद्यः प्रजापतेर् नूनं सर्वसंग्राहको मनुः ; स्वस्यैव संततेश्चायं कथं विग्राहको भवेत् ? संग्रहस्यैव कालोऽयं, विग्रहस्य न कर्हिचित्। मानवानां उपचयः सर्वेषां संग्रहेण हि ; विग्रहेण च सर्वेषां क्षयः एव विभाव्यते। 'कर्म-वर्ण'-प्रकारेण शक्यते स च संग्रहः मानवानां अशेषाणां ; अन्यथा न कथंचन। विशदः पुनरप्येषो ऽर्थोऽग्रे भूयः करिष्यते। जन्मनैव हि वर्णश्चेद्, भवेल् लोकस्य विग्रहः, नित्यं नूतन-जातीनां उत्पत्या 'वर्णसंकरात्', परस्परं चास्पृश्यानां, द्विषन्तीनां परस्परं। 'जन्मनैव अहमुच्चोऽस्मि, नीचस्त्वं जन्मनैव च'—यत्र सन्ति ईदृशाः भावाः, कथं स्नेहः परस्परं, कथं वा संग्रहस्तत्र, कथं वा तत्र संघता ? नास्त्येव, कारणाद् अस्मात्, संघता ननु हिंदुषु। गुणैः उच्चत्वनीचत्वे मान्ये नः सर्वमानवैः, कर्मभिर् ननु ; न तु एवं केवलं किल जन्मना। (४०)। "एतद्देशप्रसूतस्य सकाशाद् अग्रजन्मनः, स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः." (म०), न केवलं भारतीयाः, इति शास्ति प्रजापतिः। "ब्राह्मणः, क्षत्रियो, वैश्यः, त्रयो वर्णाः द्विजातयः, चतुर्थः एकजातिस्तु शूद्रो ; नास्ति तु पंचमः" (म०), पृथिव्यां तु समग्रायां ; इत्याज्ञा यस्य निश्चिता ; सा एषाऽऽज्ञा शिरसा धार्या, पाल्या चापि प्रयत्नतः। दक्षिणे, व्यपदिश्यंते बहवः, किंतु, 'पंचमाः', मनोर् आज्ञां अवज्ञाय, एतन्मन्यैस्तु 'ब्राह्मणैः' ;

वैश्यानां क्षत्रियाणां च लोपः एव हि तैः कृतः, गर्वोक्तिः यद् इव तेषां—'कर्ता आद्यन्तयोः स्थितिः'। 'एकवत्' तत्र संयोज्य दर्पोक्तौ, अभिमानिनः इत्थं हि यतो 'विप्राः', 'शूद्र'वत् क्षुद्रबुद्धयः, 'आदि'-अन्त्यात्तु ये सति, शब्दे 'आद्यन्तयोः' इति, ते 'शूद्रेभ्यो'ऽविवेच्याः स्युः बालबुद्धिभ्यः एक'वत्', कठोरहृदया नूनं 'अनुजेषु' भद्रवात्यः। एकवत्स्थितिरेव तु स्यान्नूनं 'विप्र शूद्रयो'। ये, तथा, 'अग्रजन्मानो' हि, 'अनुजानां' हितैषिणः, समृद्धिकामाः, सर्वेषां चतुर्णां पोषकाः, तथा स्वयं विनीताः, ते हि एव 'द्वि-ज' शब्दार्हतां गताः। (९०)। सर्वेषां मानवानां हि जनको भगवान् मनुः, सर्वे मनोः अपत्यानि 'मनुष्याः', 'मानवाः' इति, 'मनुजाः' चाभिधीयते, "पृथिव्याः सर्वमानवाः"। "मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत्, ब्रह्म क्षत्रादयः तस्मात् मनोर्जातास्तु मानवाः" (म०भा०)। 'वर्णं' चातुरया विद्वन्, सर्वदेशनिवासिनः मानवान् अवरोद्धुं च, संग्रहीतुं च, शक्नुयात्, यदि वै 'वर्ण' शब्दस्य 'कर्मणा' वर्णनं भवेत्। 'कृण्वन्तो विश्वमार्यं' च वेदध्वनिः स्वनति स्फुटा, या, सापि व्यवहार्या स्यात्, क्षिप्रं च सफला भवेत्।

वर्णानां लक्षणानि, जीविकाश्च।

वृत्त-वृत्ति अनुसारेण, स्वभाव-गुण-कर्मतः 'कर्मणा वर्णः' इत्येव सिद्धान्तो, न तु जन्मना। यस्मिंस्तपश्च विद्या च, स एव ब्राह्मणः स्मृतः, यस्मिन् रक्षा च शौर्यं च, स एव क्षत्रियो भवेत्, यस्मिन् दानं धनं धान्यं, वैश्यः स्मृतः स एव हि, यस्मिन् सेवा, न विद्या तु यस्मिन्, शूद्रः स उच्यते। "वर्णाः तु कर्मणा अस्य, त्रीणि कर्माणि जीविका, अध्यापनं, याजनं च, विशुद्धाच्च प्रतिग्रहः, शस्त्रास्त्रभृत्त्वं क्षत्रस्य, वणिक् पशु-कृषिर्विशः, त्रयाणामपि धर्मस्तु दानं, अध्ययनं, यजिः" (मनु०), (१००), यथा तु विविधां कृत्वा शारीरैश्च परिश्रमैः, शिल्पैश्च विविधैरेव, 'भृतिः' या लभ्यते तत्र, स्व वर्णाद्, अन्य वर्णेभ्यो वा, सा शूद्रस्य जीविका, "अवश्य भरणीयो हि वर्णानां शूद्र उच्यते" (म०भा०)। एताभिर्वृत्तिभिर्वर्णाः चत्वारोऽपि विवेचिताः। यादृशीं जीविकां कुर्याद्, वर्णस्तस्यास्ति तादृशः; 'कर्मणा वर्णः' इत्यत्र 'कर्मार्थः' खलु 'जीविका'। 'वर्णो ऽन्यो' 'जातिः' अन्याऽस्ति; 'वर्णः' 'आजीवः' उच्यते, 'पेशा' इति, 'रोज़गार' इति, 'जीवनोपायः' इत्यपि, 'जातिस्' तु 'जननात्' 'जन्मनो' गोऽश्वमहिषादिवत्, चत्वारो 'जीवनोपाया' "वर्णाः" मुख्याः, पुरा उदिताः, चतुर्णामपि वर्णानां विप्रादीनां, यथाक्रमं, चतुर्षु राशिषु एतेषु सर्वेऽन्ये

निपतन्ति हि, उपवर्णा, अंतराला, अन्तर्भूता, अपान्तरा, गुणप्राधान्यतस्तेषां भाजनं मुख्यराशिषु ।

एव विभागे वृत्तीनां हेतु, स्वाभाविको गुण ; जीविकार्थं च सधर्मो मा अति भूद्, हेतुर् इत्यपि ।

वृत्तिसंकर एव वर्णसंकर ; तस्य घोर परिणाम ।

वृत्त्या एकया एव जीवेत्, न कुर्याद् वृत्तिसंकर; वृत्तिसंकर एवास्ति दारुणो वर्णसंकर, विभिन्नवर्ण'नारनो' तु उद्वाहो वैवाहिक संकर, 'वर्ण' शब्दो 'वृत्ति प्राची यतो, न खेव जन्मन । (११०) । 'विप्रो'यज्ञभिक्षा कुर्वीत्, 'रक्षा'आजीव अथ क्ष्त्र या, अथवा 'वार्त्तया' जीवेत्, 'सेवया' एवाथवा एकया, एव कृते न कस्यापि वृत्त्यभावो भवेदिति । 'प्रजा सृष्ट, वृत्ति च आदिष्ट दक्ष, पूर्वं, तपघृणा, असृजद् वृत्तिं प्रयामे, प्रजानां हितकाम्यया, यथा हि अमृत आश्रित्य, वर्त्तयन्ति दिवौकस, तथा वृत्तिं समाश्रित्य, वर्त्तयन्ति प्रजा, विभरे', यन्मे अजाप्यते सोम, स च गोषु प्रतिष्ठित,ततो देवा प्रभाद्न्ते एवं वृत्ति, तत प्रजा । प्रजातानि एव भूतानि, प्राक्रोशन्, वृत्तिकांक्षया; वृत्तिद चान्यपद्यत, तृपिता पितृमातृवन्" (म०भा०, अनुशा०, अ० ७९), "अन्नं ब्रह्म", मिमा तु अथ, भेतरेतु ऋषि, पुरा, येदा मैव विभान्ति स्म, कथा औपनिषदी तथा, "मनुष्याणां समारम्भा सर्वं आहारसिद्धये", (म० भा०), "सर्वैआरम्भ, तण्डुल प्रस्थ मूला", इत्येपोऽस्ति आभाणको वै जनेषु ।

दारुया अति प्रजत्व दोषा ।

विभाजने अपि वृत्तीनां, स्वभाव-गुण कर्मत, सर्वैरपि उचितो लाभम् तदा तासां (वृत्तीना)भविष्यति,यदा न अति प्रभत्व स्यात्;'मात्स्यो न्यायो'ऽन्यथा भवेत् अदन्ति एकैकमन्यास्तु यथैं यथं हि लक्षदा, अन्योऽन्य भक्षयन्येव ते, तेषा न्याय एष स । "बहुप्रजा निऋतिमाविवेश बहुप्रजा कृच्छ्र आपद्यते च (निरुक्त०) (१२०), नातिप्रजत्व उचित, "अति सर्वत्र वर्जयेत्।" कालक्षपि प्रजावृद्धि, वरस्तो, भगवान् मनु, दोषा-पश्यन् अतिवृद्ध, सूचयति आत्मनिग्रहं—"यस्मिन् ऋण सनयति, येन चानन्त्य अश्नुते, स एव 'धर्मज' पुत्र, 'कामजान्' इतरान् विदु", धर्मज सुत एव इच्छेत्, न इतरान् कामजान् बहून्, इति आचार्योऽस्त

विस्पष्ट , सूचनस्य प्रजापते ; "कामात्मता न प्रशस्ता, न च एव इह अस्ति अका मता," द्वाभ्या, एकेन वा, तुष्येत्, "विस्तर [illegible] न कारयेत्" (म०)।

एकेनानेकवृत्तीना सकरे कृते आत्मनि, वहवो वृत्तिहीना स्यु ,केचिच्च धनवत्तरा , वहूना अति दारिद्य, स्वल्पाना अति ऋद्धता, सर्वत्र 'अति' प्रवर्तेत, स्याद् व्यवस्था न मध्यमा, "आश्रयेत् मध्यमा वृत्ति,अति सर्वत्र वर्जयेत्"—उत्तमस्य न्यस्यास्य भवेत् भङ्गो ऽयमर्थकृत् । यद् इदानीं महान् क्षोभ जगद् व्याप्नोति मानव, तत्र हेतु प्रधानोऽय वृत्तीना एव सकर,स्वल्पाना च अति सम्पत्ति ,विपत्तिर्भूरि भूयसा जनाना अति सम्बाध ,पृथ्व्या,तत्रापि कारण,(मू०),अ यादृशो धनस्यापि, स्वल्पत्व च तपस्विना, कृताश्रम कृतबुद्धीना, विद्यासचितवर्चसा, शुचीना, लोकमान्याना, तप सम्भृततेजसा, भयाद् यत्तेजस , पापा वर्जयेयुश्च दुष्कृत, अनुकुर्युं जना सर्व येषा सच्चरित तथा, धने च नाति लुभ्येयुर् दृष्ट्वा तज्जीवन शुचि । ईदृशा हेतव सति लोकस्य दुरवस्थितौ । "आचिनोति च शास्त्रार्थान्, धर्मान् आचा रयत्यपि स्व, अन्यांश्च, सदाचार, तस्माद् आचार्य उच्यते', सन्निर् आचरि तैरेव स्वीयैर्ब शिक्षयेज जनान् । पुण्यान् अपि उपदेशान् , य दुराचारी स्वय, वदेत्, निर्वीर्यान् ते, न गृह्णते मनुष्यै , छलवाक्या । शिक्षा हि आचारपुष्टा एव, शिष्यचित्ते प्रभाविनी । 'सद्ब्राह्मण' पदार्होणा, तपोविद्याभृता सदा, 'कर्म-वर्ण' स्थापकाना, धर्म कर्म विभाजिना, प्रचारकाणा सद्भाव सज्ज्ञानाना च यत्नत , 'आचार्याणा' ईदृशाना सर्वत्रैवादि "अदर्शनात्, वृषलत्व गता लोके" प्राय सर्वेऽपि मानवा , राजसं तामसे भावे व्याप्ता , न त्वेव सात्त्विके (१४०)। उक्त हि मनुना, अन्यैश्च, पुराणेषु, महर्षिभि , "जातय क्षत्रियाणा ता , यवना , दरदा , खशा , वृषलत्व गता लोके, ब्राह्मणाना अदर्शनात्", यस्मिन् समाजे विद्वास , शुचय , सत्तपस्विन , अल्पसख्या अपि स्यु , स समाजो नैव हीयते "स्वधर्मनिरता विप्रा , ( यदा, तदा ) क्षत्रियास्तान्, अनुव्रता , क्षत्रियान् अनु वैश्याश्च, शूद्रा वैश्यान् अनुव्रता " ( म० भा० ), ब्राह्मणा तादृशा यस्माद् दृश्यते नहि साम्प्रत, देशोऽय दुर्दशाग्रस्त "ब्राह्मणाना अदर्शनात्"। "तप , सत्य, दया, दान '—एभिर् यस्तु चतुष्पाद "वृषो हि, भगवान् धर्म , [illegible] लाति, वृष-लो हि स " ( म० भा० )। असात्त्विकैर्विवाहैश्च, तथाऽसात्त्विकभोजनै, भारते च विशेषेण, 'नामक' विमोहनै चित्ते देहे च विकृता , भूयन्ते विकृता'

प्रजा, प्रवर्धते चानुदिनं सा हि अनर्थपरम्परा, मार्कण्डेयेन, श्रविणा, भारते, वनपर्वणि, कलिवृत्तान्तकथने, विस्तराद् गदितं यथा। (१५०)।

मानवजगद्व्यापी द्रोह ।

इदानीं घोरयाऽवस्थया व्याप्तं वै मानव जगत्, रणाश्च बहुदेशेषु प्रवृत्ता प्रब यतरा, विशेषा चास्था विश्वस्य द्वितीयार्धे समुद्भूता, त्रिशद्दिवसे वर्षैर् ये संख्या म्यस्तीह नैव हि, महाभारतसंग्रामात् विश्वभीमतरा तथा, रामरावणयोर्युद्धाद् भीमा विंशगुण तथा, अपि भूयो विवर्धन्ते देशे देशे दिने दिने। प्राचीन 'चीन' साम्राज्य प्रजाकोपेन विप्लुतं, विद्राविल च साम्राज्यं प्रजाभी 'रूसक' महत्, तथा 'तुरुष्क'-साम्राज्य, राज्य 'पारस्य' एव च, 'जर्मनाना' च साम्राज्यं, राज्यं 'स्पेनीयक' तथा, 'चीन जापानयो' युद्धं, 'रूस जापानयो' अपि, 'फ्रैंचाना', 'ब्रिटनाना' च, 'जर्मनानां' तथैव च, 'इटालियाना', 'स्पेनाना', तथैव 'अमेरिका' युता 'पारसीक'-'तुरुष्काणां', 'अर्बाना', 'अफगानिना', 'पोलाना' 'फ्रेन्निशाना', च, तथा 'इयवीनां'-युता, 'ब्रिटनस्य' च सेनायां तथा भारतवासिना योधानां प्रेष्यभूतानां विनाशे युद्ध कारिणां, किमन्यत्, सर्वजातीना, सर्वत्र, जगतीतले, (१६०), पृथिव्या सर्वदेशेषु, यभसि, अम्भसि, चापि स्थले, जृम्भते अहर्निशं सदा, घोरं, देवासुरं यथा, विपुलान्, बहूनि नृणां, मरलं मानव जगत्। ब्रिटिशैर्शासिता भीते, सद्भिस्रक्षप्रलोभनात्, दण्डीर्यैर्, भारते चापि घोरं क्षोभं समुत्थितं। विघृय वा, निहत्य एव, राजानं स्व प्रवर्त्तिता या, अनेकेषु अपि देशेषु, 'प्रजाराज्य' विश्रम्भता, न उत्पादयति सतोषं प्रजाना सा, मनाग् अपि, प्रत्युतउत्पादयत्येवाशान्ति घोरतरा ननु, अद्भुताना उपज्ञाना सूक्ष्म विज्ञानशालिनीं, दुष्प्रयोगा यथार्थैव, न हिताय नृणां, पुनः, सत्राक्षोत्पादनायैव, नाशवस्त्रोपसम्पदे। तत् सर्वं कलितं, नूनं, बुभुक्षा संकरस्य च, विपुलिताया तत समागता अनवस्थिते। कारणं मानवस्याथा सर्वदेशेषु भूतले, कर्त्तृणा मुख्यवस्थाया 'ब्राह्मणानां अदर्शनं', न 'सम्यग्दर्शिन' ते, ये सन्ति अथ ब्राह्मण युवा, ये 'सम्यग्दर्शिन', याता से तु प्रायो हि 'अदर्शनं'। सद्‌शिक्षाया अभा वोऽस्त, तपसा निग्रहस्य च, सज्ज्ञानाना विलोपश्च, कुभावानां प्रचारणं, (१७०), काम क्रोध लोभ मोह मद मात्सर्य वर्धनं, प्रजाना च मिथो द्रोहः, शासकैश्चापि पीडनं, दुष्टाना शासकानां च स्वच्छन्दत्वं, भयं विना। "ब्राह्मणं तु स्वधर्मस्थं दृष्ट्वा विस्मरति चेतरे", स्वधर्मं चानुतिष्ठन्ति, कृत्स सर्वं च कुर्वते, "अन्यथा, क्षत्रिया-

,द्यास्तु; तस्माद्विप्रमप्यचरेत्" ( शु० नी० ) । "त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः, कामः, क्रोधः, तथा लोभः, तस्माद् एतत् त्रयं त्यजेत्"(गी०); द्विजैरेव त्रयोऽप्येते पोष्यन्ते यदि अहर्निशं, लौल्यमेव इन्द्रियाणां च, अप्यासक्तिर्विषयेषु अस्ति, तदा सर्वं कथं न स्यात् जगदेवाधरोत्तरं ?

आत्मज्ञानाऽवश्यकता ।

आत्मज्ञानविलोपाच्च, तथा चास्य अप्रयोगतः जीवनव्यवहारेषु, समाजस्थापनाय च, रागद्वेषनिरोधाय, चंटनाय च कर्मणां, संकरात्सर्ववृत्तीनां आपन्ना घोरदुर्दशा । "यदा चर्मवद् आकाशं वेष्टयिष्यंति मानवाः, तदा देवं अविज्ञाय दुःखस्यान्तो भविष्यति" (उ०), न ज्ञात्वा परमात्मानं, देवानां देवमुत्तमं, ज्ञानशुद्धेः, भावशुद्धेः,कर्मशुद्धेर, न सम्भवः ।(१८०) । "सैनापत्यं च राज्यं च दंडनेतृत्वमेव च, सर्वलोकाधिपत्यं वा, वेदशास्त्रविद् अर्हति" (म०); 'वेदस्य शास्त्रं' वेदान्तः, आत्मशास्त्रं यद् ईरितं । "यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति, सर्वभूतेषु चाऽऽत्मानं", स न कंचित् जुगुप्सते (उ०); आत्मवत्सर्वभूतेषु स एवाऽऽचरति ध्रुवं; यस्तु नैवं विजानाति, वेत्ति भिन्नान् परांस्तथा, स भेदबुद्धिसंमोहात्, स्वार्थाय, द्वेष्टि तान् परान्, 'अति' स्वार्थात् ; परार्थाच्च प्रीतिः, प्रीतिः, ततः सुखं, "सर्वभूतस्थितं यो मां आत्मानं वेत्ति तत्त्वतः" (गी०), आत्मनः प्रकृति चापि, स वै न्यायेन वर्तते । स्वदेहमेव तु आत्मानं वेत्ति यो भेददर्शनः, अन्यदेहान् परान् एव, स द्वेषैर् अभिभूयते । यत्र सच्छिक्षकाः संन्ति, पुराणेतिहासवेदिनः सर्वव्यापिनमात्मानं पश्यंति च निरन्तरं,अतः एव सदा संति' सर्वभूतहिते रताः", सुव्यवस्था समाजस्य तत्र स्यात्, स्खलनं विना । स्त्रीभिः सतीभिः, सत्पुंभिः, जगत् सत्येन धार्यते ।(१९०)।'श्रत्' शब्दोऽयं तु वेदेषु 'सत्य'-नामसु पठ्यते; 'श्रद् एतद्' इति 'धत्ते' या, 'श्रद्धा' सा बुद्धिर्उच्यते । यस्यां सभायां 'श्रद्धेयाः' संति वै प्रायशो द्विजाः, सा एव 'धर्म'-सभा, सा एव सद्धर्मान् परिकल्पयेत्, समये समये, सर्वलोककल्याणकारकान्, यैः समाजे सुव्यवस्था स्थाप्येत,अपि दृढीभवेत्, परस्परं च श्रद्दध्युः सर्वेऽपि ननु मानवाः । सत्यवत्सु विश्वासः, विश्वासात् प्रीतिसंभवः, प्रीतेर् अन्योऽन्यसाहाय्यं, ततो ऋद्धिः, ततः सुखं; व्याख्या इयं खलु सूत्रस्य— 'जगत् सत्येन धार्यते' । "सत्यं च,समता चैव, दमश्चैव न संशयः,अमात्सर्यं, क्षमा चैव, ह्रीः, तितिक्षा,ऽनसूयता, त्यागो, ध्यानं, अथाऽऽर्यत्वं, धृतिश्च सततं, दया,

अहिंसा चैव, राजेन्द्र !, सत्यऽकाराः त्रयोदश; यद्भूतहितं अत्यन्तं, तत् सत्यं इति नः श्रुतं । असत्याद् भवति क्रोधः, कामो अपि, भरतर्षभ !, शोक-मोहौ, विधित्सा च, परासुत्वं (शिथिलत्वं) तथैव च, लोभो, मात्सर्यं, ईर्ष्या च, कुत्सा, असूया, अकृपा, भयं, त्रयोदशैतेऽतिबलाः शत्रवः प्राणिनां स्मृताः" (म० भा० शां०)। "न सा सभा यत्र न सन्ति वृद्धाः, वृद्धाः न ते ये न वदन्ति धर्मं, नासौ धर्मो यत्र न सत्यमस्ति, सत्यं न तद् यत् छलं अभ्युपैति" (म० भा०);(२००); ईदृशाः सद्द्विजाः यस्मिन्, स समाजः समृध्यति; असत्यवादिनो यस्मिन् भूयांसः, स विपीदति ।

सर्वरोगभेषजं-समाजसुव्यवस्था ।

समाजसुव्यवस्था एव सर्वरोगस्य भेषजं; गुण-कर्म-अनुसारेण, नान्यथा, यदि 'वर्णता'; गुण-कर्मादि-अभावेऽपि जन्मना केवलं नहि । उत्तमं जन्म-कर्मभ्यां, कर्मणैव च मध्यमं, मिथ्या एव केवलं जात्या, वर्णपदं स्मृतं बुधैः । न केवलं तु तपसा, नापि केवलविद्यया; न केवलं तु शौर्येण, नापि केवलरक्षया, न केवलं तु दानेन, नापि केवलवार्तया; न केवलं सेवया एव, नापि भृत्या एव केवलं, नानुवस्तु उभयेनैव, त्रुत्या अप्युचितया तथा, विप्र-क्षत्रिय-विट्-शूद्र-शब्दार्हो भवति, क्रमात् । "तपः-श्रुताभ्यां यो हीनो" यदि असौ ब्राह्मणो भवेत्; भारावैव समाजस्य, विप्राय प्रतीतेद् असौ । "जात्या न क्षत्रियः प्रोक्तः क्षतत्राणं करोति यः, चातुर्वर्ण्यबहिष्ठोऽपि, स एव क्षत्रियः स्मृतः"; ...' एतौ हि नित्यं संयुक्तौ इतरेतरधारणे ; क्षत्रंवै ब्रह्मणो योनिः योनिः क्षत्रस्य वै द्विजाः" (म० भा० शां०, अ० ७३) ; "विशः" च नाम, सामान्य सर्वेषां, वैदिकं, नृणां; चतुर्णामपि वर्णानां योनिः प्रत्यक्षतो 'विशः' । (२१०) । 'विशः' सन्ति 'प्रकृतयः'; 'वर्णाः' 'विकृतयः' तथा, सर्वे पदार्थाः सूक्ष्माः 'विकाराः' 'प्रकृतेः' यथा । "न अब्रह्म क्षत्रं ऋध्नोति, न अक्षत्रं ब्रह्म वर्धते" (म०), न अवैश्यं उभयं जीवेत् न अशूद्रं त्रितयं चलेत्; मुख-बाहु-उरू-पद्-वत् ते सर्वेऽन्योऽन्यं उपाश्रिताः । कार्त्तवीर्यस्य समये, सम्पाते ब्रह्मक्षत्रयोः, ब्राह्मणैः सह वैश्याश्च शूद्राश्चाप्येकतः स्थिताः; त्रिःसप्तकृत्वो युद्धानि तेषां आसन् परस्परं; प्रजानां कदनं चाभूत्, गर्भानामपि घातनं, समाजऽकुलता घोरा, धर्मकर्मादिसंकरः; लुलोप वर्णभेदश्च, निर्मर्यादं अभूज् जगत्; "अधरोत्तरापचारेण म्लेच्छभूताश्च सर्वशः, आत्यतां समनुप्राप्ताः, बहवो हि द्विजातयः" (म० भा० ); नवीनः प्रविभागश्च

वर्णानां धर्मकर्मणा पुन. कृतम्तु तत्पश्चात्,कश्यपेन महर्षिणा,"व्योकार हैमकारादि जातिभ्य क्षत्रिया कृता" ( म० भा० शा० अ० ४८ ), पर्शुरामेण वसता चाप रातेषु वै, तदा, तत्र येभ्यो नवीनाश्च तद्योग्या ब्राह्मणा कृता , (२२०), (प्रसिद्धा अद्य तद्वश्या सन्ति 'चिपावन'आख्यया—मत एव केषाचिद्, अन्ये त्वेव न मन्वते ) , कथा त्वेषा ब्रह्मवैवर्ते विस्तरेणास्ति वर्णिता ( ब्र० वै०, गणेश ख० ) गान्धार्येव कृष्णेन व्याख्याता शान्तिपर्वणि, सूचिता चापि भीष्मेण सेनापतिनियो जने । भविष्येऽपि प्रसिद्धास्ति कथा, कण्वो मुनिर्यथा 'मिश्र'देशमनुप्राप्त , प्रेक्षक', पृथिवीं अगन्, तस्मिन् देशे तदा नऽआसीत् काचिद् वर्णव्यवस्थिति , अकारयद् ऋषि स्तत्र समानप्यूहन नव, प्रकृतेश्च प्रवृत्तेश्चाप्यनुसारं,निवासिनां । पुराणेष्वितिहासेषु सर्वत्रैव, असकृत्, स्वभाव गुण-वृत्तिभ्यो दर्शितो वर्णनिर्णय ।

जीविका-वृत्ति प्रतिमा निर्णायिका ।

तथापि सशये, वृत्तिरेव निर्णयकारिणी , यादृशी जीविका यस्य तादृग् वर्णो ऽभ्यसकृत्, जीविकासाधने शक्ति , तादृशीं प्रकृतिं वदेत्, व्यवहार असप्राप्तो भवेत् सामान्य 'मानव' , "शूद्रेण हि समस्तावद् यावद् वेदे न जायते" ( म० ), 'जन्मना जायते शूद्र , सस्काराद् द्विज उच्यते"( अत्रिसंहिता ), "जगत् सर्व मिद ब्राह्म, कर्मभिर्वर्णता गत" (म० भा०) , (२३०) , व्यवहार तु सप्राप्तो जीविका साधक पुन ,तेन तेन उचितेनाथ 'वर्ण' नाम्ना विविच्यते। 'शिक्षको' मान वोऽय रक्षको' मानवो ऽपर , पोषको' मानवोऽन्यश्च,'सेवको' हि इतरो नर । स्वयमर्थो द्विजाति स्याद्, य कार्यारम्भणाक्षम , अपेक्षते पराज्ञाया परमश , स एकज ।'ब्रह्म वेद्मी' पजीवित्वात् ,'क्षतत्राणो' पजीव्यया,'भृकुट्यादिनिवेदेन','आशु द्रवात्' प्रेषिते सति—एवमेव हि चत्वारो मुख्यवर्णास्तु लक्षिता ।

प्राचीनानि उदाहरणानि ।

क्षत्रियौ कृष्णजनकौ, तुलाधारो वणिक् तथा, धर्मव्याध शूद्र एव, ऋषीणा मपि शिक्षका , केवल स्व स्व वृत्तीना वर्त्तनाद्, अविवर्त्तनात् । विश्वामित्र , गृत्समद वीतहव्यो,ऽथ मौद्गला , भरतस्यानुजा , गार्ग्या , क्षत्रिया बहवोऽपरे, एव वसिष्ठस्यश्वश्रू वैश्यश्चित्रमुखोऽपि च मतगश्चापि चाण्डाल , ब्रह्मर्षित्व प्रपेदिरे, तपसा विद्यया सार्धं जी धकापरिवर्त्तनात् । (२४०) । कृष्णो भोगी,शुकस्त्यागी, जनको राजकार्यकृत्, वसिष्ठस्त्वप्सर पुत्र इक्ष्वाकूणां पुरोहित , महात्मोपदेष्टा च

प्रज्ञानानां महानिधिः, पुराणकर्त्ता तत्पौत्रो वेश्यापुत्रः पराशरः, कैवर्त्याश्च सुतस्तस्य पुत्रो व्यासो महामुनिः कर्त्ता वक्ता इतिहासानां पुराणानां च भूरिशः, वेश्ना प्रतिसंस्कर्त्ता, ज्ञानप्रलोकप्रवर्त्तकः, मदालसा महाराज्ञी, सुलभा ब्रह्मचारिणी, चूडाला योगसंसिद्धा, वकंटी विदिताज्ञाना, गृहिण्यौ गार्गिमैत्रेय्यौ, गिरा देवी कुमारिका, शुक्रो गुरुस्तु दैत्यानां, देवानां च बृहस्पतिः, धर्मव्याधो व्याध एव, तुलाधारो तुलाधरः, वैश्य. समाधिः, दुर्गाया ज्ञानं आमोद् च उत्तमं, "ममेत्यहमिति प्राज्ञ नगाधिप्युतिकारक", वेश्याऽऽश्रमको ऋषिर्दैत्त, विष्णुभक्तश्च नारद, प्रह्लादो दैत्य राजश्च, पितृलोकपतिर्यम, काकरूपधरश्चापि भुशुण्ड पक्षिराड् अपि —ज्ञानं एकं तु सर्वेषां, कर्म तेषां पृथक् पृथक्, जीविका कर्मणा, वृत्त्या, वृत्तेन, एते विवेचिता, पृथक् पृथक् च वर्णानां नामभि प्रथिता भुवि। (२५०)।

साम्प्रतानि उदाहरणानि।

तृतीय प्रासङ्गी वार्ता, साम्प्रती श्रूयतां पुन। 'वकीलो', 'डाक्टरो', 'जजो', 'दूकान्दारो'ऽथ 'मास्टर', 'जमींदारो'ऽथ, 'मजूदूर', 'माली' वा, 'मेहतरो'ऽथवा, 'ग्वाला' वा, 'लोनिया' वापि, 'धानुको', 'मुसहरो'ऽथवा, 'सुनारो' वा, ऽथ 'लोहारो', 'कुम्हारो' वा, 'बहेलिया'—विवेचितास्तु प्रत्यक्ष सर्वे ते वृत्तिकर्मणा, जीविका-कर्मणां होषं प्रत्येकं नाम बोधक, अन्योऽन्यासद्दृश्यजातीनां जात एतर्हि वाचक। मूढग्राहेण सत्योऽर्थं कालेन वितथीकृत, जन्मनि एवग्रहस्यापि रूढ्या एव उत्सर्गभूतया, स्वभाव जनितानां च अपवादानां उपेक्षया, सर्वेषां अधि काराणां बहिर्भिन्नातिलिप्सया, विरवधिपया वापि कर्त्तव्यानां तु सर्वदा। अथवा भ्रमान्धकारध्वान्ता तु, मंथनिर्मितये ध्रुव, 'वर्णो', 'वृत्ति', 'जीविका' वा, 'पेशा', 'रोजी' इति वा तथा—पर्यायवाचका सर्वे शब्दा स्युः कोषसमहे।

'वर्ण'-'सवर्ण'-आदि शब्द-निरुक्ति।

निरुक्ति 'वर्ण' शब्दस्य, व्याकृति, श्रूयते, यथा—समाजे स्थाननिर्देशाद् 'वर्णनात्' पुरुषस्य वै, 'आच्छादनान्' नरस्यापि श्वेत कृष्णादि-'वर्ण' वत्, विशेषवृत्ति 'वरणाद्', 'वर्ण' इत्यभिधीयते। (२६०)। श्वेत रक्त पीत कृष्ण चतुर्'वर्ण' विभेदत, कस्मिंश्चिन् प्राक्तने काले स्युः वर्णास्तु विवेचिता, "ब्राह्मणानां सितो वर्ण, क्षत्रियाणां तु लोहित, वैश्यानां पीतकश्चैव, शूद्राणां असितस्तथा" (म० भा०),

न तु तत् साम्प्रतं सत्यं ; सत्यं सत्वादि-भेदतः। पातंजलमहाभाष्येऽप्येतदुल्लेखनं कृतं। येषां समाना ननु जीविका स्याद्, वृत्तं च, वृत्तिः, प्रकृतिश्च, कर्म, भवंति ते एव मिथः 'सवर्णा'; न केवलं नामजात्या सवर्णाः। समानशीलव्यसनेषु सख्यं सहैव चाहार-विहार-भाव', परस्परं चापि विवाहधर्मः, सौख्यप्रदः स्यात् ; न तु नेतराणां। न च तत्र बलात्कारो, विवाहे, वा सहाशने; समानशीलता-प्रीतिर्नीतिरेव नियामिका। "चयोश्चित्तेन वा चित्तं, निभृतं ( रहस्यं ) निभृतेन वा, समेति प्रज्ञया प्रज्ञा, तयोर्मैत्री न जीर्यति ;" "दुष्कुलीनः कुलीनो वा, मर्यादां यो न लंघयेत्, धर्मापेक्षी मृदुर्धीमान्, सः कुलीनशताद् वरः ; न कुलं वृत्तहीनस्य प्रमाणं इति मे मतिः, अन्तेष्वपि हि जातानां वृत्तमेव हि कारणं ;" "प्रयोजनेषु ये सक्ताः, न विशेषेषु, भारत !, तान् अहं पंडितान् मन्ये, विशेषास्तु प्रसंगिनः" ( म० भा०, विदुरनीति)। क्रियासु यद् योजयति पुरुषं,तत् 'प्रयोजनं',एषणाश्च स्वभावोत्थाः परमं स्युः प्रयोजनं, अनुवर्तन्ते एव एताः सर्वावस्थासु वै नृणां ; (२७०), एषणानां तर्पकाणि 'विशेषाः स्युः प्रसंगिनः', प्रसज्यंते अपसज्यंते, अवस्थानां परिवर्तनैः ; एकस्यास्तु बुभुक्षायाः भोज्यानि विविधानि वै ; एवं विवाहेऽप्याहारे, चित्तयोः समता तु वा, प्रज्ञयोः शीलयोः चापि, तथा व्यसनयोरपि, सा एव नित्यं मनुष्याणां सम्बन्धेऽस्मिन् सुखआवहा ; सुखं चापि, सुखेच्छा च, परमं नः प्रयोजनं, अविघातेन चान्येषां उचितस्य सुखस्य वै, साध्यते स्वसुखं येन कर्मणा, कार्यमेव तत्। समशीलव्यसनयोः विवाहः,कर्म तादृशं; सहाशनं च;नान्यस्य हि अनीप्सोर् दुःखकारणं। ( २७५ ; आदितः १६१८ श्लोकाः )।

---

## ५ अध्यायः

### चतुर्वैधर्मसंग्रहः।

'वेदो' हि तत्त्व-'विद्या' स्यात्, तज्जो धर्मस्तु 'वैदिकः' ; 'सनातनो' यद् आत्मा एव, तज्जो धर्मः 'सनातनः' ; "नित्यः सर्वगतः स्थाणुर् अचलोऽयं सनातनः" ( गी० ) ; 'आर्याणां' सम्मतो यस्माद्, 'आर्य'-धर्मः स एव हि ; सूक्ष्म सात्त्विकया 'बुद्ध्या' निर्णीतो, 'बौद्ध' एव सः ; सर्व 'मानव'-कल्याणकारी, तस्माच्च 'मानवः' ; 'महद्-बुद्धि-मनो'-अंशानां अवतारेण चैव हि

प्रोक्त भगवता यस्मात् 'मनुना', अतश्च 'मानव'। 'मानव'स्य अस्य धर्मस्य, 'राजधर्मस्य' चैत हि राज्ञश्च सर्वधर्माणां, राज्ञा धर्मस्य वै तथा, आन्वीक्षिकी प्रसूतस्य 'राजगुह्यस्य' तत्त्वत, प्रज्ञातस्य च वै सम्यक् दर्शनस्य प्रयोगत, चतुष्कैरेव कतिचित् सग्रह क्रियतेऽधुना। चतुर्वर्णाश्रमाणा चानुरोधाय चतुष्कता, न तु सग्रआग्रह कश्चिद् चतुष्के प्रतिपादने, यद् अत्र तत् कृत, तत्तु सौकर्यायैव केवल, द्विकै, त्रिकै, पञ्चकैश्च, षड्भिर्वा सप्तकैश्च वा, पदार्थाना तु गणन कृतमेव पूर्व पुरा, 'प्रस्थानभेदाद् भेद स्याद् दर्शनाना'' इतीह दिक्।

(१) 'आत्मा,ऽनात्मा च,'सम्बन्धो निषेधेन तयोरपि,परा मति 'समाहार'—साधिक तच्चतुष्टय (१०) वेदान्तस्य च निष्कर्षो,जगतो मूलमेव च,अन्येषा च चतुर्णाणा बीज आद्य सनातनं,निहित ब्रह्मणि परे,सर्व,सर्वत्र,सर्वदा। (२)सदैव सत् चिद् आनन्द स्वरस्य प्रत्यगात्मन ,गुणत्रय च,नैर्गुण्य च—स्याद् गुणचतुष्टय। (३) भाव्यो ह्यव्यक्तताऽवस्था, प्रकृते प्रत्यगात्मन, त्रैगुण्य व्यक्तताया च,ापि त्रय गुण चतुष्टय, ''सत्त्व रजस तम इति गुणा प्रकृतिसम्भवा'' (गी०), मूलाऽवस्था च प्रकृते तुर्या मूलगुणो भवेत्। (४) आत्म प्रकृत्योर्योगतोऽथ शरीरी (जीव)विचक्ष्यते, चित्तस्यापि हि चत्वारो धर्मा सत्येव सर्वदा, ज्ञान, इच्छा, क्रिया, निद्राऽव्यक्तता च चतुर्थिका, एव तु गण्यते चित्ते चित्तवृत्ति चतुष्टय, ''सत्त्व, ज्ञानं, रज कर्म, तमोऽज्ञान (इच्छा) इह उच्यते'' (म०)। (५) बुद्धि-अहङ्कृत्-मनश्-चेत्त, चतुष्टय् चित्तचतुष्टय। (६) बुद्धे अध्यवसाय स्याद्, अभिमानस्तु अहङ्कृते', सकल्पश्च विकल्पश्च, कल्पन, मनस क्रिया, चित्त चेतयते च, इति चित्तकर्म चतुष्टय। निश्चयो,ऽभिमति, कल्प, चेतन च तदेव हि, पर्यायशब्दा च एव अस्य, ज्ञान,इच्छा क्रिया,स्मृति। (२०)। बुद्धि सत्त्व,अहकारस्तमस् च,एव मनो रज,चित्त सर्वसमाहार, चयनात्,स्मृतिधारणात्, अखिलानुभवाना तु,भूत भव्य भविष्यता, 'क्रियाशक्तिरहकार' इति केचन मन्वते,'अह करोमीति' [illegible] ते शब्द व्युत्पादयन्ति हे, अन्ये 'ऽहम करोति' इति व्युत्पत्ति, 'कुम्भ कार'वत्, वदन्ति, वस्तुस्तु 'इच्छा'-मयोऽसौ पुरुषो हि 'अहम्'. ''अह करोऽभिमानोऽस्ति, मन सकल्पक तथा'' (सा० का०), 'अह भावो', 'ऽस्मिता', 'ऽहन्ता', पर्याया खलु,'अह कृते'; अहन्ताया' घनीभावो, दार्ढ्य, च 'नियम', 'स्थिति', 'मोह', 'आवरण', 'बध'—एव 'इच्छा' फल खलु, क्रियाशक्तिर्मनोऽत्र स्याद्, इच्छाशक्तिरहङ्कृति। 'प्रस्था-

प्रकाशो ज्ञान' च,'प्रवृत्ति चलन क्रिया', साङ्ख्ये योगे 'मोह इच्छा अवरण नियम-स्थिति'—गुणत्रयाणां धर्मांणां एते पर्यायवाचका (सां०-का०, यो० सू०-भा०, गी०)। (७) यथा चित्ते तथा देहेऽप्यस्ति तादृक् चतुष्टय—गुण, द्रव्य च, कर्मापि, तथा ऽभावस्य भासन। (८) एकैकगुणवैशेष्यात्, प्रकृतीनां चतुष्टय, 'वैशेष्यात् तु तद्वादस्तद्वाद'' इति सूचित (ब्र०सू०)(२०),"भूयसा व्यपदेश" इत्यादिति नैयायिकी प्रथा, सत्त्वादिगुणवैशेष्यात्, अनुद्भवतया तथा, चातुर्विध्य मनुष्येषु प्र कृतीनां प्रजायते,क्वचित् सत्त्वाधिका, केचिद्भवत्यत्र रजोऽधिका, केचित्तमोऽधिकाश्च, अन्ये ऽनभिव्यक्तगुणास्तथा। ब्रह्म क्षत्रिय विट् शूद्रा,सतो,वर्णचतुष्टय। तेषां सन्ति अधिकाराश्च, कर्तव्यानि तथैव च। (९) धर्मनिर्णयन, दुष्टदलन,धनसंचय, भृतिलाभ —चतुर्णां तद् अधिकारचतुष्टय। (१०) ज्ञानप्रचारण, रक्षाकरणं, दानपोषणे, सेवन, चेति तेषां तु कर्तव्यानां चतुष्टयं। (११) "ब्रह्मचारी, गृहस्थश्च, वानप्रस्थो, यतिस्तथा", एतेर्गृहस्य प्रभवैः अस्ति आश्रमचतुष्टय। (१२) स्वाध्य य, संतति-, यज्ञा, सर्वथाऽध्यात्मचिंतन, आश्रमाणां भवन्ति एतद् धर्माणां तु चतुष्टय। (१३) पुत्त्व, प्रौढिमा चापि, वार्धक्य च, जरा तथा, एतद् आश्रमयोग्यानां वयसां तु चतुष्टय। सत्त्व, ज्ञान, 'ब्रह्मचर्य', तम, इच्छा, 'गृह' तथा, रज, क्रिया 'वन', यश, 'सन्यासो' निर्गुण स्मृत। (१४) धर्मश्च च, अर्थश्च, कामश्च, चतुर्थो मोक्ष एव च, 'चतुर्वर्गो' इति प्रोक्त पुरुषार्थचतुष्टय। 'सत्त्वस्य लक्षण धर्मो,रज सस्तु अर्थ उच्यते,तमसो लक्षण काम",मोक्षो निस्त्रिगुण स्मृत (म०)।(४०)। (१५) धर्म सन्यसु पूर्वाह्णे, मध्याह्ने चार्थचिंतनं, अपराह्णे विनोद स्यात् काम शास्त्रकलादिभि, रात्र्यां च मोक्षसेवा स्यात् सुषुप्त्या, ( एतद् विशेषत, न सर्व कान्त्येन), तद् काल विभागस्य चतुष्टय। (१६) शरीरेषु अपि एतद्यानां च, चतस्रो मानसैषणा, शारीरेच्छाश्चतस्रश्च, हृदयऽप्यायनानि च, चत्वार्येव भवतीह लोप णानि मनीषिणां, लोक वित्त एषणे चैव, तथा दार सुत एषणा, मोक्षैषणा चतुर्थी च, तद् एषण चतुष्टय। 'स्यान मानो भवेल्लोके मम'—लोकैषणा हि सा, 'सम्प त्तिश्च, समृद्धिश्च, विविधाश्च परिग्रहा, शोभनानि च वस्तूनि स्युर्मे'—वित्तैषणा हि सा, दाम्पत्य चापि अपत्यानि, तथा परिजना बहु, स्युर्मम, ईश्वरता च एषु स्याद्'—सा दार सुतै षणा, 'सर्वद्वन्द्वैर्विमुक्त स्याम्, स्वच्छंद सर्वथैव च, सर्वथा ऽपि अपराधीन, स्वाधीनश्चैव सर्वथा, विमुक्त सर्वबंधेभ्य, इति मोक्षैषणा मता,

'अहं स्याम्', 'बहु च अहं स्याम्', 'बहु धा स्याम् अहं' तथा, 'सर्वमप्यहमेव स्याम्'—रूपं तासां क्रमाद् इदं , (५०) , 'अहमेव हि सर्वं स्याम्', 'न स्यात् किंचिद् अपि इतरत् , 'स्वे महिम्नि स्थितोऽहं स्याम्','स्यात् सर्वं हि मयि स्थितं' 'नाल्पः कथंचनापि स्याम्, भूमा स्यामेव सर्वथा', "यत्र नान्यत् × स भूमा" स्यात् "यो वै भूमाऽमृतं हि तत्" ( उ०)—मोक्षैषणाया रूपस्य सर्वं विवरणं विद् । 'अस्मिता'द्वयरूपाणि एव एषणानां चतुष्टयं , प्रातिस्विकी अस्मिता स्वेशा, या जीवात्मनि वर्तते , सार्वस्विकी अस्मिता चान्या, 'ऽहं ब्रह्मास्मी'ति भाष्यते । ( १७ ) सुखं, दुःखं,रागद्वेषौ,तथाऽभिनिवेशनं,इत्यस्ति ह्यस्मितजन्यं एतत् क्षोभ-चतुष्टयं । ( १८ ) लोभो, भयं (मोह इति), मदो, मत्सर एव च—कामक्रोधो-त्थं चैतद् अन्यत् क्षोभचतुष्टयं । (१९) सम्मानं च, सदैश्वर्यं,वित्तं च सुपरिष्कृतं, ब्रह्म च परमैश्वर्यं—इति, एषणचतुष्टये, मानसे, विषयान् आहु ,मनस्तोषचतुष्टयं —सम्मानं सात्त्विकस्याऽऽहु ,ऐश्वर्यं राजसस्य च,स्वं तामसस्य, क्रीडा क्रीडा-पकजस्य च ।(२०) दैहिकं चापि तत्रास्ति तादृग् इच्छाचतुष्टयं—"आहारेच्छा,धनेच्छा च, रतीच्छाऽपि शरीरिणां (देवी भा०), चतुर्थी दैहिकी चेच्छा स्वास्थ्य विश्राम-कामना । (२१) अन्नं,धनं, मिथुनता,क्रीडाद्रव्याणि चैव हि, इच्छानां विषया —ते हि शारीरं इष्ट चतुष्टयं ।(६०)। (२२) चतस्रो वृत्तयो वा , ता जीविकानां चतुष्टयं –शिक्षणं याजनं ऽऽदाने,शस्त्राणां च धारणं ,कृषि गोरक्ष वाणिज्यं, अन्येषां सेवनं तथा (म०) । (२३) आहाराश्चापि च वार , सात्त्विको राजसः तथा, तामसश्चापि, मिश्रश्च–तद् आहारचतुष्टयं। (२४) ब्राह्मो, दैवः , तथा चार्षः , प्राजापत्यश्च,ये स्मृता सात्त्विका , राजसौ तौ यौ उक्तौ गान्धर्व राक्षसौ , आसुरस्तामसो, घोरः पैशाचो वर्ज्यं एव हि, पापिष्ठो वंदनीयश्च, तद्विवाहचतुष्टयं । अपराधास्तु चत्वारो, विविधा यत्नात्मका , (२५) दुष्प्रयोगेण बुद्धेश्च, चातुर्येण च, कारिता , मदेन साहसेनाथ, तथा औद्धत्येन प्रेरिता , पारुष्यरूपिणं , वाचा कृता , शस्त्रादि भिस् तथा, लोभेन प्रेरिताश्चापि, प्रकृत्या वाल्ययापि वा, एवं स्याद् अपराधानां राशानां चतुष्टयं । (२६) तस्यैवापि अनुसारेणास्ति अपराधिचतुष्टयं, ज्ञान क्रिया इच्छा प्राधान्याद्, बुद्धेरव्यापित्वं तथा । (२७) दण्डाश्चतुर्विधाश्चापि, प्रकृतीनां विभेदतः —प्रायश्चित्तात्मको, अङ्गानां छेदन वेधनं वधः , धनदण्डो, ऽथ कारायां बन्धनं दासता तथा । (७०) । "वाग्दण्डं प्रथमं कुर्यात्, धिग्दण्डं तदन-

न्तर, तृती धनदड तु, वधदडमत पर" (म०), "धिग्दडो ब्राह्मणाना स्याद्, क्षत्रियाणा भुजार्पण, धनदडश्च वैश्याना, शूद्राणां देहदडन" ( म० भा० ), ; मत्रिना अपमानेन, दुष्करेषु नियोजनं रजस्विनां तु कायपु, धनापहरणात् तथा तमस्विना, अनुद्बुद्धे , शरीरे खलु दडन। (२८,"क्षत्रियो बाहुवीर्येण तरेद् आपद आत्मन , धनैर् वैश्य ", श्रमै शूद्र , "विप्रो होमजपादिभि ' (म०), आपदा तरणस्य एतद् उपायाना चतुष्टय। (२९) बल चतुर्विध चापि,शास्त्र शस्त्र धन श्रमा , चतुर्णां मतु वर्णानां एतद्दण्डचतुष्टय। (३०) परिग्रहाश्च चत्वार , वर्णकर्मोपयोगिन —पुस्तकादीनि, शस्त्राणि, भाण्डानि, करणानि च। ३१) विनोदाश्चापि चत्वार , चतुर्वर्णानुरूपेण —प्रवह्लिकाना प्रकृते ,शोभाना च, निरीक्षण, आलयो, मृगया, चाश्विहस्त्यादिदमन तथा, कला-कृतीनां चयन, द्यूतानि विविधानि च, व्यायामा' विविधा , भूयो भोजन पानमेव च। (३२) आयुर्वेदे चतस्रश्च मुख्याः प्रकृतय स्मृता , वैत्तिकी, वातिकी चापि, तृतीया श्लैष्मिकी तथा, तिस्र प्रसिद्धा सत्येव, स्याद् अन्यका चतुर्थिका,(३३) चिकित्साश्चापि तत्रैवास्त् तावत्य स्युरस्य हाय, (३४) पित्त सत्त्व, रजो वात , तथैव च कफस्तम , अनभिव्यक्तम च ( अत्र चिकित्सा दौषुकी पृथक् )। (३५) अग्नि पित्त, तथा वातो वायु , श्लेष्मा जल स्मृत, तेषां च साम्यावस्था या व्याख्ये, भावश्चतुर्थक अग्नि सर्वं प्रकाशि त्वात्, पवन चचल रज , तामस सलिलं चैव, पृथिवी सर्वधारिणी; आयुर्वेदोक्त एतत्तु मत दोष चतुष्टय। (३६) बिंदुर, व्यामश्च, वृत्त च, ख ■-ज्योतिश्चतुष्टय। (३७) एकं, नाना च, ऐश्वर्यं, शून्य च—गणिते युग। (३८) साम, दान, भद-दडौ—नीतिरीतिश्चतुर्विधा, "यथैव रक्ष सु न साम युज्यते, तथार्थदुर्गेषु न दानमिष्यते, बलेन दस्येषु न भेदसंभवत्, चतुर्थ एवाऽत्र ततो ऽभिधीयते ' (वा० रा०), इति प्रवीरस्य हनूमतो वच सुधीमतो रावणपु प्रभजने। साम सत्त्व, रजो दानं, भेद स्या मोहक तम , दडस्तु सर्वसमाहो सर्वेषा प्रतिभू स्मृत । षाड्गुण्य ॥ चतुष्केऽस्मिन् नीतेर् अंतगत ननु, सधि साम, तथा दंडो, विग्रहो, यानमेव च, द्वैधीभावस्तु भेदोऽस्ति, तथैवासनमेव च, संश्रयो दान साम्यो—ऽस्यात् तन् नीतिचतुष्टय। (३९) देवता—परमा माया, गौरी, वाणी च, पद्मजा, देवा श्चापि—परमहा,शिवो,विष्णु ,चतुर्मुख।(४०)इच्छाशक्तिर् उमा प्रोक्ता,क्रियाशक्ति रतथा इन्दिरा, ज्ञानशक्तिर् गिरा ज्ञाता, महाशक्ती समाहृता , रजोऽधिक स्मृतो

ब्रह्म, ज्ञानशक्त्या च संगतः, विष्णुस्सत्त्वाधिकश्चापि क्रियाशक्त्या विवाहितः; तमोऽधिको महादेवः संसृष्टः सर्वदा 'उमया'; सर्वेऽपि देवीदेवास्तु परात्मनि समाहृताः। (९९) प्रणवस्य चतुष्कं तु ज्ञेयं विस्तरशोऽधुना; "एकाक्षरं परं ब्रह्म, प्राणायामः परं तपः, सावित्र्यास्तु परं नास्ति, मौनात्सत्यं विशिष्यते। आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता, स गुह्योऽन्यस्त्रिवृद् वेदो, यस्तं वेद स वेदवित्। उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः, स-कल्पं स-रहस्यं च, तमआचार्यं प्रचक्षते; वेदः कृत्स्नोऽधिगन्तव्यः स-रहस्यो द्विजन्मना, तपोविशेषैर्विविधैः, व्रतैश्च विधिचोदितैः; धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः, ते शिष्टा ब्राह्मणाः ज्ञेयाः श्रुतिप्रत्यक्षहेतवः" (म०); "एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयं, तस्माद् बहुश्रुतः शास्त्रं विजानीयात् प्रयत्नतः; सर्वशास्त्रार्थवेत्तारं अपि शास्त्रं तु कारयेत्, कर्मस्वयोग्यो भवति सोऽन्यथा, ऽपि बहुश्रुतः" (सुश्रुतं); (१००); "अध्यापयंति यदि दर्शयितुं क्षमंते सूतेन्द्रकर्मगुरवो, गुरवस्ते एव; शिष्यास्ते एव रचयंति पुरो गुरूणां, शेषाः पुनस्तदुभयाभिनयं भजंते" (आयुर्वेदप्रकाशः)। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्, बिभेत्यल्पश्रुताद् वेदो—माम् अयं प्रहरिष्यति। सच्छास्त्राणि तु सर्वाणि वेद एव हि सर्वशः। वेदस्योपनिषत् सत्यं, सत्यस्योपनिषद् दमः, दमस्योपनिषन्मोक्षो" (म० भा०), भयेभ्यः, सर्वथा, सदा,सर्वशंकानिरासश्च,'स्व'-स्थता, शांतिरेव च। 'अः' तु 'आत्मा', 'उः' तथा 'ऽनात्मा', 'मः' 'सम्बन्धो निषेधतः', 'अस्मी'ति 'ब्रह्मसत्ता' च,यस्यां सर्वं समाहृतं; 'अ'-कारो 'ऽहं' तु सत्त्वं स्याद्,'उ'म् तु 'एतद्' रजः उच्यते,'म'-कारो 'न.' तमोभूतः, प्रणवे ते समाहृताः। एकाक्षरोऽपि प्रणवः, त्र्यक्षरश्चापि दृश्यते; 'अ'-कारस्तु 'अहं' आत्मा स्याद्, 'उ'स् तु 'एतत्' सकलं-जगत्,'म'-कारस्तु 'न'-कारः स्याद्, 'इः' शक्तिर् याति भाति च; 'इ'-कारः शक्तिरेव स्याद्, अन्तर्लीना हि सा त्रिषु, माहेश्वरेण सूत्रेण 'अ-इ-उ-म् (ण्)' एतेन दर्शिता। "यावन्नोत्पद्यते सत्या बुद्धिर् 'न-एतद्-अहं',यथा 'न-एतन्-मम' इति विज्ञाय, ज्ञः सर्वं अधितिष्ठते" (चरक० शारी० अ० १), तावच्छान्तिर्न सम्भाव्या, तावन्मोक्षो न लभ्यते। (११०)। "न मोक्षो नभसः पृष्ठे न पाताले न भूतले, सर्वतृष्णाक्षये चेतःक्षयो मोक्षः इति श्रुतिः"। "न पातालं, न च विवरं गिरीणां, नैवान्धकारः, कुक्षयो नोदधीनां, गुहा यस्यां निहितं ब्रह्म शाश्वतं, बुद्धिवृत्तिं अविदितां कवयो

वेदयन्तो" (योगभाष्य)। "न नाकपृष्ठे, न महेन्द्रधिष्ण्ये, न चाब्रह्मलोके, न रसातले वा, न पर्वताग्रे, न समुद्रगर्त्ते, न चापि सिद्धिषु, 'अन्-इदं' हि मोक्षः"। "इत्थमिष्ट्वा पुरुषं यद्रूपं 'अन्-इदं' यथा, महोन्नतौ पुरोधाय देवाः प्रतिययुर् दिवं" (भा० स्क० १० अ० २); "...'इदं'-बुद्धिश्च बाह्यार्थे तु, 'अहं'-बुद्धिस्तथाऽऽत्मनि, प्रसिद्धा सर्वजन्तूनां ; विवादो नेह कश्चन ; यत्र यत्र 'इदं' इत्येषा बुद्धिर् दृष्टा स्वभावतः, तत्र तत्र ॥ 'अनात्म'त्वं विज्ञातव्यं विचक्षणैः ; 'शरीरे' दृश्यते सर्वैः 'इदं'-बुद्धिः, तथैव च 'अहं'-बुद्धिश्च, विप्रेन्द्राः !, ततस् ते भिन्नगोचरे; 'शरीर'ऽऽत्मना बुद्धिर् 'इदं' इति, आस्तिकोत्तमाः!, चिद्-'आत्मा'ऽऽत्मना साक्षाद् 'अहं'-बुद्धिर् न संशयः ; 'इदं'-अर्थे शरीरे तु या 'अहं' इति उदिता मतिः, सा महाभ्रांतिर् एव स्यात्, 'अ तस्मिंस्-तद्'-ग्रहत्वतः" (सूतसं०)। यदेव 'इदं' तदेव 'एतत्', समीपतरवर्ति च ; "इदमस्तु सन्निकृष्टं, समीपतरवर्ति च एतदो रूपं, अदसस्तु विप्रकृष्टं, तदिति परोक्षे विजानीयात्" (व्या०)। (१२०)। 'अहं'-'एतत्'-'न'कारः च प्रणवेन त्रयोऽपि ते, त्र्यक्षरैकाक्षरेणापि कथ्यंते 'ब्रह्म'रूपिणा। "ओंकारः, प्रणवः, नारः, प्रातिभः, सर्वविन्मतिः, उद्गीथः, तारकश्चापि, नामानि अस्य भवंति हि"। "तस्य वाचकः प्रणवः ; तत्र निरतिशयं सर्वज्ञबीजं ; प्रातिभाद् वा सर्वं" (योगसू०)। "उच्चार्यमाणः एव संसारभयात्तारयति तस्मात्तारः" (उ०), "अक्षरं प्रणौति" (छां० उ०); "सर्वं ज्ञानं प्रकर्षेण नवी-करोति"; "भवतीति ओम्" (व्या०), ज्ञानेनैकेन चैतेन ज्ञायंतेऽपि त्रयो यतः, 'अहं' च, 'इदं', 'निषेधः' चापि 'अहमा' तु 'इदमः', तथा, तस्मात् 'सर्वज्ञता-बीजं' त्र्यक्षरं ब्रह्म चापि असौ, परआत्मनो धारणया, संकल्पेन, एव ननु 'इदं', 'दृश्यं', सर्वं हि यत् ज्ञेयं', 'एतद्' इत्यभिधीयते, तत्र जायते च, अनिति च, तथैवापि प्रलीयते, तस्मात् 'सर्वज्ञ'ता नित्यं अस्त्येव परमात्मनि। ब्रह्म-'अहं'' अन्यद् अन्यस्मात्, अनन्यस्मात् (सदैव हि), अन् अन्यद् इति (शब्देन ॥) अन्यताऽभावः (उच्यते)"—प्रहेलिकामयं न्यायसूत्रं एकं इदं तथा, तमेवार्थं निवेदयति; स एवं ॥ भाष्यते वात्स्यायनेन यदपि, नाऽन्योऽर्थस्तत्र युज्यते।'

' मांडूक्यकारिकासु एका गौडपादकृताम्, अपि, प्रहेलिका इव दुर्बोध्या कूटार्था खलु, तादृशी—"क्रमते नहि बुद्धस्य ज्ञानं धर्मेषु तायिनः, सर्वे धर्मा तथा ज्ञानं

( १३० ) "जन्मआदि 'अस्य' [ 'इदम', 'एतद्' ] यतोऽस्तु अथाद् 'इतरत' [ 'एतद', आत्मनो 'अन्यस्मात्', 'तत्' ] सत्य पर धीमहि", (भा०), इत्याद्यैस्तु पदै पुराणमुनिना तत्त्व हि यद् वर्णित, अन्यैश्चापि तथा, "इतरो (ऽहं) इतरस्मात्", चिज्जडात्, चेति वा, सर्वस्यास्य सदा एक एव कथन यत् 'न अह-एतद्'स्तु, इति। आत्मनस्तु 'इतरो' अनात्मा, ऽनात्मनोऽपि 'इतरो' हि स,

---

नैतद् बुद्धेन भाषित" (गौ०का०प्रकरण ४ ९९)। भाष्यं अस्या शाकरस्य सोपकृत् न तु सर्वथा।

बौद्धग्रन्थेषु 'तायी' इति बुद्धस्याऽऽख्या प्रथीयसी, प्रज्ञानं 'तायते' यस्मात्, प्रसारयति सर्वत, सर्वेषा उपकाराय, दयया करुणामय। "संसारदु खनिर्मोक्ष अनुमोदे शरीरिणा, बोधिसत्त्वत्व बुद्धत्व अनुमोदे च तायिना" (शांतिदेवकृत बोधिचर्यावतार, परिच्छेद ३, श्लो० २), "तायिनां, स्वाधिगतमार्गदेशकानां, ताय, स्वदृष्टमार्गोक्ति, येषा तद् विद्यते, ऽथवा, संसारार्थो हि ताय, आसंसार अप्रतिष्ठितनिर्वाणतया अव स्थायिना' ( सटीका, पंजिका, प्रज्ञाकरकृता )। जन्मनाशक्षयविद्धद्भि, बौद्धाना परिपन्थिभि, कर्मणा ब्राह्मणत्व तु बोधता तर्कयुक्तिभि, 'तायी' शब्दस्तु 'चोरा'र्थं विद्वेषेण प्रयोजित — 'अनेन, ब्रह्मविद्या, याऽस्माक आसीत् सुगोपिता, मुषित्वा जातु चौर्येण, सर्वेभ्य प्रकटीकृता, तायिता, सर्वदेशेषु, तायी चोरस्ततो ह्यसौ'। 'तायु' शब्द तस्करार्थं वेदेषु ननु लभ्यते। (१०)।

कारिकार्थ समीचीन भाय एव विभाति यै—ब्रह्मज्ञस्य तु कस्यापि (तथा शौद्धोदनेरपि, शाक्य गौतम बुद्ध-इति नामभि प्रथितस्य च, प्रज्ञानिनो ब्रह्मज्ञस्य ), तज्ज्ञानस्य उपदेशिन, 'तायिन', परम 'ज्ञान', सर्वसंग्राहक सद्भूत, सांसारिकेषु 'धर्मेषु बुद्धस्य क्रमते नहि'; देश काल क्रम-अतीत ज्ञान एकरस हि तद् 'सर्वे धर्मा', तथा 'ज्ञान' तत्सम्बन्धि वदन्ति वै, क्रमिक चापि अवच्छिन्न देश काल-क्रिया भ्रमै, परिणामि प्रतिच्छाय, एकदा एव अवरुध्य तद् एकावधारणेनैव, भूत भव्य भवद् गतं सर्वं, निषेधति एकेन न-कारेण तु शाश्वतं, 'न एतद्' 'न इति' वा, तस्माद् 'बुद्धेन भाषित', उपदिष्ट, हि सर्वेभ्यो, रहस्य परम तु यत्। एव प्रकाशित चापि, रहस्यं पर एव तद् अद्यापि हि भवति एव, दुर्बोध्य नितरां ननु 'आश्चर्यवच् च एन अन्य शृणोति, श्रुत्वाऽप्येन वेद न चैव कश्चित्" (गी०); "नाय आत्मा प्रवचनेन लभ्य, न मेधया,

आत्मा ऽनात्मा च विरूप, 'इतरौ' स्त परस्परं, 'अस्य' 'दृश्यस्य' सर्वस्य जगतो ऽनात्मरूपिण, आत्मास्थितिलया सन्ति तस्य 'इतरत' आत्मन 'सर्वं वै खलु इद ब्रह्म, तज्-ज ए मन्''—सूत्रित यथा (मन्त्रगुप्त)। 'अहमेवास्मि, नान्यत्तु किंचिद्प्यस्ति कुत्रचित्', " 'मत्'-त परतर किंचिन् 'नान्यद्' अस्ति, धनंजय !, 'मयि' सर्वम् 'इद' प्रोत, सूत्रे माणिगणा इव" गी०) ' 'नान्यत्' पश्यति यत्राप स भूमा ऽमृतमस्ति सत्'' (छा० उ०), 'आत्माऽनुवीक्ष्य 'नान्यत्' (तु तदा) अपश्यद्'' (अयामन )" (बृ० उ०) 'त्रिगुण च त्रितत्त्व च, त्रयो देवा, त्रयोऽग्नय, त्रयाणा च त्रिमूर्तिस्त्वं, तुरीयस्य नमोऽस्तु ते' (आदि स्यस्तो०), "त्रयीं, तिस्रो वृत्ती, त्रिभुवनं, अथो त्रीन् अपि सुरान्, अकारादैर्वर्णै त्रिभिर् अभिदधत्, तीर्णविकृति, तुरीयं ते धाम ध्वनिभिर् अवरुन्धान अणुभि, समस्त व्यस्त त्वा, शरणद ! गृणाति 'ओं' इति पद" (महिमस्तु०)। महिमा प्रणवस्यैव वेदे गीत पदे पदे। (१४०)। "त्रिधा दानानि दीयते, त्रिधा यज्ञ प्रवर्त्तते त्रिधा लोकास् त्रिधा देवा, त्रिधा विद्या, त्रिधा गति, भूत भव्य भविष्य च धर्मोऽर्थ काम एव च, प्राणापानावुदानश्च, अन्यत एव त्रयो गुणा (अनु गीता, अ० २४), 'तिस्रोऽवस्थास् त्रयो देहा, त्रय कामा, त्रयोऽग्नय, वृत्तय, शक्तय तिस्र त्रिवर्गोऽथ ऋणत्रय, त्रयो वर्णास्, त्रित कर्म—सर्वमेतत् त्रिवृत् त्रिवृत्'। माण्डूक्याद्युपनिषत्सु, गोपथब्राह्मणादिषु, अन्यग्रन्थेषु चैवापि सूचिता बहव त्रिका। त्रय तुल्याधिकारास्ते, तुल्यसम्मानगौरवा, सगुणाश्च सदाऽन्यो ऽन्य न पृथग्भवितु क्षमा, न कश्चिद् अधरो वापि न च कश्चिन् तथा उत्तर, त्रिष्वेतेषु गुणेष्वत्र सत्कार्ये असति वा पुन, प्रयोतेण, शुभत्वं वा, ऽशुभत्व वा, ऽभिजायते। यद् रजस्तमसी प्रायो निंद्येते, मस्तु स्तूयते, सत्त्वस्याभिभवात् ताभ्या, अतिमात्रतया तथा। पूर्वमुक्त, त्रयो देवा सात्त्व-राजस-तामसा, जगद्

न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्य एष आत्मा विवृणुते तनू स्वा (कठ०, मुण्ड०,उ०) 'न सुविज्ञेय अणुरेष धर्म" (कठ०उ०) क्रम त्रय-समाश्रय व्यति करेण या सतत क्रम भितय नयन विदधती निभाति उज्ज्वले, क्रमैकवपुर्, अक्रमप्रकृतिर् एव या शोभते, करोमि हृदि तां, अह भगवती, परां संविद" (ज्ञानगर्भ-श्लोक, काश्मीर संस्कृत-सीरीज ग्रन्थमालाया मुद्रिताया, क्षेमराजकृत-शिवसूत्रविमर्शिन्यां, २१ पृष्ठे उद्धृत)। (११)।

स्थित्यै प्रवृत्तस्तु तामसो हि भव शिव , संहाराय स एवास्ति रुद्र काले महो ग्र , अन्नपूर्णा च गौरी च सर्वकल्याणकारिणी दृष्टा तमोमयी, सैव कालिका सर्वमारिणी, (१५०), "बहलरजसे विश्वोत्पत्तौ भवाय नमो नम , प्रबलतमसे तत्संहारे हराय नमो नम , जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नम , प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नम " ( महिम्नस्तु० ) ।

(४२) उत्पत्ति स्थिति संहारा , निग्रह च प्रलये तथा, संसारस्य सर्वस्य तद् अवस्थाचतुष्टयं । (४३) जाग्रत, स्वप्न, सुषुप्तिश्च, तुर्या—ऽवस्थाचतुष्टय शरीरवद्‌जीवस्य भवत्येव दिने दिने ।

(४४) भू , भुव , स्व चिदाकाश —इति लोकचतुष्टय, अग्नि , सोमश्च, सूर्यश्च, तमश्च तमस पर , प्रकाशाना परा काष्ठा, यत्रासौ भासित जगत्— 'रहस्य' 'संध्या' भाषाया तदेव एतच्चतुष्टय । (४५) स्थूलं, सूक्ष्म, कारणं च, सर्वं थाऽव्यक्तमेव च, वैराज , सौत्र , ऐशश्च, पारमात्मिक एव च, (४६) वैश्वानरश्च, हैरण्य , सार्वज्ञो, प्राज्ञ एव च, विश्वश्च, तैजस , प्राज्ञ , सर्वव्यापी तुरीयक , एतच् चतुष्कं देहाना, वेदान्तपरिभाषया, व्यष्टीना च समष्टीना, वैशेष्यात् च समानत । ( १६० ) । ( ४७ ) "आन्वीक्षिकी, त्रयी, वार्ता, दण्डनी तिश्च शाश्वती" ( म०, शु० नी० ), अहर्निशं नृपाभ्यस्य एतद् विद्या चतुष्टय , मानवाना मनस्वाना समानाऽऽन्वीक्षिकी मता, शिक्षकस्य त्रयी, दण्ड नीति स्याद् रक्षकस्य च, वार्ता भूप पोषकस्य, विद्या प्रोक्ता, विशे षत । 'विशेषत ' इति स्मर्य , एकान्तत्व नहि कश्चित्, 'एतदि' 'इदमि' 'इत्ये' तु 'जगति' आपेक्षिकेऽखिले । एकान्त निर्गुण ब्रह्म, यस्मिन् 'इ द एव गत,'एतद्' ब्रह्मन्मय सर्वं , त्रिका यत्र विभाति ते, 'न' शब्देन निषिद्धाश्च, प्रणवस्य चतुष्टये । व्यापित्वाद् आत्मनो नून भूतेषु सकलेष्वपि, ब्रह्मा-न्तेषु सदैव सदाऽऽसन प्रकृते र्गुणै , सर्वं सर्वेण सन्नद्ध, "सर्वं सर्वत्र सर्वदा" , "सर्वे एव समा , सर्वे प्रधान त्ता ", असदृश ( बृ० उ० ) , "नहि गतिरधिकाऽस्ति कस्यचित् , सहृद्‌व्यपदर्श यतीह तुल्यता" (म०भा०) , "इन्द्रस्याशुचिशूकरस्य च सुखे रे च नास्त्यन्तर, स्वेच्छाकल्पनया तयो खलु सुधा विष्ठा च भोज्याशन, रम्भा चाशुचिशूकरी परमप्रमदाऽऽस्पद , मृत्युत्र सत्रासोऽपि समम , स्वकर्मगतिभिश्चान्योन्यभाव सम ( भर्तृहरि० ) । ( १७० ) । "अविप्रणाश सर्वेषां कर्मणामिति निश्चय , महा

भूतानि नित्यानि भूताधिपतिसश्रयात्" ( म॰ भा॰ ), "द्वैरयोनयश्चेमा सुरा हु स्वादिभि प्रजा " ( म॰ ), "वैरोध्यादेव तद्वादो वद्वाद " इति निश्चित (म॰ सू॰ ) । ( ४८ ) 'पश्यता' कारणे, सूक्ष्मे 'मध्यमा', 'वैखरी' तथा स्थूले शरीरे, या वाक च पराʼ प्रोक्ता हि 'अनाहता', प्रणवध्वनिरूपा तु—वाचा एतच् चतुष्टय । "सूक्ष्मा ( परा ) कुण्डलिनीमध्ये ज्योतिर्मात्रा हि अणीयसी , स्वयप्रकाशा पश्यती सुषुम्ना आश्रिता भवेत् , सा एव हृत्पकज प्राप्य मध्यमा, नादरूपिणी , अन्त सकल्पमात्रा स्याद्, अविभक्ता ऊर्ध्वगामिनी , सैव उरकण्ठतालुस्था, शिरोघ्राण तथैव च, जिह्वामूलोष्ठनिश्रोत्रवर्णव्यूहपरिग्रहा, शब्दप्रपचजननी श्रोत्रग्राह्या तु वैखरी " (आगम , सप्तशत्या चतुर्धरीटीकायामुद्धृत ) । "चत्वारि वाक् परिमिता पदानि , तानि विदुर् ब्राह्मणा ये मनीषिण , गुहा त्रीणि (अपराणि भेदानि) निहिता नेङ्गयन्ति, तुरीयां वाच अभि मनुष्या वदन्ति ' ( वे॰ ) । (४९) चत्वार्यव मनुष्याणा सहजानि ऋणान्यपि, देवाना च, ऋषीणा च, पितृणामपि वै तथा , ( १८० ) , दानात्तु पचभूताना, ज्ञानविज्ञानदानत , सन्द्रियाणा शरीरस्य अपि दानात् तथा, प्रभात् , जीवदानाच् चतुर्थं तु ऋणे स्यात् परमात्मन । (५०) चत्वारश्च प्रकारास्ते ऋणनिर्मोचनस्य वै इष्टाऽपूर्त च विविध, प्रजाभ्यो ज्ञानशिक्षण , सन्तानपालन चैव , तथा मोक्षस्य चिन्तन । "वापी-कूप-तटाकादि, देवताऽयतनानि च, अन्न प्रदान, आरामा , 'पूर्त' आर्या (अर्थना ) प्रचक्षते , एकाग्निकर्म हवन, त्रेतायां यच्च हूयते, अन्तर्वेद्या च यद्दान, इष्ट तद् अभिधीयते ' (अत्रिसंहिता) । "ऋणानि त्रीणि अपाकृत्य मनो मोक्षे निवेशयेत् , अनपाकृत्य तान्येव मोक्षमिच्छन् व्रज त्यध , अधीत्य विधिवद् वेदान्, पुत्राश्चोत्पाद्य धर्मत , इष्ट्वा च शक्तितो यज्ञे , मनो मोक्षे निवेशयेत् , आश्रमाद् आश्रम गत्वा,हुतहोमो, जितेन्द्रिय ,भिक्षाबलि परिश्रान्त , प्रव्रजन् प्रेत्य वर्धते ' (म॰)। (५१) "सकाम स्वार्थक कर्म, निष्काम परार्थक , काम्य, नैमित्तिक, नित्य, निष्काम यच् चतुर्थक—कर्माणि एव चतुर्धापि, तच्च कर्मचतुष्टय , काम्य सकाम एवास्ति, मिश्र नैमित्तिक तथा, निष्काम एव नित्य तु प्रायश्च स्मर्यते बुधै । ( १९० ) । (५२) शुक्ल, कृष्ण च, मिश्र च, अपि अशुक्लकृष्ण एव च , शुक्ल परार्थक पुण्य, कृष्ण स्वार्थं तु पापक, परार्थ अशत स्वार्थ अंशतस् चापि मिश्रित, रागद्वयविहीन यद् रहित फलकाक्षया—तदेव , शब्दपर्यायैर् वाच्य, कर्मचतुष्टय । (५३) "काम्याना कर्मणा न्यास संन्यास कवयो

यज्ञ , पितृयज्ञस्तु तर्पण, होमो दैवो, बलिर्भौतो, नृयज्ञोऽतिथिपूजन" (म०), एते पचमहायज्ञा , ऋणनिर्मोचनेषु वै त्रिषु एव अतर्गता ज्ञेया , कर्त्तव्याश्च दिने दिने ।[१] आत्मसूक्ष्मगतेर् नित्य सर्वदेहिषु चिंतनात्,उच्च वचेषु भूतेषु, अज्ञेयाया अकृतात्म भि ,स्वान्तरात्मगतेश्चैव ध्यानयोगेन दर्शनात् (म०), शुभध्यानाच्च सर्वेषा भूतप्रियहितेहया आत्मन सर्वभूतेषु भगवद्भावदर्शनात् (भा०), आत्मवत्सर्वभूतेषु तथैवाचरणात् सदा, 'ऋण निर्यात्यते सर्वं यदुक्त 'पारमात्मिक' । (२२०) "यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति सर्वभूतेषु चात्मानं, ततो न विजुगुप्सते" (उ०)। "अनेन विधिना सर्वांस्त्यक्त्वा सगान्छनै शनै सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ' (म०) । ऋणनिर्मोचनाना च स्यादेव तु चतुष्टय । चतुष्टयानि उपासाना अपि स्मर्याणि सति यै—(५५) "पूजाकोटिसम स्तोत्र, स्तोत्रकोटिसमो जप , जपकोटिसम ध्यान, ध्यानकोटिसमो लय । (५६) बाह्यपूजाऽधमो भावो, मध्यमस्तु स्तुतिर्जप , उत्तमो ध्यानभावस्तु, ब्रह्मभाव कृतात्मन । (५७) अधमास्तु प्रियग्रामा , शास्त्रग्रामास्तु मध्यमा , उत्तमा धारणाग्रामा , आत्माराम कृतात्मन ।(५८) अधमा कर्मभातास्तु भक्तिभीतास्तु मध्यमा ,उत्तमा

---

१ ' या ब्रह्मणो ये पितृवशजाता , मातुस्तथा वंशभवा मदीया , कुलद्वये ये मम दासभूता भृत्यास्तथैवाऽश्रितसेवकाश्च, मित्राणि, शिष्या , पशवश्च, वृक्षा , दृष्टा हि अदृष्टाश्च कृतोपकारा , जन्मान्तरे ये मम सगताश्च, तेभ्य स्वधा अन्न अह ददामि । येषा न माता, न पिता, [redacted] न्धुर् न चान्यसिद्धिर् न तथाऽन्नमास्ति, सत्तृप्तयेऽन्न भुवि दत्त एतत् , ते यान्तु तृप्ति, मुदिता भवन्तु । देवा , मनुष्या , पशवो, वयांसि, सिद्धा सयक्ष-उरग दैत्य सघा ,प्रेता पिशाचास् तरव समस्ता ये चान्न इच्छति मया प्रदत्त पिपीलिका , कीटपतगकाद्या बुभुक्षिता , कर्मनिब धबद्धा , प्रयान्तु ते तृप्ति, इद मयाऽन्न तेभ्यो विसृष्ट सुखिनो भवन्तु । चतुर्विधो भूतगणो य एष, तत्र स्थिता येऽखिलजीवसघा , तृप्त्यर्थं अन्न हि मया विसृष्ट तेषा इद, ते मुदिता भवन्तु" । एव प्रायो हि पंचापि क्रियन्ते चैककर्मणा, अध्यानेन सवपा, अन्नदानेन चैव हि ।

तथा च देवपूजायां, दीप प्रज्वाल्यते यदा, पठ्यते चेदश श्लोको मनसा शुचिना, सदा— प्रस्फुरत्परमदीप्तिमंडल, गोघृतप्रबलवकुंकुमारुण, आर्तिक परिगृहाण च,र्त्ति-हर !, पुण्यकीर्ति वियदोज्ज्वल त्वने !" ( ६ )।

ज्ञानभीतास्तु, भान्ति भीतिर्महाभ्रम । (५९) अधमस्तु कुलप्रचार , शौचप्रचा रस्तु मध्यम , उत्तमो नियमप्रचार , स्वेच्छप्रचार कृतभ्रम । (६०) अधम कर्मभावस्तु, भक्तिभावस्तु मध्यम , उत्तमो ज्ञानभावस्तु, भाव अभाव कृत ऽभ्रम । (६१) अधमो देहभावस्तु, जीवभावस्तु मध्यम , उत्तम साधुभावस्तु, सोऽहंभाव कृतभ्रम ।(२३०)।(६२) अधमा 'इम' इच्छति,च'अमु' इच्छति मध्यमा , उत्तमा 'मोक्षं' इच्छति, नैवेच्छाप्रति कृतभ्रम । (६३) होमयात्रा ऽधमा, पूजा प्रतिमानां तु मध्यमा, उत्तमा ध्यानक्रियाऽवस्था, सहजा भावित ऽभ्रम । (६४) बालानां काष्ठलोष्टेषु, मनुष्याणां तथाऽप्सु च, मनीषिणां योषु देवा , युक्तस्यात्मनि देवता" (पु०)। (६५) परस्परभयात् केचित्पापा पाप न कुर्वते, राजदण्डभयाद् अन्ये, यमदण्डभयात्परे, आत्मदण्डभयादेव निष्पापत्व कृत ऽभ्रम (म०भा०)। जीवस्योत्कर्षणे सति चत्वार तु ईदृशा क्रमा , न तु ते अध नीयन्ते आरोहणपथे प्रजा , शिक्षके रक्षके चापि स्वार्थसाधनतत्परे , प्रत्युत एते ऽपकृष्यतेऽप्यारोहणपथे जना । 'गुरवो बहव सन्ति शिष्य वित्त अपहारका , गुरवो विरला ते ये शिष्य-सन्ताप हारका " ( गुरुगी० )। अस्त्येव हि चय मूल, हिन्दू- 'धर्मान्' विहाय यद् विकृतान् , बहवो यान्ति परधर्मान् दिने दिने। ' यदा भूतपृथग्भावं एकस्थ अनुपश्यति,तत एव च विस्तार,ब्रह्म सम्पद्यते तदा"(गी०)। (२४०)। (६६) धर्मशास्त्र, अर्थशास्त्र, कामशास्त्र तृतीयक, मोक्षशास्त्र चतुर्थ चापि—एतच्छास्त्रचतुष्टय, सर्वाण्यपि शास्त्राणि चतुर्ष्वन्तर्गतानि हि, प्राच्यवर्गेषी न सा विद्या या एतेभ्यो बहि स्थिता। "द्वे विद्ये वेदितव्ये वै", मुण्डकेऽपीति गीयते, "परा यथाऽक्षर ब्रह्म तदधिगम्यते', (उ०) तथाऽपरा यया सर्वम न्यद् आसाद्यते नृभि , मोक्षशास्त्राभिधाऽऽद्या तु द्वितीया त्रितयात्मिका । आन्वीक्षिकी मोक्षशास्त्रे धर्मशास्त्रे त्रयी स्मृता, अर्थशास्त्रे दण्डनीति , वार्त्ता च काम एव च । शास्त्रोऽन्यथा विभागश्च, नैकरीत्या तथाऽग्रह । (६७) प्रभु त्ववाक्तिद्, उत्साह मन्त्र शक्ती तथैव च, परस्पर भक्तिशक्ति प्रजाराज्ञो चतुर्थिका, उत्पादिनी शीघ्रणाय, सर्वलोकसुखाय च, सुशासनमेतत् पर्याप्त राजशक्तिचतुष्टय। (६८) दक्षिणाश्च, करश्चापि, वृद्धिश्च, भृतिरेव च, चतुर्विधं स्मृत मूल्य चतुर्णां वर्णकर्मणां । (६९) यथा एव तु मनुष्याणां जीविकाकर्म 'वर्णनात्' चतुर्धा प्रविभ ज्यन्ते 'वर्णा' प्रोक्ता मनीषिभि, 'वर्णनात्' चित्तवृत्तीनां,'वर्णा' मात्राऽक्षराणि वै,

'वर्णो' इत्यभिधीयन्ते, स्वरादीनि तथैव हि, (२५०) स्वरो,ऽनुस्वार एवापि, विसर्गो, व्यजन तथा—अक्षराणा समाम्नायस्यैतद् 'वर्ण'चतुष्टय, 'स्व' रातीति स्वर प्रोक्त , व्यजन तु व्यनक्ति त, अनुस्वार स्वरस्याऽनु, विसर्गेण विसर्जन, "स्वराश्च,'ब्राह्मणा ' ज्ञेया ,वर्गाणा प्रथमास्तथा, द्वितीयाश्च तृतीयाश्च चतुर्थाश्चापि 'भूमिपा ',वर्गाणा पचमा 'वैश्या ',अतस्थाश्च तथैव च,ऊष्माणश्च हकारश्च 'शूद्रा ' एव प्रकीर्तिता " (याज्ञ० शिक्षा०) । जीवा मनस्तु प्रवृत्तेर् व्यवायाश्च चतुर्विध । भजनाद् 'भग' भूतास्ते, शिरो बाहू उर क्रमा , ज्ञान क्रिये-च्छा ऽनुबुद्धि-वृत्तीना 'भक्ति'-साधना —चतुर्धर्मकर्मेव स्याद् एतद् अगचतुष्टय । (७१) आदौ आयस्य कीयानि, निकामीयानि वै तत , विलासीयानि,सन्न्यसानि इति—वस्तुचतुष्टय । (७२) उद्भिज्जा , स्वेदजाश्चापि, अडजा , पिण्डजास्तथा, स्थावराणा जगमाना भूतग्रामचतुष्टय । (७३) मणयश्चाऽपि, वृक्षाश्च, पशवो, मानवास्तथा, एव चापि निकायाना जीवाना तु चतुष्टय । (७४) यथा मनुष्येषु, तथा मणिवृक्षपशुष्वपि, देवेष्वपि च, सर्वत्र त्रैगुण्यात् तु चतुष्कता, (२६०), "श्वेता ब्राह्मणमृत्तिका" (शिल्पदीपिका), "ब्राह्मणा दृषद स्निग्धा श्वेता पकजसनिभा "(वास्तुसार०), (७५) ' विवेकी अश्वो घृणी विप्र , तेजस्वी क्षत्रियो बली, कोष्णभावो भवेद्वैश्य , शूद्रो निस्सत्त्वको भवेत्" (अश्वविद्या०), (७६) "शुभ्रा दीर्घा स्तब्धकर्णा लघुपुच्छा तनूदरा , सुशुक्लनखदताश्च, श्यामस्तेमश जातय ", एव गजा , वृषा , मेषा , अजाश्च, महिषा , खला , क्षत्राणि, धातवो, वृक्षा , पक्षिण , देवदेवता , मद्य , तीर्थानि, शास्त्राणि, गधर्वोरगराक्षसा , दैत्या , वेदा , पुराणानि, रत्नान्यपि तथैव च, चतुर्धा प्रविभक्तानि, गुणैरेव, न जन्मत ( तै० स० ) । ( ७७ ) ब्राह्मणोऽजो (बर्कर ),ऽवि ( मेष ) क्षत्रिय ,गौर् वैश्यो,ऽश्वस्तु शूद्रक , (शतपथ ब्रा० ) । ( ७८ ) 'अग्निर् , इन्द्रो, विश्वेदेवा , अदेवा ', तत् चतुष्टय, चतुर्वर्णानुसारि एतद् देवाना तु चतुष्टय । ( ७९ ) वसन्त ग्रीष्म वर्षाश्च, सामान्यो वत्सर , तथा, चतुर्वर्णात्मक चैतद् भवेद् ऋतुचतुष्टय । ( ८० ) गायत्री चापि, त्रिष्टुप् च, जगती च, अपि अनुष्टुभ , ब्रह्म-क्षत्रिय विट्-शूद्र छदसा तच् चतुष्टय' ( ताण्ड्य महाब्राह्मण ) । ( ८१) "ऋग्भ्यो जात वैश्यवर्ण आहु , यजुर्वेद क्षत्रियस्याहुर्योनि, सामवेदो ब्राह्मणाना प्रसूति ", ( अथर्व शूद्र प्राहुरेव तु पूर्व ) , ( तैत्तरीय ब्राह्मण ), वदेषु एव वर्णभाग कृतोऽस्ति, चातुर्विध्य वेदचतु

ष्टये तत् । (२७०) । (८२) सित लोहित-पीताश्चापि, असितश्च चतुर्थक, अन्वर्थं मेव वर्णानां ( रंगानां ) तत्तु वर्णचतुष्टय । (८३) रौप्य, ताम्र, सुवर्णं [illegible] कृष्णायस अथापि च, यथानुक्रमतो हि एतद् अस्ति धातुचतुष्टय । (८४) 'कृत्तिकाऽऽदि चाऽश्लेषान्त, विशाखाऽन्त तथा आ मघा, अनुराधाऽऽदि आ श्रवण, धनिष्ठाऽऽदि [illegible] ससर्क, नक्षत्राणां चातुर्वर्ण्य तारकाणा चतुष्टय । कर्क मकर-मीनाः विप्राश्च मेष-सिंहौ धनुर् नृपा, वृष कन्या मृगो वैश्या, शूद्रा युग्म तुला घट, वर्णाना अपि च एतेवा, एष राशिचतुष्टय ( जातकं ) । ( ८५ ) "आदित्या क्षत्रिया तेषां, विशश्च मरुतस्तथा, अश्विनौ तु स्मृतौ शूद्रौ तपसि उग्रे समाहितौ, स्मृतास्त्वङ्गिरसा देवा ब्राह्मणा इति निश्चय, इत्येतत् सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितं" (म० भा०), ( ८६ ) पन्नगानां च सर्पाणां चातुर्वर्ण्यं विवेचित, सुश्रुते तु गुणैरेव, पक्षीषु अपि तु जातिषु, ( सुश्रुत, कल्पस्थान, अ० ४ ) । (८७) अश्वत्थ वट बिल्वास्तु ब्राह्मणा तरवु मता, श्रीपर्णि देवदारु आद्या तथैव क्षत्रिया मता, पुष्प वा फलवन्तश्च वृक्षा वैश्या इति मता, बदर, बर्बुर, धव, शूद्रा प्रोक्ता तथैव च, चातुर्वर्ण्ये स्थित ह्येव वृक्षराशिचतुष्टये" । (२८०) । (८८) "लघु यत् कोमल काष्ठ, सुघट, ब्रह्मजाति तत्, दृढाग, लघु यत् काष्ठ अघट, क्षत्रजाति तत्, कोमल, गुरु यत् काष्ठ, वैश्यजाति तदुच्यते, दृढाग, गुरु यत् काष्ठ, शूद्रजाति तदुच्यते" ( आगस्त्यमत ), 'वर्ण' शब्दस्य तु स्थाने 'जाति'र् अपि उचिता यदि, तथाऽपि तु गुणैरेव कृत तत्र विवेचन, असख्या नाम सति वृक्षाणां, किंतु, तासु यत् चतुर्विधत्व एवात्र कृत, तत् तु गुणैः, स्फुट, चतुर्वर्णीविभक्त यत् काष्ठ वृन्द चतुष्टय । एकस्थ्या भवेद् एको वर्णो, अन्यस्तु अन्यदृष्टित, प्रयोजन विभेदेन वृक्षस्य एकस्य चैव वै, वृक्ष येन एकवर्णो [illegible], काष्ठस्थेनापरो हि [illegible], प्रत्यक्षमेवं सम्बिद्धा वर्णोत्था गुण कर्मभि । (८९) "चक्रवाका, कपोताश्च, ब्राह्मणा, गरुडा, बका क्षत्रियाश्च, मयूराश्च हसा, वैश्या इति स्मृता, काक गृध्रादय, शूद्रा, एव पक्षि चतुष्टय । (९०) पुष्पकीटा ब्राह्मणाश्च, धातुकीटास्तु क्षत्रिया, कौशेयकीटा वैश्याश्च, मल पक भवास्तु ये कीटा शूद्रास्तु ते ज्ञाता, एवं कीटचतुष्टय" (वा०पु०) । (२९०) कामस्तु ब्राह्मण प्रोक्त, क्रोध क्षत्रिय उच्यते, लोभो वैश्यस्तथा शूद्रो मोह स्य, न सशय । एव तु चित्तवृत्तीनां अन्तरारिचतुष्टय, चतुर्णां अंतरस्थौ तु विदितौ मद मत्सरौ । (९२) "सत्त्व

कृत, रजस्त्रेता, द्वापरं तु रजस्तमौ, कलिस्तमस्तु विज्ञेय ', एतद् युगचतुष्टय। (वायु०पु०अ०८) ।(९३) कृते [redacted] मानसी,त्रेते यार्क्षी चापि स्यात्तथा, द्वन्द्वसिद्धिर् द्वापरे वा, पि अ सिद्धिस्तु कलौ युगे, ( मनसा चिन्तनाद् इष्ट, कृतादौ उपतिष्ठते, वृक्षेभ्य सलिलेभ्यश्च त्रेतायां परिपूर्यते, इत्यादि द्वन्द्वसंश्च इष्टसिद्धिस्तु द्वापरे, सर्वप्रकारकैर्यत्नैर् अप्यभीष्ट न सिध्यति, सम्यक्, कलौ, सर्वथा वा, तत्तु सिद्धि-चतुष्टय (वा०पु०, मार्क०पु०) । एव सर्वत्र ससारे व्याप्त वर्णचतुष्टय, तस्यापि व्यापि त्रैगुण्य गुणसाम्य चतुष्टय। वेदेऽध्यवसायपिका सति कर्मवर्णस्य साधिका —पुरुष 'तौ अनुच्छतो, कोऽसौ वि ?; 'ब्राह्मण ' तु इति, 'कतमो ब्राह्मण' ? इति पृष्टे, चैवोत्तर ददौ—'किं ब्राह्मणस्य पितर, किमु पृच्छसि मातरं ? श्रुत चेद् अस्मिन् वेद्य, स पिता, स पितामह ' " (काठकब्राह्मण, ३ ३० १), 'एतादृशा गुणा यस्य, त देवा ब्राह्मण विदु"—व्यासन बहुधैवं [redacted] धर्म मोक्षे , न जन्मना । "न तदस्ति पृथिव्या वा दिवि देवेषु वा पुन सत्त्व प्रकृतिजैर् मुक्त यत् स्याद् एभि त्रिभि गुणै " (गी०) , (३००) , यथैव शास्त्र अध्यात्म व्यक्त तु त्रिगुणे , तथा व्याप्तानि अन्यानि शास्त्राणि, वाङ्मये खलु सस्कृते । मनुस्मृतौ च गीताया तथा उक्ता यहव त्रिका । (९४) 'आत्मप्रतिकर सत्त्व रजोऽर्थीतिरर मत, तमस्तु मोहसयुक्त, अव्यक्त तु चतुर्थक, एतद् हि त्रिशावस्थानां अस्ति भाव चतुष्टय । (९५)अव्यो, मध्यो, जघन्यश्च, चतुर्थो निरपेक्षक , एतत् त्रिगुण नैर्गुण्य फलोदय चतुष्टय ।(९६) वेदाभ्यास सात्विक स्याद्, आरम्भरुचिता रज , तामस नित्यवृत्तित्व, अनारम्भश्चतुर्थक , व्यवसाय प्रकाराणा एतत् खलु चतुष्टय । (९७) कर्म आत्मसतोषकरं, प्रेरित कीर्तिलिप्सया; लज्जाकर तथा, त्यक्तफल—कर्मचतुष्टय, प्रवर्तित च त्रिगुणै , निर्गुण चापि वै, क्रमात् । (९८) देवत्व सात्त्विका यान्ति, मनुष्यत्व तु राजसा , तिर्यक्त्व तामसाश्चापि, मुक्ति गच्छन्त निर्ममा , त्रिष्वप्येतेषु त्रिविधा उत्तम अधम मध्यमा , एव हि स्मृतिषु मोक्ष गतीनां [redacted] चतुष्टय (म०,अ०१२) । (९९ ११०) श्रद्धा, तप , तथाऽऽहार , त्यागो, दान, यजि तथा, ज्ञान, कर्ता च, कर्मापि, धृतिर् , बुद्धि , सुख तथा, (११०) त्रिकं त्रिक [redacted] सर्वे चापि, असत्तत्व चतुर्थकं । "त्रिविधस् त्रिविध कृत्स्न ससार सार्वभौतिक " (म०), समाहारश्चतुर्णां च चतुर्थे परमात्मनि । एतेषा सुविवेकेन, कृत्येषु, प्रकृतिष्वपि, विभागेनाधिकाराणा, कर्तव्याना तथैव च, तथैव सुखदु खाना, तथैव

श्रमणभयो, (—ईदृकश्रमस्य चैव एतन्मूल्यं स्याद्, इति योजनात्, न विना एत-च्छ्रम मूल्य एतत् लभ्य भवेद् इति, एत सुखस्यानुबन्धि दुःख च एतद् भविष्यति, एतद् दुःख विना कश्चित् सुखमेतन्न लप्स्यते—) सम्यक् सर्वमनुष्येषु सुव्यवस्था प्रवर्तयेति, सर्वेषा चापि भावाना भविष्यति समन्वय, सर्वे पदार्था लप्स्यते स्व स्वं स्थान यथोचित। एव निश्चित्य सिद्धांतान्, सत्ययोगात्मयोत्तमान्, सुव्य-वस्था समाजस्य कार्यार्थं सुदृढ़ा पुन। (१०८, आश्विन १९२९ श्लोका)।

---

## ६ अध्याय

### समाजव्यवस्था चतुर्व्यूहा।

"सघातवान् मर्त्यलोक परस्परमुपाश्रित" (म० भा० शा० अ० २९८), सघो यत्र बल तत्र, निस्सघ चे कुतो बल ?, "बुद्धिर्यस्य बल तस्य, निर्बुद्धेस्तु कुतो बल ?", यत्र बुद्धि तत्र सघ, निर्बुद्धीनां न सघता, अन्यनैयोग्यनीघस्ये न सघो, न बल, न धी, समाजव्यूहन पूर्वे कृतोऽतो गुणकर्मभि। चत्वारो ऽवान्तरव्यूहा, समाजे सुव्यवस्थिते, वर्णाश्रमात्मका, सर्वे सर्वदा सन्ति महता (१) शिक्षाव्यूह, तथा (२) रक्षाव्यूह, (३) तत्र तृतीयक वार्त्ताव्यूह, (४) चतुर्थस्तु सेवाव्यूहो ऽत्र सम्मत। (१) तत्र 'शिक्षक वर्गश्च, 'ब्राह्मणो' च वदति हि, विद्यार्थीना समूहश्च, 'ब्रह्मचर्य'आश्रमस्तु च, मिलित्वा तावुभौ हि एतौ प्रथम, सर्वभावक, 'शिक्षाव्यूह' तु, योऽन्येषा त्रयाणा ज्ञानदायक, 'ब्रह्म' ज्ञानं च, वेदाश्च, परमात्मा तथैव च— तपस्यया त्रय सिद्ध यस्य स 'ब्राह्मणो' भवेत्, 'ब्रह्म चारी' तु तत्रयां, त्रय साधयितु चरेत्। "य कश्चिदेव अपरोक्षी-कृत्य आत्मानं तु वर्तते कृतार्थत्वेन, स होव ब्राह्मण श्रुतिमानत। (१०)। ब्राह्मणो नाम कि जीव ? किं देह ? जातिरेव वा ? किं ज्ञान ? कर्म किं ? किं वा धार्मिक ? किं ब्राह्मण ?" ईदृक् प्रश्नान् समुत्थाप्य, सर्वान् कल्पान् अपोहति, वज्रसूच्युपनिषदि, वर्णयति सद्ब्राह्मण स्वय। "न जीवो, नैकदेहेषु अभ्रमात्, नैकश भ्रमस्तु। न देहो, पाञ्चभौतानि शरीराणि अखिलान्यपि, श्वेत रक्त पीत कृष्ण रगाना नियमोऽपि नो, दाहे पितृशवस्यापि, ब्रह्महा नहि पुत्रक। न जाति, ऋषयो जातास्तु अतिभिन्नासु जातिषु"। एवं विस्तरेण आरोप्य,अपवदति अथ वेदवाक्।

निषिध्य च विकल्पांस्तान्, विधानं विदधाति असौ—"अद्वितीयं परात्मानं, हीनं जातिगुणादिभिः, सत्यज्ञानानन्दमयं सच्चिदानन्दरूपिणम्, अशेषकल्पाधारं च, निर्विकल्पं स्वयं सदा, साक्षात्कृत्य अपरोक्षं तु कृतार्थो यो हि वर्तते, शान्तिदान्त्यादिसम्पन्नो रागद्वेषविवर्जितः, तृष्णाऽहङ्कारमात्सर्यलोभदम्भादिभिस्तथा रहितः, तं परात्मानं हृदये धारयन् सदा—य एव वर्तते विद्वान्, क्षपयन् सर्वकल्मषान्, यत्र कुत्र समुत्पन्नः, स एव ब्राह्मणोऽस्ति वै" (वज्रसूच्युपनिषत्)। (२०)। सच्छिक्षया तु सञ्जाते समाजे सुप्रवर्तिते, सच्छिक्षकैः, सर्वमन्यत् सम्पन्नं भवति ध्रुवं; ज्ञानं शौर्यं च, भोज्यं च, परस्परसहायनम्, शिष्टता सभ्यता, शान्तिः, तुष्टिः, पुष्टिश्च सर्वथा सर्वांगेषु समाजस्य, सौमनस्यं च, सिध्यति। "रुचं नो धेहि ब्राह्मणेषु, रुचं राजसु नस्कृधि, रुचं विश्येषु शूद्रेषु, मयि धेहि रुचा रुचं" (य० वे०) सर्वेषु रुचं आधातुं शक्तः, सच्छिक्षको हि सः, गुणकर्मविवेकेन क्षमः शिष्यपरीक्षणे। "वर्चस्वी ब्राह्मणोऽस्माकं तपोविद्यायुतो भवेत्, तेजस्वी क्षत्रियश्चापि, महस्वी वैश्य एव च, सहस्वी च तरस्वी चाप्यस्माकं शूद्रो भवेत्, स्वकर्म धर्मनिष्ठाश्च सर्वेऽन्योऽन्यमनुमताः"—इत्याशिषां तु सम्पत्तिः आयत्ता शिक्षकेषु वै। सच्छिक्षकास्ते एवात्र तपोविद्यायुतास्तु ये, वीतरागभयक्रोधाः, सर्वलोकहिते रताः। "यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा, तस्यापि तत्क्षुधा राष्ट्रं अचिरेणैव सीदति" (म०), सन् 'श्रोत्रियः' स एवास्ति यो भवेत् सुबहु 'श्रुतः', सम्यक् सार्थया 'श्रुत्या, न "अनुवाकहतः" पुनः (३०), विनीतश्च, दयालुश्च, सच्छात्राणां च शिक्षकः, 'शुश्रूषव'श्च 'श्रोतारो' यस्य श्रद्धालवो बहु, सार्थं वेदं तु यो वेद, स हि 'सच्छ्रोत्रियः' स्मृतः, अन्यथा, श्रोत्रियाऽभासो, ऽनुवाकहतबुद्धिकः, युधिष्ठिरावबोधाय प्राह कुन्ती यथा पुरा—"मन्दकस्येव ते, राजन्! श्रोत्रियस्य अविपश्चितः, अनुवाकहतबुद्धिर् एक धर्ममवेक्षते"(म० भा०), नावेक्षतेऽपरान् धर्मान् अधिकं समयोचितान्, अनभिज्ञा तदर्थानां, केवलं शब्दपाठिनो, ईक्षमाणा एक पक्षं तु, पश्यन्तो नाऽपरानपि, न एवं बुद्धिः श्रोत्रियस्य सार्थान् वेदान् विजानतः, सांगोपांगान् सरहस्यान्, ऊहापोहक्षमस्य च "स्थाणुरयं भारहारः किलाभूद् अधीत्य वेदं न विजानाति योऽर्थं; अर्थज्ञ इत् सकलं भद्रमश्नुते, नाकमेति ज्ञानविधूतपाप्मा" (निरुक्त०), "योगः, तपो दमो दानं सत्यं, शौचं, दया, श्रुतं, विद्या, विज्ञानं, आस्तिक्यं—एतद् ब्राह्मणलक्षणं" (वसिष्ठस्मृ०)। (२) 'रक्षकाणां'

च धर्मेन, 'क्षत्रियो' यस्तु कथ्यते, गार्हस्थ्याद् विनिवृत्तानां 'वानप्रस्थ'ऽआश्रमेण च, योगक्षेमविधाताऽय 'रक्षा व्यूहो' विधीयते। दुर्वर्णीयावते यस्तु क्षताद् अनुचितान् अपि, 'स एव क्षत्रिय' प्रोक्त क्षतत्राणं करोति य (म०भा०), (४०), समाप्य गृहधर्मान् च वनगन्ड' तु 'प्रस्थिता', 'वान' तरूणां पङ्क्तो हि, 'प्रस्थो' धामस्थान, भवेद् येषां तु, लोकसेवार्थ,निर्द्वंद्वमनसा तथा, रागद्वेषविमुक्तेन,'वान प्रस्था' तु ते मता, (इन्द्रप्रस्थ गजप्रस्थ वत् शब्दोऽयं विनिर्मित), वनखण्ड, तरुपट, वान, च उपवन समा। पूर्वाश्रमे तु, वान स्था, व्यवहारेषु दीक्षिता विविधेषु, ततो जाता, कुशला दूरदर्शिन बहुकार्याऽनुभविन, निस्स्वार्थाश्च अधुना हि ते, 'रक्षकान्' नरवरांश्च परामर्शयितुं क्षमा, नियन्त्रयितुं क्वापि, (गुरुत्वात् येन प्रयोजन), तद्द्वारा सर्ववर्णांश्च कृत्यान् कारयितुं स्वकान्, वनस्था कायम यद्वत् निरीक्षन्त पुरा नृपान्। "स्वाध्याये नित्ययुक्त च, दान्तो, मैत्र, समाहित, दाता नित्य, अनादाता, सर्वभूतानुकम्पक" (म०), कर्ता विविध यज्ञानां वानप्रस्थस्तु कथ्यते। सर्व विश्वजनीन हि कर्म 'यज्ञ',परार्थकृत्,न पशूनां विशसन, नाग्नौ बहुघृतार्पण। "गतसंगस्य, मुक्तस्य, ज्ञानावस्थितचेतस, यज्ञाय आचरत, कर्म समग्रं प्रविलीयते, (५०); ब्रह्मार्पण, ब्रह्म हविर्, ब्रह्माग्नौ ब्रह्मणा हुत, ब्रह्मैव तेन गन्तव्य, ब्रह्मकर्मसमाधिना, दैवमेवापरे यज्ञं योगिन पर्युपासते, ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति, श्रोत्रादीनि इन्द्रियाण्यन्ये इन्द्रियाग्निषु जुह्वति, सर्वाणीन्द्रियकर्माणि प्राणकर्माणि च, अपरे, आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते, अपान जुह्वति प्राणं, प्राणेऽपान तथाऽपरे, प्राणापानगती रुद्ध्वा, प्राणायामपरायणा, अपरे नियतआहारा, प्राणान् प्राणेषु जुह्वति; सर्वेऽप्येते यज्ञविदो, यज्ञक्षपितकल्मषा, द्रव्ययज्ञा:, तपोयज्ञा, योगयज्ञा तथाऽपरे, स्वाध्यायज्ञानयज्ञाश्च, यतय संशितव्रता, एव बहुविधा यज्ञा वितता ब्रह्मणो (वेदस्य) मुखे, कर्मजान् विद्धि तान् सर्वान् एव ज्ञात्वा विमोक्ष्यसे, श्रेयान् द्रव्यमयाद् यज्ञात् ज्ञानयज्ञ, परंतप ! सर्वं कर्म, अखिलं, पार्थ !, ज्ञाने परिसमाप्यते" (गी०)। "आरंभयज्ञा क्षत्राश्च, हविर्यज्ञा विश स्मृता, परिचारयज्ञा शूद्राश्च, जपयज्ञा द्विजातय; ब्राह्मणा ज्ञानयज्ञाश्च, रक्षायज्ञाश्च क्षत्रिया, वार्त्तायज्ञास्तथा वैश्या, सेवायज्ञाश्च पादजा" (म० भा०), (६०), विप्रस्याध्यापन यज्ञो, रक्षण क्षत्रियस्य च, द्रव्यासदानं वैश्यस्य,शूद्रस्यान्यसहायता, 'यज्ञ' बुद्ध्या, त्यागबुद्ध्या

'यज्ञ' प्रवालिख कृत। "यामिमा पुष्पिता वाच प्रवदति अविपश्चित ,वेदवादरता" मूढा , "नान्यदस्तीति वादिन" (गी०) , तयाऽपहृतचेतसा भोगैश्वर्यप्रसक्तिना , "यावान् अर्थ उदपाने सर्वत सम्प्लुतोदके, तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानत" ( गी० ) , "प्रायेण वेद तद्दिद न महाज्ञनोऽपि, देव्या विमोहितमतिर्वत मायया,ल, त्रय्या, जडीकृतमतिर, मधुपुष्पिताया, वैतानिके महति कर्मणि युज्यमान" ( भा० स्क० ६ अ० ३ )। "फलश्रुतिरियं नृणा , न श्रेयो , रोचन पर, श्रेयोविवक्षया प्रोक्त ;यथा भैषज्यरोचन ,एव व्यवसित केचित् अविज्ञाय,कुबुद्धय , फलश्रुति कुसुमिता, न वेदज्ञा , वदन्ति हि , कामिन कृपणा लुब्धा पुष्पेषु फलबुद्धय , अग्निमुग्धा , धूमतान्ता , स्व लोक न विदन्ति ते , न ते माम् अग ', जानन्ति हृदिस्थ ये, 'इद' ( नाड ) यत ( जायते ), उक्थशस्त्रा , हि असुतृपो यथा नीहारचक्षुष , ते मे मत अविज्ञाय परोक्ष ( रहस्य ) , विषयात्मका , हिंसाविहारा , हि आलब्धै पशुभि , स्वसुखेच्छया यजन्ते देवता यज्ञे, प्रेत भूत पतीन्, राला , ( ७० ) , 'इष्ट्वेह देवता यज्ञै ग त्वा रस्यामहे दिवि, तस्यान्ते इह भूयास्म महाशाला महाकुला '—एव पुष्पितया वाच व्याक्षिप्तमनसा नृणा, मानिना चातिस्तब्धाना 'मद्' वार्ताऽपि न रोचते , वेदा ब्रह्मात्मविषया , त्रिकाडविषया इमे , परोक्षवादा ऋषय , परोक्ष 'मम' च प्रिय , किं विधत्ते, किं आचष्टे, किं अनूद्य विकल्पयेत ?—इत्यस्या (श्रुते) हृदय लोके नान्यो 'मद्' वेद कश्चन, 'मा' विधत्ते, अभिधत्ते 'मा , विकल्प्यापोह्यते तु 'अह'—एतावान् सर्ववेदार्थ , शब्द आस्थाय 'मा , भिदा मायामात्र अनूद्य, अन्ते प्रतिषिध्य, प्रसीदति" (भा० स्क० ११ अ० २१ ) । "प्लवा हि एते अदृढा यज्ञरूपा , अष्टादश उक्त अवर येषु कर्म , एतत् श्रेयो येऽभिनन्दन्ति मूढा , जरामृत्यु ते पुनरेवापि यन्ति , अविद्यायामन्तरे वर्तमाना , स्वयधीरा , पण्डितम्मन्यमाना , जघन्यमाना , परियन्ति मूढा , अन्धेनैव नीयमाना यथाऽन्धा , अविद्याया बहुधा वर्तमाना , वय कृतार्था ,इत्यभिमन्यन्ति बाला ; यत् कर्मिणो न प्रवेदयन्ति रागात् , तेनातुरा , क्षीणलोका च्यवन्ते , इष्टापूर्त मन्यमाना वरिष्ठ, नान्यच्छ्रेयो वेदयन्ते प्रमूढा , नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा, इम लोक हीनतर वा विशन्ति , तप श्रद्धे ये ह्युपवसन्ति अरण्ये, शान्ता विद्वांसर भैक्षचर्यां चरन्त , सूर्यद्वारेण ते विरजा प्रयान्ति यत्र अमृत स पुरुषोऽव्ययात्मा" ( उप० ) । (८०) । ( ३ ) 'पोषकाणा' च वर्णन, यो वैश्य,'

इति कथ्यते, कुटुम्बाना तु भर्तृणा 'गृहिणा' आश्रमेण च, सम्पाद्यते शुभो 'वार्त्ता व्यूहो' लोकस्य धारक , अन्नादौ वस्त्रद प्राणपुष्टिद सर्वदेहिना,कृषि गोरक्ष वाणिज्य कला शिल्पादि वर्धन । "वार्त्तामूलो ह्यय लोक , तया वै धार्यते जगत् , कृषि गोरक्ष वाणिज्य लोकाना इह जीवन" ( म० भा० शा० ) , "आन्वीक्षिकी सुवि मुक्त्यर्थमुपा निधान उद्गीथरम्यपदपाठरता च साम्ना,देवी त्रयी भगवती,भवभाव न च 'वार्त्ता' च सर्वजगता परमार्त्तिहन्त्री" (दु० स०) । "गृहस्थ आश्रित्यान्ये हि त्रयो वर्तन्ते आश्रमा आश्रित्य मातर यद्वत् जीवति अखिलजन्तव " (म०भा०) "यथा नदीनदा सर्वे समुद्रे यान्ति सस्थितिं, तथैवाश्रमिण सर्वे गृहस्थे यान्ति सस्थिति , यथा वायु समाश्रित्य वर्तन्ते सर्वजन्तव , तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमा , यस्मात् त्रयोऽप्याश्रमिण , ज्ञानेनान्नेन चान्वह,गृहस्थेनैव धार्यन्ते, तस्माज्ज्येष्ठाश्रमो गृही सर्वेषामपि चैतेषा, वेदश्रुतिविधानत , गृहस्थ उच्यते श्रेष्ठ , स त्रीन् एतान् बिभर्ति हि , ( ९० ) , स सधार्य प्रयत्नेन 'स्वर्गमक्षय' मिच्छता, 'सुख चेहेच्छता 'नित्य योऽधार्यो दुर्बलेन्द्रियै , ऋषय , पितरो,देवा भूतानि, अतिथयस्तथा, आशासते गृहस्थेभ्य , तेभ्य कार्य विजानता" (म०) । (४) 'सहायमाना वर्णन, 'क्षात्र' व्यपदिशन्ति च , 'सन्यास'आश्रमतश्चापि, 'सेवा-स्पृहो' विधीयते । 'शारीरेण' श्रमेण एते सदा (ह अ)यन्ते तु 'सेवका ', स्व च, त्रीन् अपराश्चापि, सर्वभारसहा हि ते, समान 'श्रम'-बलत सेवन्ते सतत पुन , सप्यमेव भवेयुस्ते 'यमिनो' 'यतयो' यदि 'अहिंसा, सत्य, अस्तेय, ब्रह्मचर्यापरि-ग्रहो''—एत [redacted] मनुना प्रोक्ता , तथान्यैश्च महर्षिभि , सन्यासिना मुमुक्षूणा योगिना च यमा सदा , "तप सतोष शौचानि, स्वाध्यायश्च निरतर, ईश्वरप्र-णिधान च, नियमा " इति कीर्तिता (यो० सू०) । आशीर्वादस्वरूपास्ते, सुखा-सुखान्तरतरा , करुणामूर्त्तय सर्वे, सर्वभूतहिते रता ,समाजमनुगृह्णन्ति शुभध्यान बलेन वै , शान्ति च सौमनस्य च मुनय , सदाभयदा , विस्तारयन्ति सर्वत्र, स्व 'प्रसाद' प्रभावत , (१००) , "मैत्री दया मुद् उपेक्षा भावनाना बलेन तु, सुखि दु खि शिष्ट दुष्टेषु, भवेच् चित्त प्रसादन'' (यो० सू०) । न सङ्लीना , नैवापि बहुसम्पत्तिधारिण , ससारव्यवहारेषु विनिमग्ना दिवानिश, मिथ्यावेशा ,जनप्रका , मिथ्यावैराग्यजल्पका , सर्व'धर्म' विहीनाश्च नियमै'श्चापि सर्वथा, कुर्वन्त कपटा-चारा सदा "स्त्रीशूद्रदम्भन'' (म०), सीताया छलने चापि हरणे, रावणो यथा,

वेश कृत्वा, "जलशुचि, शुद्धदन्, राक्षस, शिखी, जलपूको, अक्षमालावान्, धारयो मृद् अलाबुन, कमण्डलु कपालेन शिरसा च मुण्डावना, भवस्य स्वाक्षिके वस्ते, मात्रा समाडय, दण्डवान्, मन्त्रान् उच्चारयन् मिथ्या, धारयन् मरुस्थित, वदन बहुहुलिस्फोट, भ्रूक्षेप च विलोकयन्, सदिदर्शयिषु साम, निजुहृषु क्षपाटतां" (सद्दि०), न सम्प्रदायप्रचारया वा मुक्तामणिविभूषिता, न वा 'नगद्गुरु'म्मन्या, 'प्रतिवादिभयङ्करा', 'सर्वतन्त्रस्वतन्त्रा' वा, 'सर्वविद्यार्णवा' न च, न 'शास्त्रसार्व भौमा' वा, किन्तु सर्वाभयकरा, शमकराश्च सर्वत्र, शङ्करा, शरणकरा, अपि निर्दिञ्चना, दाता, रागद्वेषविवर्जिता, न्यस्तसंसारकार्याश्च, सर्वत्र समदर्शिन, मैत्राश्च करुणाश्चापि सर्वेषां हितचिंतका। (११०)। विरला साम्प्रते काले ईदृशा किन्तु भारते। सन्ति बहु इन्द्रियआरामा, मोघज्ञाना, अधायुष, धर्म विनष्ट यिषव, स्वकर्त्तव्यपराङ्मुखा, असन्त, सद्गृहस्थाना भारीभवितु इच्छव, स्वय गृहे न तिष्ठन्त, नार्जयन्तश्च जीविका गार्हस्थ्यवृत्तिभि सम्यक्, 'भिक्षा' इच्छति भूयसीं, आदराश्च, प्रणामाश्च, वैराग्यआडम्बरेण वै, वृद्धेभ्योऽपि गृहस्थेभ्यो, युवानो यदपि स्वय, ईदृशाश्च दुराचारान् प्रायशोऽप्याचरति ते, जल्पति अनल्प तर्कैश्च विरोध ज्ञानकर्मणो, स्वार्थाऽपि ज्ञानिन स्याप्ति, कर्मभ्यो विरतास्तथा, कर्मिभि भाषिता भिक्षा भक्षयति सुखेन तु, एषा ये संस्कृताभिज्ञा, बृहद्ग्रन्थान् लिखति ते, श्रुतिवाक्यै स्थापयितु विरोध ज्ञानकर्मणो; "विरजेद् यदह, तद् तदह प्रव्रजेद्" इति (जा० उ०), सत्यमेव विरक्तश्चेत्, प्रव्रजेत् शुकवत् ननु, न तु सत्य विरज्यते, भोक्तुमिच्छति केवल विना परिश्रमेण, अन्यै श्रमिभि पुनर् अर्जित, (१२०), अपक्रान्त कषायास्ते, बहि काषायवेशिन, वेशआजीवा यथा वेश्या, काषायआजीविकास्तथा, अवीतरागद्वेषाश्च, दम्भाहंकारभाविता, प्रजन्ति अधो मोक्षकामा, यथाऽह भगवान् मनु। यदि कोऽपि विरोधोऽस्ति ज्ञानस्य किल कर्मणा, नून महान् विरोधोऽस्ति सज्ज्ञानस्य कुकर्मणा, यद्वा ज्ञानस्य विदुष विरोधो मूर्खकर्मणा, वार्धक्यस्य यौवनेन यथैवाऽस्ति तथा ह्यय, अप्राप्य यौवन, नैव कश्चित् स्थाविर अश्नुते, "नाऽनुभूय, न जानाति जन्तुर्, विषयतीव्रता, निर्विद्येत स्वय तस्मात्, न परैर्भिक्षधी पुन" (भा०)। ऋणानि त्रीणि अनियत्य, "मोक्षमिच्छन् व्रज त्यध" (म०) रागान्, त्रिषु आश्रमेषु एव भुक्त्वा भुक्त्वा विरज्यते, ग्लानिरुप यते मिष्टेऽपि अन्ने, ननु, अतिभोजनात्, विरज्य प्रव्रजेन् नून; नान्यथा मुक्ति

माप्नुयात् । शुकादयस्तु येऽभूवन्, अपवादाः हि ते ध्रुवं, उत्सर्गस्य ; अपि सर्वेषां नियमानां तु बाधकाः अपवादाः सर्वत्रेव–नियमोऽयमपि दृश्यते । चतुर्भिराश्रमैरेव ज्ञान-कर्म-समन्वयः, मनुना साधितः सम्यग् ; तत्रान्यैर्मुह्यते वृथा । (१२०) । विरोधो दूरतो ह्यानां; ज्ञानस्यैवानुरोधतः, धर्म्यं च सफलं कर्म साधयेत ; न चान्यथा । "न ह्यनध्यात्मवित् कश्चित् क्रियाफलं उपाश्नुते" (म०), आत्मज्ञानानुसारेण समाजस्थापनं शुभं ; "विद्यया औपनिषद्या यत् क्रियते कर्म, तत्",ननु, भवेत् शुभतरं चापि,तथैव "बलवत्तरं" (उ०); "यं धर्मं तु व्यवस्येद् वै एकोऽपि अध्यात्मवित्तमः, स एव स्यात् परो धर्मः, तं धर्मं न विचालयेत्" (म०,याज्ञ०), वृद्धो, ऽनुभववान्, ज्ञानी,वनस्थो, न्यस्तवाँश्च वा, यतिर्वास्तु समीचीनं कर्म आदेष्टुं हि शक्ष्यति । अन्यत् निदर्शनं तत्र ; मुनयः ससमावनाः, वसिष्ठश्चापि व्यासश्च तथान्ये परमर्षयः, गृहस्थाः एव सन्तः ते आत्मज्ञानप्रवर्तकाः ; तथैव राजा जनकः शुकादीनां च देशकः ; अतएव मनुरप्याह, "ज्ञानेन, अन्नेन च, अन्वहं, गृहस्थेनैव धार्यन्ते त्रयोऽपि आश्रमिणोऽपरे" ; ईशावतारभूतश्च कृष्णः शास्ति तथैव हि, स्वयं महागृहस्थः सन्, वेदान्तानां परो गुरुः, अर्जुनं कर्मणि क्षात्रे वेदान्तेनैव योजयन्, "गुह्याद् गुह्यतमं शास्त्रं," अध्यात्मं शास्त्रं अशिक्षयत्, तेनैव निर्णयं कुर्वन्, संशये धर्म्यकर्मणः (१४०) । यो ब्रह्मचारी गार्हस्थ्यं न इच्छेद् धारयितुं खलु, "नैष्ठिकं ब्रह्मचर्यं"स कुर्याद्,(आज्ञा तथा मनोः), गुरौ वसन्,तथाऽभ्यस्यन् विद्यास्तु विविधाः शुभाः ; "यदि तु आत्यन्तिकं वासं रोचयेत गुरोः कुले,युक्तः परिचरेद् एनं, आ शरीरविमोक्षणात् ; अनेकानि सहस्राणि कुमारब्रह्मचारिणां, दिवं गतानि विप्राणां, अकृत्वा कुलसंततिं" (म०); गार्हस्थ्ये धारयित्वा, यः न्यसेत्,'सन्यासि-' नाम सः विभृयाद् ; उचितं तत् स्यात् ; नान्यथा हि उचितं तु तत् । 'नैष्कर्म्य'-शब्दस्यार्थेऽपि बहवो भ्रान्ति आगताः ; बन्धनिर्मोचकं कर्म 'निष्कर्म'-इति हि भण्यते, संकेतेन, आत्मशास्त्रस्य ; बन्धकं कर्म, 'कर्म' वै । "सुखाभ्युदयिकं चैव, नैःश्रेयसिकमेव च, प्रवृत्तं च निवृत्तं च", द्विविधा कर्मणो गतिः, (म०); उभयं न समअदिष्टं ज्ञानेनैवात्मदर्शिनां,आत्मनश्च गतिं सूक्ष्मां संसारे बहुदर्शिनां, तदन्धाभेदज्ञातानां आश्रमाणां विवेकतः । साम्प्रतः अद्य सर्वेऽपि राजभृत्यत्वं इच्छवः,स्वस्वभावोचिताः नैव लभ्यन्ते वृत्तयो यतः ; (१५०) न चैव बहुकोटिभ्यो राजभृत्यव्यवृत्तयः दातुं शक्याः ; ततो वृत्तेः अभावः दृश्यतेऽद्भुता, सुदरिद्रजनता

चापि, सर्वत्रैव हि भारते, मुष्टिमात्र धनाढ्यास्तु, दरिद्राः कोटिशस्तथा।

स्पृहे चतुर्भिश्चैव किन्तु समान सुव्यवस्थित, सर्वस्मिन् मानवे लोके, सर्वत्र पृथिवीतले, मर्यादितश्च सद्धर्मे वर्णाश्रमनिबन्धने, (न ह्येव 'जन्मना' किन्तु), स्वभावगुणकर्मभिः, सविभक्तैश्च कर्तव्ये अधिकारस्तथैव च, परिश्रमैश्च तन्मूल्ये — दुःख अल्पतर भवेत्, यावच्छक्य मनुष्याणां, सर्वोऽपि सुखमाप्नुयात्, सर्वोऽपि कार्यं, वृत्ति च, लभेत स्वोचिता अपि, शान्तिश्च भूयात् सर्वत्र, सौमनस्यं च सर्वदा। "नाऽब्रह्म क्षत्र ऋध्नोति, नाऽक्षत्र ब्रह्म वर्धते" (म०), नाऽवैश्य उभय जीवेत्, नाशूद्र त्रितय चलेत्, "ब्रह्मणा विहिता वर्णा लोकत्रय अभीप्सता, यदि इह शूद्रवर्णं स्यात् जगत्, सर्वं विनश्यति, यदि ते ब्राह्मणा न स्युः ज्ञान योग यज्ञ सदा, उभयोर्लोकयोः, देवि! स्थितिर्न स्यात् समासतः, यदि नि क्षत्रियो लोके, जगत्स्यात् अधरोत्तर, रक्षणात् क्षत्रियैरेव जगत् भवति शाश्वत; (१६०), तथैव, देवि!, वैश्याश्च लोकयात्राहिता स्मृता, अन्ये तान् उपजीवन्ति प्रत्यक्षफलदा हि ते, यदि न स्युस्तु ते वैश्या, न भवेयुस्तथाऽपरे तथैव शूद्रा विहिता सर्वधर्मप्रसाधकाः, शूद्राश्च यदि ते न स्यु, कर्मकर्ता न विद्यते, त्रय पूर्वे शूद्रमूला, सर्वकर्मकरास्तु ते" ( म० भा० अनु० २०८ )।

आशासनम्

ॐ चतुर्वर्गेषु सम्पुष्टः समाजोऽयं भवेदिह, सदा सर्वाङ्गसम्पन्नः, सर्वे पक्षास्तु कृतश्रम, पर्यन्ता 'ज्ञानिनो'ऽस्माकं, धीरा वीराश्च 'रक्षिण', 'पोषका' श्चाभिवर्धन्ता प्रीता 'समाधका'स्तथा, 'दातारो नोऽभिवर्धन्ता, मा च याचिष्म कञ्चन", स्यूहा सर्वेऽभिवर्धन्ता चत्वार मिलिता सदा, अन्योऽन्य अनुरक्ताश्च, परस्पर अनुमता, यथैकदेहस्याङ्गानि सुपुष्टानि सुवर्यया, 'सत्य'मेव युग चास्तु 'कृत'मेव हि भारते, तथाऽखिले मनोर्वंशे दृशार्गे 'सर्वत स्मृते।' "रुच नो धेहि ब्राह्मणेषु रुच क्षत्रेषु न कृधि, रुच विश्येषु, शूद्रेषु, मयि धेहि रुचा रुच' ॐ। (१६९, आदित २०१०)।

---

## ॐ ७ अध्याय

### शङ्कासमाधान

शङ्का काश्चित् समाधातु, प्रश्नान् उत्तरमेव च, अध्यात्मशास्त्रसिद्धान्ते, अतोऽग्रे प्रयतिष्यते। चिकित्साया उपायो ऽत्र प्रोक्तो, यदि न रोचते, अवश्य चिन्तनी

असतश्च निवारयेत्'' (म० भा०), क्षतात् कृशाश्च त्रायेत,स 'क्षत्रिय' इति स्मृत, दुर्बलाना क्षतात् त्राता, क्षेता च उद्धतपापिना, क्षन्ताऽत्मनि अपकाराणा,स क्षत्र पदभाग ध्रुव। कर्षणै सिंचनैश्चापि, मालाना रचनैरपि, सार्गानां गोपणैश्चापि, पृथिव्यां 'विशती'ह य, सर्वलोकोपकाराय 'विशो' यस्मिन् 'विशन्ति' च, (२०), 'परि वेश यिता' (भोजयिता) उन्येषां यश्च'वेशा दिसाधक, शालीन शान्ते शालै स हि 'वैश्य' इति स्मृत; चतुर्वर्ण चतुर्वर्गं चतुराश्रम-विष्टये, स विशति विशो-यस्मिन्, स वैश्य इति वर्ण्यते, 'विश' प्रजा,'विशो'ऽन्नानि,धनानि च 'विश' स्मृता, ''विश त्वा सर्वा वाँछन्तु मा त्वद्राष्ट्र अधिभ्रशत् (य० वे० अ० १२), ''विशि प्रतिष्ठितो राजा''—श्रुतिष्वेव तु पठ्यते ( य०वे०; अ०वे० २०), 'विश' एव स्मृता आर्या पृथिव्या 'वेशनाद्' इति; 'शालीन त्वात् तथा चार्यै ,'ग्राम्ये त्य' च विवेकत, 'ग्राते', 'समूहे', गच्छन्ति, 'ग्रातेन' अपि दिने दिने 'भृत्या' जीवन्ति, चार्हन्ति 'ग्रते' प्राप्नु तथार्यता, सत्कारेण नवीनेन, 'ग्राह्या' ते खलु मानवा, ईदृशाना तु य स्वामी स 'आर्य' इति कथ्यते, पाणिनीय तथाम्सूत्र— ''अर्य (स्यात्) स्वामि-वैश्ययो'', आर्यो ऽर्य एव, शब्दोऽय निष्पन्नो हि 'ऋ'-धातुत, गच्छति, 'ईर्यति', देशान् यो नवीनान् वासयन् अपि, निवारणाय चा ऽर्त्तीना 'ऋत्तु' योग्यो भवेत् तु य, 'अर्यते' सतत चाऽर्त्तै, स 'आर्य' इति क थ्यते, 'अर्यत्वात्' चाय अन्येषां 'स्वामी भवितु अर्हति। ( ३० ) । ईदृशेभ्यो हि वेदाज्ञा, ''इन्द्र वर्धन्तो, अप्तुर, कृण्वतो विश्वं आर्य, अपघ्नतो अराव्ण.'', 'चरेम भूमौ, इत्येव सोम प्रार्थयत, द्विजा !, सोमशं, सौम्यभावैर, हृ आर्या !, चरत भूतले, हे सोम !, ओषधिराजस्त्व, तथाऽस्मान् ऊर्जयस्व यत्,इन्द्र, स्वकीय राजान वर्धयन्त सदा, यय, आप्नुवतो (अप्तुर) महान् दशान्, यात्योंमित्र निवासिन, यास्यत्सोमसादिविधिभि प्रापयत सदार्यता,अरीणा (अराव्ण) शत्रुता चापि घ्नत, तान् मित्रभावना नयतो, विश्वं अपि भायं क्रमेण एवं कृर्णमहि' (ऋग्वेद,पवमान-सोमसूक्त, म० ९, सू० ६३, म० ५)। ग्रयोऽप्येते 'द्विजा.' जाता, कृतऽस्मकृत बुद्धय, चतुर्थ 'एक जातो' यो,नऽसमदर्शी च बालवत्, ज्यष्ठाना किंकरश्चापि, 'द्रवति आशु' तदाज्ञया कर्तु तेषा सहाय य, स हि 'शूद्र' इति स्मृत, शुचा ऽल्पया द्रवेद् यस्तु, सेवया द्रावयेच्च सा, अन्येषा,यश्च पोष्यो य शिष्य, शूद्रो हि स स्मृत, ''अवश्य भरणीयो हि वर्णानां शूद्र उच्यते'' (म० भा० शा०)। एष

महत्यर्थे शब्दास्ते सर्वेऽपि प्रचलिता गता ,यथोत्तमानि वासांसि जीर्णानि बहुकालतः, दुरुपयोगेन च अस्थाने, भवन्ति, मलिनान्यपि ,(४०) , न भृत्यान्, न भृत्यानि, न धर्मान् 'वर्णयन्ति' ते । सर्वेषामपि कर्माणि सर्वे कुर्वन्ति साम्प्रतम्—अध्यापनं, शस्त्रकार्यं, कृषिवार्त्ता, च सेवनम् , "सर्वे सर्वाण्यपत्यानि वर्णाः सञ्जनयन्ति हि , कृतकृत्याः सर्ववर्णा यदि धर्मं न पश्यति" ( म० भा० )—इत्येव अप्रवदत् सर्पं रूपिणं नहुषं नृपं, युधिष्ठिरो धर्मराज ,यथा वै भारते कथा । अन्यत्राऽपि दृश्यते देशविराट् पुवानवस्थिति , सर्व'जाति'षु सर्वेऽपि 'वर्णा ' प्रचलता स्थिता , मन्येव भारते तत्र सर्व'जाति'षु 'पण्डिता ', 'महाराज'पदधाश्च 'भूमिपा ' सर्व'जाति'षु, 'धनसंग्राहका'अपि, चतमृष्वपि 'सेवका ' । 'वृत्ति संकर'इत्योऽयं सर्वथा 'वर्णसंकर ' । विवेकार्थं अतो धर्म कर्मादीना स्वभावस ,चत्वारो हि यथा शब्दा ,धर्म-कर्म्म अवबोधका , जीविकाद्योतका , वृत्तिविभागस्यापि साधका, अर्थगर्भा ,समाजस्य व्यवस्थार्थं अपेक्षिता । शिक्षका रक्षकाश्चैव,पोषका ,धारका अपि, ज्ञानदा , प्राणदाश्चापि, अन्नदाश्च, सहायदा , बोधिन , शुष्मिणश्चापि, शूरिन , श्रमिणस्तथा , (५०) , शास्त्रिण , शस्त्रिणश्चापि, धनिन , भारिणोऽपि च , यशस्विनश्च, तेजस्वि महस्वन्तौ , वरस्विन , तपस् , सहस् , सर्वेष ओजो , रहो , येषां भवेत् स्मात् , विद्वासश्चैव,वीराश्च, वदान्याश्चापि,सेवका , वार्मिणो, चर्मिणश्चापि, धर्मिणो ( कुरुचवस ), श्रमिणस्तथा , प्राज्ञा , शूराश्च, दक्षाश्च, द्युतिमत्तमर्थन च , विप्रा पर्वजिनश्च एके, अपरे रक्षोपजीविन , वार्तोपजीविनश्चान्ये,चतुर्था भृतिजीविन — एव सम्भागगम्भीरा , स्वस्वधर्मावबोधका , कृत्यम्मारयितारश्च,नीचोच्चभावर्जिता , चतु शब्दचया , उक्ता , अन्ये वा तादृशा अपि, व्यवहियता एतर्हि, सदास्वव्य-भवाय वै । चतुर्णां अन्यनामानि 'द्वीपे' 'द्वीपे', 'युगे' 'युगे', पुराणेष्वितिहासेषु सन्त्येव उक्तानि भूरिश । यथा कौर्मे तु, वा कुले, शाल्मले च, कुशे क्रमात्, क्रौञ्चे, शाके, तथा गोत्रे, वर्णसंख्या समवति हि—"आर्यका ,कुरराश्च, विदेहा , भाविनस्तथा,ब्रह्म क्षत्रिय विट् शूद्रा प्लक्षद्वीपे प्रकीर्तिता , कपिला ,अरुणा ,पीता , कृष्णा ,द्वीपे शाल्मली, द्रविणा ,शुष्मिण , स्नेहा ,मन्देहा च,तथा कुश,(६०), पुष्कला ,पुष्करा ,धन्या ,तिष्या ,क्रौञ्चे,क्रमेण वै, मृगाश्च,मगधा ,शाके , मानसा , मन्दगा तथा ,एते अवर्णा एवं संवर्णा प्राप्यस्त्रिगुणवर्जिता " ( कूर्मपु० अ० ४९ ) । एव 'द्वीपेषु' सर्वेषु समाना वर्णा व्यवस्थिता । सर्वदेशेष्विदानीं च, प्राय सर्व-

नृजातिषु, चत्वारो मुख्यतो हिन्दुसे, उक्ता अपरनामभि , समाजकार्यव्यूहार्थं, न स्पर्धार्थं परस्पर,यथा प्राचीन 'वपषु'अर्वाचीनेष्वपि वै तथा। पश्चिमेषु आङ्गलभाषया तेषा सज्ञा प्रकीर्तिता –प्रीस्ट सोल्जर मर्चेण्ट वर्कमान' इति नामभि : 'कर्जी नो -रम-कामन्स्'च'ऐस्वरर्'इत्यपि वै तथा, पार्स-मिस्र अर्ब देशेषु, मुहम्मद् अनुयायिषु, 'आलिम्', 'आमि ', तथा 'ताजिर्', 'मज्दूर्' इति च शब्दिता , पारसीकेषु 'कर्दुहन'सुभिधर्मावलम्बिषु, 'अथर्वन अरथेस्तार-वस्त्र्य हूतिश्' इतीरिताः, जापाने 'तिसुण' द्वीपे, 'शितो' धर्मावलम्बिनि, 'सोगुन् समुरा हैमिन्'श्चापि 'एता'—इत्यादि च वर्णिता । न तु पाश्चात्यदेशेषु कृत वृत्तिविभाजन, विस्पष्ट बुद्धिपूर्वं च, ततन्त्रानवस्थिति , क्षोभ , स्पर्धा च, सवर्प , 'वर्णाना' तु परस्पर । (७०) । एतत्सर्वं समालोच्य, समीक्ष्य च परीक्ष्य च, नूतननामभि सार्धं कार्यं वृत्तिविभाजन, धारयन् 'वर्ण' नाम एक,वृत्ति एका च धारयेत्, सहऽआहारविवाहऽादि,सौलभ्येन चऽाचरेत्। एव कृते सममाणा मानवाना तु सग्रह सम्भवेन् मानवे धर्मे, यतो ह्यपि चतुष्टय । शेष वैष्णव शाक्तेषु, नास्तिकेष्वेषु 'हिन्दुषु' सूर्याद्युपासकेषु, एव, चत्वार सति ते यथा, बौद्धा , जैना , यहूदाश्च, मुस्लिमा , क्रिश्चना तथा, सिक्खा च अपरधर्माण विभाज्या स्यु चतुर्ष्वपि । यथा पजाबिनो, वाङ्गा , युक्तप्रान्तीयका , तथा मद्रासिनो, महाराष्ट्रा , आन्ध्रा , मारवाडिणो ऽपि च, भारमाणाश्च विभिन्ना भाषा , विविधधर्मिण , विभिन्ना बहुधाऽचारै , वेषभूषादिभि तथा, अन्यप्रान्तोद्भवाश्चापि, सर्वा सर्वेऽन्य 'हिन्दिन ', ( हिन्द'देशोद्भवो 'हिन्दी', 'पंजाबी' इत्यादिवद् भवेत् ), चतुर्वृत्तिविभक्ता , स्यु चतुर्वर्णषु सगता —तथैव च एव न स्यु यदि जापानि चीनिन ,ईरानिन , तुर्किणश्च, रूसिनो, ऽफगानिनस्तथा, जर्मना , मिश्राश्चापि, फ्रेञ्चा , स्पेननिवासिन , अमेरिकानाश्चान्ये च सर्वे मानवजातिजा. ? (८०)। शक्तिकृता चतुर्थ एव "पृथिव्या सर्वमानवा " मनुना, स्पष्टमादिष्ट चापि, "नास्ति तु पचम " (म०) । चातुर्वर्ण्यव्यवस्था इय 'सचिका' (साचा) इव विनिर्मिता , मानवाना समूहोऽस्या य 'पूर्यता' ऽपि कश्चन, स एव लभते रूप सचिकायाश्चतुर्दल, स्वर्णकारस्य हस्तेन, वह्निना च द्रवीकृत, सचिकाया यथा हेम क्षिप्त, तद्रूपभाग्भवेत्, कुम्भकाराणा यथाऽकार प्राप्नोति सलिल घटेन् । पुराणादिषितिहासेषु, नतशो 'जातय ' स्मृता', मत्स्याश्च, मगधाश्चापि, चेदय , काशिकोशला , वाह्लीकाश्चापि, गाधारा , सौराष्ट्रा , चाथ नैषधा , कुरवो, ऽङ्गाश्च,

यवनाश्च, चीना, पाश्चात्यश्चैव च, चातुर्वर्ण्यं तु सर्वासु 'जातिषु' एतासु अभूत् सदा। अर्थोऽन्यो 'जाति'शब्दस्य, 'वर्ण'शब्दस्य चाऽन्यथा, अर्थयो सङ्करान्वि सजातोऽस्य सहाश्रम, यत् 'जन्मनैव', 'जायेत', 'वर्णो' भवति वै नृणा। 'जन्मना जायते' एवास्ति 'वर्णो' भवति 'कर्मणा'। (१०) । जीविकाकर्मणा वर्णे, तद् धृते अवबोधक, दृश्यते चान्यदेशेषु, भारतेऽपि पुरा तथा।

कर्मणा वर्णस्य सिद्धौ, अन्यदेशेभ्य भारतस्य को विशेष स्यात् ?

(३) प्र० भूय उत्थाप्यते प्रश्न —इय रीतिस्तु भूतले, विहाय भारत वर्ष सर्वत्र प्रसृताऽधुना यदि जन्म तिरस्कृत्य मा एव अस्माभिश्च गृह्यते, को विशेषो भवेद् एव अस्माकं 'वर्ण'धर्मिणा ?

उ० उत्तर तत्र चैव स्यात्—जीविकाना 'विभाजन' सुचीनत, लोकाना च, धर्माणा, कर्मणा तथा, कृत्याना, अधिकाराणा, श्रमस्य, अर्थस्य चैव हि, सिकामाय आद्यैरस्माना बुद्धिपूर्वं 'विभाजन', पूर्वं चतुर्धैरकाना गुणभेदानुसारत —अयमेव विशेषोऽस्ति 'कर्म वर्णं' व्यवस्थिते , न ईदृश् विभाजन बुद्धिपूर्वं अन्यत्र दृश्यते, राष्ट्रीयनियमेनापि, 'धर्मेण' इति यथा पुरा भारतेऽभूत् पर तु अद्य सर्वं सकीर्णं अत्र च। 'चातुर्वर्ण्यं मया सृष्ट गुणकर्म विभागश ' (गी०) चतुर्णाना 'विभागेन' विना, वर्णचतुष्टये, न धर्मसम्मत सम्यक् चातुर्वर्ण्यं तु सिध्यति। एक एव नरो यत्र सर्वमेव जिघृक्षति—'सम्मान', 'दयिता' चापि, 'धन', 'मोद' च, सर्वथा सर्वोत्कृष्टत्वमेव—अय प्रधानो वर्ण-संकर (१००), ईशिता 'ईश्वरभाव ' स्यात्, कृष्णेन व्याहृत यथा, 'आज्ञा शक्ति ' तु सा एवास्ति, मनुस्मृतौ यथा उदित, अव्याहत आज्ञा ईशित्व आत्मा न प्रतिहन्यते यस्य, ईश्वर स एवास्ति, "समर्थ कर्तुं एव वा, अकर्तुं वा अन्यथाकर्तुं" यो भवेद् यत्र तत्र स ईश्वर स्यात्, यथा प्रन्दो 'महीश्वर नरेश्वरौ "ईश्वरोऽह,अह भोगी, सिद्धोऽह" इति मन्यते आसुरप्रकृति मूढ ऐश्वर्यमदमोहित (गी०) 'धर्म, ज्ञान च वैराग्य, ऐश्वर्यं च इति लक्षण, रजोविद्धस्य सत्त्वस्य, योगेषु उक्त चतु र्विध (वा०भा०) सात्त्विकं दैव ऐश्वर्यं, भूताना हितकारि तत् आसुर तामस हि अन्यद्, परद्रोहि अपकारि च। जीविकाना, साधनाना, धर्माणा, कर्मणा तथा, कृत्याना,अधिकाराणा, सकरो वर्णसकर , विपमप्रकृतीना च विवाहोऽस्त्यपि सकर , 'जाति नास्त्येव भिन्नाना उद्वाहो नास्ति संकर । कुतो न ईदृग्विभागोऽन्यदेशीयैं

बुद्धिपूर्वकं, तेषां समाजेष्वप्यस्माद् दृश्यते कल्हा भृशं, तथापि नास्माकमिव दासास्ते ऽन्यस्य कस्यचित्। विशिष्टधर्मता लुप्ता न, विशेषस्तु शिष्यते, यत्र् जन्म वर्णता-मूढा वयं दासवमागता । (११०)। 'शक'हूणाद्य पूर्वं येऽत्र आगत्य समागता, ते 'शाक'द्वीपिनो विप्रा, क्षत्रिया वा, बुधैः कृता, 'कायेषु', राष्ट्रकार्याणां लेखशालासु लेखका 'काय-स्था'श्चा कार्यदक्षा, वैश्या शूद्रास्तथा कृता, गुणकर्मानुसारेण कर्मवर्णेषु मेलिता । 'राजपूताना' प्रान्ते च 'सन्त' क्षत्रजातय, 'सोलङ्की'-'परमारौ' च,'चौहान' 'पड़िहारकौ', प्रसिद्धाश्चाद्य विद्यते सर्वेपि 'अग्नि कुल'ऽात्मया, आख्यायिकापि चैतेषां जननस्य प्रथीयसी—विप्राणां अग्निकुण्डात् ते उत्थिता, यज्ञकर्मणि, निरोद्धु प्रतियुद्धेन बाह्याम् आक्रमकारिण, यथा 'कृपा' ऋषिमुख्या पुराणे सन्ति वर्णिता । आख्यायिकाया तु अर्थोऽस्या स्पष्टं एव हि दृश्यते—अग्नि प्रज्वाल्य साक्षित्वे, ज्ञानिभिर्दूरदर्शिभि, महद्भिः, राजधर्मज्ञै, भारतस्य हितेप्सुभि, विधिवद्वेदमन्त्रैश्च घोरवीरविनाशनैः, समक्ष जनतायाश्च, शूरा केऽपि अन्यजातित, 'महाजन समारोहे,क्षत्रियत्वेन संस्कृता, चतसृणां च समाजा नायकत्वे नियोजिता, 'ब्रात्यस्तोमादि' विधिभि वेदप्रजल्पी, यथा पुरा आर्या, वाधिव्याथ, "कृण्वु विश्व आर्यं" प्रयेतिरे । (१२०)। विद्योपजीविनस्त्वेके, परे रक्षोपजीविन, वार्तोपजीविनश्चान्ये, ऽपरे सेव्योपजीविन, सर्वत्रैव हि दृश्यन्ते, न तु जन्मप्रग्रहस्तथा, यथाऽत्र भारते वर्षे, परेषां दासतां गते । कर्म वर्णां जन्म वर्णान् यथेष्ट द्रावयन्ति वै, पाश्चि वापि दृश्यति तुर्को, हि 'अल्लाः'स्यस्तु सर्वथा, मर्वेषां ज्या सर्वमान्या 'शक्तिर्' एका एव देवता, 'अशक्त' क्षिप्यते सर्वैं, न 'अविष्णु'श्चापि न 'अशिव' (देवीभा०), "पठका पाठकाश्चैव,सर्वे पठितमागिन, सर्वेऽपि मूर्खा एव एते, य क्रियावान् स पण्डित., कर्मवीर तु धार्मीरा. रमयन्त उपासते" (म० भा०)। "सर्वेषामेव देवानां शक्रादीनां शरीरत निर्गतं सुमहत्तेजम्, तच् च 'ऐक्य' समगच्छत" (दु०स०) यदा, तद्देवाभूत् पूर्वं महिषासुरसूदन । चत्वारि अपि वर्णानि ऐक्य,ब्राह्म क्षात्र धन श्रमा ,यदा सर्वे समेष्यति, तदा स्यात् पापघातन ; अयमेव 'चतुर्व्यूहो'ऽवताराणां [illegible] शाश्वत । उपोऽप जाति भिन्नानां तत् कथ सम्भविष्यति ?

युद्धेन वर्णसङ्करो न भवति किं ?

(४) प्र० पृच्छेयुस् तत्र केचित् तु गीताऽध्ययनतत्परा —'युद्धेन भाविना वर्ण संकरा धर्मनाशकृत्',शङ्का इमां अर्जुनस्य न निराकरोत् तु,तादृशं पदं कृष्ण ,

यथा, 'नैव भविता वर्णसङ्करः, (१२०) कुलधर्माः न नंक्ष्यंति, न च धर्माः सना-तना', पितरो न पतिष्यंति लुप्तपिण्डोदकक्रियाः, पुनाश्रोत युद्धेन; प्रत्युत, उद्धरणं पुनः, संस्थापनं च, धर्माणां विभ्रष्टानां भविष्यति'।

उ० शङ्कायाः उत्तरं हि भवतः समाधानार्थं ॥ इदं—यद्यपि धर्मस्य एव शब्दैर् न तदा एवं उक्तं, तथापि अस्ति समस्यायाः गीतायाः अयं एव हि, नान्यः कश्चित्, 'आशयम्' तु; शब्दैर् अर्थैश्च 'व्यञ्जितः'। तादृशीनां ॥ शंकानां, पार्थेन उत्थापिताः हि याः, स्थाने अपि समस्तेषु युद्धेषु, अस्मिन् न कैवल्यं, यतो, न धार्मिकैः किं, भोः!, युद्धं कार्यं कदाचन ? क्षतात् त्रायते'इत्यर्थं 'क्षत्रियस्य' वृथा एव किं? "कानीनस्य मुनेः, स्वबान्धववधूवैधव्यविध्वंसिनः, नप्तारः, कुलगोलकस्य तनयाः, कुण्डः स्वयं पाण्डवाः; ते वै पंच, समानदारनिरताः, तेषां कथाकीर्त्तनात् पापं नश्यति, वर्धते च सुकृतं, धर्मस्य सूक्ष्मा गतिः", इति श्लोकः प्रसिद्धोऽस्ति। युद्धात् पूर्वं हि सङ्करः आसीद् विद्यमानो हि, महारथैर् बहुभिस् तथा; अश्वत्थामा, कृपो, द्रोणः, ब्राह्मणाः क्षत्र-धर्मकाः ; स्त्रियाणां चापि, राज्ञां च, स्वत धर्मविपर्ययाः, (१४०), काम-क्रोध-लोभ-मोह-मद-मत्सर-कारिताः, दुराचारात् तु, महाकाले, संति व्यासेन दर्शिताः। युद्धात् प्राग् एव नहुषं सर्पं आह युधिष्ठिरः, "सर्वे सर्वासु अपत्यानि वर्णाः संजनयं-ति हि"। अतः समर्थयन् युद्धं कृष्णः पार्थं अबोधयत्—"यदि हि अहं न युध्यां चेद्, धर्मयुद्धं, अतन्द्रितः, उत्सीदेयुर् इमे लोकाः, उपहन्यां इमाः प्रजाः, संकरस्य च कर्त्ता स्यां सदा ; न एव प्रवर्त्तनाद्, धर्म्ययुद्धस्य, श्रेयोऽन्यात् क्षत्रियस्य न विद्यते (गी०)। पुनश्च सोऽवदत् पार्थं, "ग्लानिं धर्मस्य वीक्ष्य वै, अधर्मस्य अपि च उत्थानं, आत्मानं सृजामि अहं"; तादृश्यां चापि अवस्थायां, "संभवामि युगे युगे, पुनः संस्थापनार्थाय धर्मस्य", न विस्मर्ये। 'कस्य धर्मस्य'—चेत् पृच्छा ; 'वर्ण-धर्मस्य'—तु उत्तरं। वर्णाश्रमाणां धर्मेषु सर्वे धर्माः व्यवस्थिताः ; आश्रमाणां तथा धर्माः वर्णधर्मान्तर्गताः ; चातुर्वर्ण्यआश्रितं धर्मं ततोऽसौ वक्ति विस्तरात्। संन्यास एव हि कस्यापि वर्णस्यार्थे, प्रतिपादितः गीतायां वेदसारो वै ; न सन्यासिनः एव हि, सर्वथा विनिवृत्तस्य, विरक्तस्यापि कर्मणः, आश्रमान् त्रींस् तु निर्वाह्य सस्थितस्य चतुर्थके क्षत्रियेण गृहस्थेन, क्षत्रियाय एव तादृशे, सादिष्टो धर्मसारो-ऽयं सर्वसंग्रहकारकः। (१५०)। यदि सन्यासिनां एव बोधकोऽयं भवेत्, तदा चातुर्वर्ण्यस्य धर्माणां कस्माद् अत्र निरूपणं ? पितामहस्य भीष्मस्य, वासुदेवागत-

स्य, च, मुखेन स्थापन तेषां, युद्धान्ते विस्मरात्, पुन ? किमर्थं चापि अर्जुनाय गृहस्थाय उपदेशन, "कर्मणि एवाधिकारस्ते", "तस्माद् युध्यस्व, भारत !", "धर्म्याद्धि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते", "तस्मात्, सर्वेषु कालेषु, मा अनुस्मर, युध्य च" ? सर्वसंग्राहक धर्मं, वर्णाश्रमसमाश्रय, तस्मिन् काले भूशं ग्लान, सङ्कीर्णं चापि सर्वथा, सर्वेषु अपि विभागेषु, पुन स्थापयितु भुवि, यतोऽवतीर्ण कृष्णोऽभूत्; सद्रूप उपदिश्य यं सात्वत, तावत, तस्मात्, सर्वतः चापि, फाल्गुन, क्षत्रियस्य, गृहस्थस्य, प्रजारक्षणधर्मिण, शिष्टानां सङ्ग्रहस्यापि दुष्टानां निग्रहस्य च कर्तु, विशेषधर्मोऽस्ति, युद्ध कौरवपापिभिः—इति आदिदेश भगवान्, लोकशिक्षार्थं एव। एव पूर्वोदिता शङ्का गीतया तु निरस्यते—न भावी धर्मयुद्धेन वर्णानां खलु सङ्कर, प्रत्युत तथा पुन पृथक्त्वा सम्यक् धर्म्य विभाजन। (१६०)। सारो विचारस्य एतस्य संक्षेपेण उच्यते पुन —अवश्यमेव युद्धे-भो जायते वर्णसङ्कर, योधानां दुधरित्र योषितासु बलात्कृते हामाय च नर सङ्ख्याया युद्धेषु मरणेन च, विहाय स्वगृहाण्यपि युद्धकार्येषु मज्जने, अरक्षितासु अत स्त्रीषु व्यभिचारस्य वर्धनात्, किंतु एतस्य प्रतीकारो, नाह युद्धात् पलायन, अपि तु स्थापन भूयो, युद्धेषु शमितेषु वै, व्यवस्थायाः दृढतर वर्णानां कर्मणैव हि। जामदग्न्य क्षात्रवधे घोर युद्धं ना समापने, नूतन वर्णनिर्माण कश्यपेन यथा कृत। एवमेवाभिमन्यताभावे यास्यति न्यूनता, स्वल्पीभविष्यति यत सर्वे कलहहेतव।

वंशपरम्परा व्यर्था किं ?

(५)प्र०सत्यतेऽत्रकेचित्,विना हेतु श्रुतिस्वरा—निरर्था,निष्प्रभावा वा,किंतु वंशपरम्परा ? 'येनास्य पितरो याता, येन याता पितामहा, तेन यायात् सतां मार्गं, तेन गच्छन् न रिष्यते' (म०), इति यत् मनुनाऽऽदिष्ट व्यर्थमेवास्ति किंतु तत् ?

उ० तत्र एतद्धि समाधान —न एतत् व्यर्थ कथचन, मूल आप्तोपदेशोऽयं केनापि निरस्यते, अर्थोऽस्य पूर्वं एव उक्त, 'उत्सर्ग' तादृशो भवेत्, प्राय 'सामान्य'-रूपश, साधारणजनार्थक, किंतु तत्र अपवादा ये, 'विशेषो' न्मेष-कारिता, येषु केषु, यत्र तत्र, न उपेक्ष्या तेऽवहेल्या। (१७०)। प्रकृते 'सूचक' जन्म, कर्म 'निर्णायक' पुन। पुत्राय चेत् पितु 'कर्म' स्वभावेन एव रोचते, करोतु अवश्य तद् श्रय, न केनापि निवार्यते। उत्तमा जन्म कर्मभ्या, कर्मणा एव तु मध्यमा, निष्ठा एव केवल जात्या, वर्णवत्ता स्मृता बुधै। नैसर्गिकी प्रवृत्तिश्च, तथा वंशपरम्परा,

मिलिते चेत् उभे, पुष्पे, 'स्वर्णे सौगन्ध्य' अस्ति तत्। प्रकृति आकृता यत्र भिन्ना वशस्मात्, तत्र प्रवृत्तेर् अनुरूप जीविका, वर्ण एव च। ततश्च पुराणेषु दृष्टान्ता वर्णपर्ययें। 'उत्सर्गाणां' तु सर्वेषां 'अपवादा' भवति वै। अवश्य 'नियमो' मान्य, मान्यो 'बाधो'ऽपि, हेतुना, साधारणासु अवस्थासु नियमस्य प्रवर्तन, विशेषासु, अपवादा हि प्रभवन्ति एव सर्वत्र। "अन्यो धर्म समस्थस्य, विषमस्थस्य चाऽपर, न कोऽपि आत्यन्तिको धर्म, धर्मो हि आवस्थिक स्मृत" (म०भा०), सम्पत्काले यथा 'उत्सर्गा', 'विपरीता' स्तथाऽऽपदि, नियमा एव निय मान् बाधन्ते; नियमो हि असो अपि अस्ति, स च सर्वत्र प्रभवन् तु मन्यते। "नहि सर्वहित. कश्चिद् आचार सम्प्रवर्तते, तस्माद् अन्य प्रभवति, सोऽपर बाधते पुन, (१/०), आचाराणा अनैकाग्र्य तस्मात् सर्वत्र लक्ष्यते" (म०भा० शा०), निमित्तानि समीक्ष्यापि, देशकालौ अवेक्ष्य च, समाजस्य हिता धर्मा कल्पनीया सदा बुधे। "शिल्पो, रसाश्च अर्था विद्या, धर्मा., शौच, सुभाषित, विविधानि च शिल्पानि, समादेयानि सर्वत" (म०)। चिरकालात् कुले यस्मिन् प्रथिता एका परम्परा, वर्तते चापि कर्म एव जीविका वृत्तिसाधक, त्रिगुणेषु एक गुणस्य प्राधान्य ■ विशेषत, परो परो सन्ततौ च, यतो तद्गुणसंभव, किंतु सभव एवास्ति, न पक्षपात निश्चय, नियमस्यास्य भगो हि बहुधा दृश्यते धरा.। महर्षिभ्य सुरा जाता सुरा दैत्याश्च, राक्षसा, ऋषय, क्षत्रियाश्चापि, विट्‌-शूद्रा अपि जज्ञिरे, कुले विद्याविहानेऽपि भवत्येव तु पंडिता, यतो तथैव शूराणा जायते भीरवोऽपि वै, भीरूणा च कुले वीरा उत्पद्यते पुन पुन, विद्याभ्यासि कुले मूर्खा जायते बहुशस्तथा, सदाचारि कुले चापि दुराचारा भवति हि, कुले व्यापारदक्षाणा, सम्पत् नाश करा अपि, दरिद्राणा तथा यतो, श्रीनिकेता पता कदा, (१९०), प्रेष्याणा किंकराणा च, दक्षा, वीराश्च, पंडिता, राजवशाहताश्चापि सति शूद्रेभ्य उत्थिता। अत्यस्मत्रविपर एतत्सर्वं तु दृश्यते।"ऋषीणां च नदीना च जन्मस्थान न विद्यते" (म० भा०)—इति पौराणिकी गाथा साक्षाद्वेदानुभूयते। "जन्माद्यस्य यत", ब्रह्म, सर्वत्रीन तु, सर्वदा सर्वत्र व्यापक यस्मात्, त्रिगुण त्र तथैव हि संसृष्ट चापि सर्वत्र, तस्मात्सर्वत्र सभव सर्वेषामपि वर्णाना, सर्वेषु नृकुलेष्विति। वैदिक शाश्वत चापि सक्ति एतद् हि एव रूपक—एकस्यैव पितु वर्णा चत्वारो 'ब्राह्मण' सुता। कश्यपस्य रूपेद्रो हिरण्यकशिपु सुत, सर्व-

णामेव लोकानां मूर्द्धा वृद्धजरोऽसुरः ; हिरण्यकशिपोश्चापि प्रह्लादः साधुपूजितः, पूर्ण-न्दुविमला कीर्तिर्यस्यास्ति अद्यापि विस्तृता ; पुलस्त्यस्य ऋषेः पौत्रो रावणो लोक-रावणः ; भ्राता विभीषणोऽप्यस्य, कुबेरश्च धनाधिपः । वर्णधर्मस्य, योग्यत्वे, व्यभि-चारि एव कारणं दृश्यते जन्म ; नान्वेति ; नैव वा व्यतिरिच्यते ; न हि शूरस्य पुत्रोऽपि सर्वदा शूरः एव हि ; ( २०० ) ; न वार्त्ताकुशलस्यापि सुतोऽर्थकुशलः सदा ; न प्रेष्यस्य सदा पुत्रो विद्याः शिक्षितुं अक्षमः ; न च विद्वत्सुतो विद्वानेव सर्वत्र लभ्यते । स्वभावजा प्रवृत्तिर्या सैव योग्यत्व-कारणं ; अन्वयाद् व्यतिरेकाच्च सर्वदा सहचारि तत् ; तद्योग्यत्वमेवास्ति तत्तद्वर्णस्य कारणं ; "प्रत्यक्षावगमं, धर्म्यं, सुसुखं कर्तुं, अव्ययं ×, चातुर्वर्ण्यं मया सृष्टं गुण-कर्म-विभागशः, × कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः" । जन्मनि अपि तु कर्म एव हेतुः वेदविनिश्चितः ; न जन्म दृश्यते तद्वत् सद्-असत्-कर्म कारणं । "स्वकर्मणा सर्वसिद्धिं अमरत्वं लभेद् ध्रुवं, सुरत्वं च, मनुत्वं च, सुरेन्द्रत्वं लभेत् नरः, विष्णुत्वं च, शिवत्वं च, गणेशत्वं तथैव च" (दे०भा० स्कं० ९, अ० १७-१८-२०) । पर्यायशब्दाश्चत्वारः, "क्रतुः, कामो, वशो, ऽपि असुः" (ऐ०उप०), "क्रतुमयो हि पुरुषः", "यो यच्छ्रद्धः स एव सः", ( छा० उ०; गी० ) "यथाकामो हि पुरुषः, भवेत् तत्क्रतुरेव सः, तत्कर्म कुरुते चैव ; यत् कर्म करोत्यसौ अभिसम्पद्यते चायं तदेव" इति श्रुतिर्जगौ (बृ०उप०) । ( २१० ) ।

कर्मणा वर्णो, विवाहादि कथं भवेत् ?

(५) प्र० केचित् तत्र विशङ्कन्ते—विवाहादि कथं भवेत्, सहआहारो विहारो वा, वसनं चाऽसनं तथा, जन्मवर्णव्यवस्था चेत् समग्रा परिवर्त्स्यते ?

उ० उत्तरं सरलं तत्र—शीलव्यसनसाम्यतः ; अनुकूलं ययोः शीलं, सख्यादि व्यसनं तथा, तयोरेव मिथः पाणिग्रहणं तु प्रशस्यते ; "विशिष्टायाः विशिष्टेन संगमो गुणवान् भवेत्" (म०भा०श्लो०) ; परीक्षा जन्मपत्राणां ज्योतिषैर्यत्तु कार्यते कुलैः, सम्बन्धमिच्छद्भिः, इदमेवात्र कारणं, निश्चीयेत गुणानां यत् साम्यं हि वरकन्ययोः, सहधर्मचरौ स्यातां, मा द्वियातां च दम्पती, "अन्यो-ऽन्यस्याव्यभीचारो भवेद् आ-मरणान्तिकः" ( म० ), तदूर्ध्वं अपि वा सङ्गो "भवेज्जन्मनि जन्मनि" । एवं च शीलसाम्येन भोजने सख्यं दृश्यते, सात्त्वि-कानां, राजसानां, तामसानां तथैव च । 'ज़मीदारो' यदि पिता, पुत्रश्च एको-

ऽय 'डाक्टर', 'प्रोफ़ेसरो' द्वितीयश्च, तृतीयश्च 'वकील', 'दूकानदार' चतुर्थश्च, 'रिसालदार'श्च पंचम, पुत्रिका पञ्चाश्चापि, भिन्नप्रकृतिकास्तथा, अन्यो, ऽपत्यानि चामीषां पुत्राणां हि, महाकुले—किं सर्वेषां अथ एतेषां, यावद्प्रीति परस्पर, सहासन न सम्भाव्य, अशन वसन तथा ? (२२०) । कलहे खलु सम्प्राप्ते, येन केनापि हेतुना, विभिद्यन्ते विभज्यन्ते भ्रातरो अपि सहोदरा । 'प्रोफ़ेसरस्य' चान्यस्य भवेद् मृगादृश कुलं, महाशालस्य वा 'सार्थवाहस्य' 'नैगमस्य' वै, भिन्नप्रकृतिकैश्चापि विभिन्नव्यवसायकैः अपत्यैर्यदि पूर्णं, तत्, किं तयोर्कुलयोरपि न सम्भाव्योऽन्नसम्बन्धो, यौनसम्बन्ध एव वा ? पितुर् 'गोत्रं' त्यजत्येव, पत्युर्गृह्णाति चैव हि, कन्या पाणिग्रहे यद्वत्, 'वर्णं' चापि तथैव हि । कर्षकस्यापि कन्या वा, पुत्री वार्तिकस्य वा, सुताऽथवा सैनिकस्य, राज्ञा चेत् परिणीयते, भवत्येव हि सा राज्ञी, राजजीविकया यत जीविष्यति तु सा इदानीं, न त्वया पितु पुन । राज्ञाऽसने स्वयं तिष्ठेद्, अधिकाराश्च वर्तयेत्, 'राजा' एव वाच्यतेऽपि स्त्री, न तु 'राज्ञी', इति व्याकृति, आचार्यस्य तथा पत्नी तु 'आचार्याणी' इति कथ्यते, आचार्यं च स्वयं कृता स्त्री 'आचार्या' इत्येव वर्ण्यते । 'वर्णं' तु 'जीविका' सम्या, तस्य वै पर्ययो भवेत्, योषितायाः परिणये, स्वस्या गेहं पितु, यथा कुलं, वर्णमपि च, पाणिग्राहस्य सा विशेत्, (२३०), —एवं कृता चेन्मर्यादा, वर्णानां रक्षणं भवेत्, न भज्येत व्यवस्था एषा, न स्यादिउश सधता । 'वर्णं' तु 'जाति' मत्वैव, बहिष्कार क्रियेत चेत्, उपस्थते ऽतराश्चास्तु नित्यमेव भवा नया, "काम स्वभावयाम" सन्, न ज्ञात्यादिक ईक्षते, पतिर्पत्नीऽथवा चापि गमिष्यति समागता, न 'समाज' 'सम अज' स्यात्; नैव च अद्य अस्ति भारते । सर्वं न्यव्यवहारेषु, शौकव्यसनसाम्यत, सर्वेषामेव संसर्गो दृश्यते भारतेऽपि च, (पोटीलिक्कुपित किंतु कार्यं यद्वन्, न तु इद ), जन्मवर्णाऽग्रहेणापि प्रस्तानामिह सर्वश, भोजनोद्वाहयोरेव संसर्गो वर्ज्यते कुत ? "प्रत्यक्षं, चानुमानं च, शास्त्रं च, विविधाऽऽगमं, त्रय सुविदित कार्यं, धर्मशुद्धिमभीप्सता, आर्षं धर्मोपदेशं च, वेदशास्त्राविरोधिना, यस्तर्केणानुसंधत्ते, स धर्मं वेद, नेतर" ( म० ) । न प्रत्यक्ष प्रमाणं वा, न तथा चाऽनुमानिकं, नाऽऽगमीय असंदिग्ध, जन्मवर्णाय लभ्यते । कर्मवर्णस्य सिध्यर्थं लभ्यते अपि प्रथं बहु । यद्यस्ति सद्रश पुत्रो वर्णयोग्यतया पितु, नूनं स लभतां वर्णं; को निवारयितुं क्षम ? नास्ति चेत् सदृशो, ऽन्य हि मामोतु

स्वगुणोचित । (२४०) । पर्यालोच्य इह अन्यच्च समीचीन निदर्शनं—आदाने 'दत्त'पुत्रस्य, यदि प्राङ्नाभिवर्धनात्, गृह्येत सद्योजातस्तु, यस्मात् कस्मात् कुलाद् अपि, यत्किंचिज्जातिनाम्नो वा, यत्किंचिद्वर्णनामवात्, आदातुरेव वर्णोऽस्य शिशोरपि भविष्यति—इति वै 'धर्मदाक्षायणी' अनुज्ञा,रीतिरेव च प्रथिता, अनुमता चापि शिष्टे । तत्रास्ति कारणं, एवदेव, यद् अर्भस्य शिक्षा, दीक्षा च, संस्कृति, जीविका च तथा, अदातृकुलस्यैवानुसारिणीसाविनी, अस्य ततो 'वर्णो'ऽप्या दातुर्भविता ननु । ( २४९ , आदित २३२७ )श्लोका ।

---

ॐ ८ अध्याय

वर्ण निर्णय कथं ?

(६) प्र० गुण कोऽस्य, रुचि काऽस्य, प्रवृत्ति यीदृशी तथा, किंवर्णयोग्यश्चैव इति निर्णय क करिष्यति ?

उ० शिक्षाप्रभुस्तु बालाना सर्वथा शिक्षणे रत , प्रकृतीना च सर्वथा निरीक्षक परीक्षक , अध्यात्मविद् च, ज्योतिर्विद्, लक्षणानां नृणा च विद्, सामुद्रिक वेत्ता च, अप्यआयुर्वेदविद् एव च, द्रष्टा च व्यवहाराणां विविधानुभवैर्युत , निश्चेतु एतत् क्षम स्यात् , नान्यथा धृतिमाप्नुयात् । अन्नप्राशनसंस्कारे ऽप्यस्ति विहिता परीक्षणा—"कृतप्राशन उत्सङ्गात् धात्री बाल समुत्सृजेत् , कार्यं तस्य परिज्ञान जीविकायां , अनन्तर, देवताग्रे ऽथ विन्यस्य शिल्पभाण्डानि सर्वश शास्त्राणि चैव, शस्त्राणि, तत पश्येत् तु लक्षण , प्रथम यत् स्पृशेद् बाल , ततो भाण्ड स्वयं तदा, जीविका तस्य बालस्य तेनैव इति भविष्यति" ( पारस्कर गृह्य सूत्र, गदाधर भाष्य, कां० १, क० १९ ) "अग्रतोऽथ प्रविन्यस्य शिल्पभाण्डानि सर्वदा , शास्त्राणि चैव, वस्त्राणि तत पश्येत् तु लक्षण, प्रथम यत् स्पृशेद् बालो रिंगमाण स्वयं तदा, जीविका तस्य बालस्य तेनैव तु भविष्यति ( मार्कं० ), ( १० ), "तस्मिन् काले स्थापयेत् तत्पुरस्तात् वस्त्र,शस्त्र लेखनीं पुस्तक च, स्वर्णं, रौप्य, यच्च गृह्णाति बाल , तैं आजीवं तस्य वृत्ति प्रदिष्टा" ( अन्य ) । अन्नप्राशनसंस्कारे परीक्षा क्रियते कुत ? अबोधलोकक्रीडासु आस्था च कथं ईदृशी? शिर कपालसंधी तु, यावद् अस्था पिधीयते न 'ब्रह्मरन्ध्र',तावत्तु 'क्षेत्रज्ञ' सूक्ष्म देहत स्थूलदेहं धारयति, रक्षति पुन च बालक ; अन्नप्राशनानन्तर तु क्रमशो-

अस्य विवर्धते 'भिदा'-बुद्धिर्, 'मद्'-भावः, स्वच्छन्दा कर्मकर्तृता ; विधीयते ततश्चापि 'क्षेत्रज्ञो' ह्यधिकाधिकं ; काले गते प्रवृत्तिघ्ने, योगाभ्यासतपःश्रमैः, 'अहं-कारे' क्षयं याते, क्षेत्रज्ञस्य उदयः पुनः । सापेक्षं सर्वमेवैतन्, नैव ऐकान्तिकं, उच्यते । निष्कर्षस्तु अयमेवात्र प्रसक्तविषयान्वितः—जातस्य यद्यपि कश्चिद्, सवर्णतापरम्परा, यथैव ज्योतिर्विद्‌भिः सुविज्ञैः जन्मपत्रिका, अन्नप्राशनसंस्कारे परीक्षा या कृताऽपि सा, प्रकृतेः 'सूचिका'; किंतु प्रवृत्त्यैवास्ति 'निर्णयः'। (२०)। कीदृशी कस्य बालस्य प्रवृत्तिः, कीदृशो गुणः, रुचिश्च कीदृशी तस्य, तद्योग्यं कर्म कीदृशं, जीविकार्थं ?—अथ एतेषां प्रश्नानां तु विनिर्णयः कर्तुं अध्यापकैरेव द्रष्टव्यः, सम्यग्, गुरोः कुले ; ते गुपास्य ततो वर्णं निश्चिन्वंतु स्वभावजं, नैसर्गिकप्रवृत्तेश्चाप्यनुकूलं, रुचेरपि, दिने दिने समीक्ष्यैनं, शिक्षयित्वा यथोचितं । समावर्तनसंस्कारे स्वंतिमो वर्णनिर्णयः । द्वितीयं जन्म तत्रैव सिध्यति ब्रह्मचारिणः ; "तत्रास्य माता सावित्री, पिता त्वाचार्य उच्यते ; आचार्यस्तु अस्य" यं वर्णं "विधिवद्, वेदपारगः, उत्पा-दयति सावित्र्या" ( म० ), सोऽस्य तथ्योऽस्ति ; नापरः । 'आचार्यः' चेत् 'सूक्ष्म'-दर्शी 'ऋषिर्' 'दिव्याक्षवाँस्' तथा, शिष्यस्य 'सूक्ष्मदेहस्य' 'वर्णं' निर्णयन-क्षमः, तदा भवेत् क्षणेनैव विकासापातेन निर्णयः ; 'सात्त्विक'स्य तु भाः चांद्री, श्वेता, स्वर्णेन रंजिता ; 'राजस'स्य पुनी रक्ता, तथा चामीकरप्रदिता ; नीला दीप्तिः 'तामस'स्य, छादिता हेमरोचिषा ; अव्यक्तस्य तथा अव्यक्तो वर्णो नीहारवद् भवेद् । (२०) । "अजा सा एका लोहित-कृष्ण-शुक्ला बह्वीः प्रजाः सृजति इयं समंतात्" (सां०का०)। "तमो वा अस इदं एकं हि ; तत् परेण ईरितं पुनः विषमत्वं प्रयाति, एतद् रूपं तु रजसो भवेद् ; रजस् तद् ईरितं भूयो विषमत्वं प्रयाति हि, तस्मात् सम्प्रास्रवत् सत्त्वं ; विष्णुरंशस्तु सात्त्विकः ; ब्रह्माऽथ राजसोंऽशोऽसौ ; तामसो रुद्र उच्यते, स वा हि एकधा भूतोऽष्टधा एकादशधा तथा, द्वादश-असंख्य-धा चाऽस्य बहिरन्तस्तथैव च" ( मैत्रायणी उ० ) । शिक्षाव्यूहेन निर्णीते वर्णे, वृत्तिं अवाप्नुयात् सर्वः, समाजे स्थानं च स्वप्रकृत्युचितं सदा ; सर्वः स्वं स्वं धर्मकर्म प्रीत्या कुर्यात् समाहितः ; सम्यग् विभजनाच् च एषां, चतुर्षु अपि च, वर्णानां, कृत्यानां, सोपानानां च, वर्णेष्वप्याश्रमेषु च, सुव्यवस्था समाजस्य, सर्वेषां च सुखं, भवेत् । नानेकवृत्तिमान् कश्चिद्, वृत्तिहीनो न कश्चन ; नात्यन्तं धनवान् वापि, नात्यन्तं वापि निर्धनः ; जन्मनैवोच्चनीचादि दर्प-दैन्यादिकं न हि ; नाहंकार-विर-

स्कारो, न संघर्षो, न मत्सरः ; नैवेर्ष्या-कलहैर्नित्यं कलहनं प्रतिवेशिनां, न युद्धानि, न दुर्भिक्षं, नापि रोगभयं, भवेत् । (४०) । यतूनां दीक्षितत्वाच्च, द्विजत्वाद्, धर्म-प्रोपनात्, नियंत्रणाच्च च कामानां, इन्द्रियाणां च निग्रहात्, आश्रयात् 'मध्य'-पथेश्च, सर्वत्रापि 'अति'-वर्जनात्, चात्यंतं निष्प्रजः कोऽपि, न चैधति प्रजस्तथा । भूरिशो जनसम्बाधैर्, आहारार्थं विवादिभिः, नऽप्राप्नुवद्भिरलं भोज्यं, स्पर्धमानैः परस्परं, आक्रान्तायां यतो मह्यां, मात्स्यो न्यायः प्रवर्तते, तस्मात् सन्तानबाहुल्यं न इष्यते दूरदर्शिभिः । मितासु अपि प्रजासु, इष्टं द्विज भूयस्त्वं एव हि ; "यद्राष्ट्रं शूद्रभूयिष्ठं, नास्तिकआक्रान्तम्, अद्विजं, विनश्यति आशु तत्कृत्स्नं, दुर्भिक्ष-व्याधि-पीडितं" (म० ) ; 'अद्विजाः' खलु अनात्मज्ञाः, 'शूद्राः', ये ह्रस्व-दर्शिनः, न दीर्घदर्शिनो, विज्ञाः, कार्यकारणवेदिनः, अनुबन्धं विजानन्तः कर्मणां दूरगामिनं ; येषां नास्ति आयतेर्ज्ञानं, नास्ति आत्मा देहतोऽपरः, त एव 'नास्तिकाः' बालाः मूढाः नश्वरलोभिनः ; एतादृशानां बाहुल्यं यस्मिन् राष्ट्रे भवेत्, कथं न अमर्यादं भवेत्तत्र सर्वमेव अधरोत्तरं ? राष्ट्रे तु 'द्विज'-भूयिष्ठे मर्यादा सम्प्रवर्तते ; युद्धं 'द्विजानां' यत्, तत् तु स्वान्तः-करणे एव हि, प्रत्येकस्य मनुष्यस्य स्वस्वदुष्टा-शयैः सह ; (५०) आत्मान्येव द्विधा भक्ते उत्तम-अधम-भेदतः, अशुभेनैव मनसा युध्यतेऽस्य शुभं मनः ; निर्जित्यापि च तद्रूपः 'स्व'-राज्यं स्थापयत्यसौ, उत्तमः 'स्वः' सदा यस्मिन् अधमं 'स्वं' प्रशास्ति हि । "उद्धरेद् आत्मना-ऽऽत्मानं, नऽत्मानं अवसादयेत् ; आत्मैव हि आत्मनो बंधुर्आत्मैव रिपु-रात्मनः" ( गी० ) ; "मनस्तु द्विविधं प्रोक्तं, शुद्धं, चाशुद्धमेव च ; अशुद्धं कामसंकल्पं, शुद्धं कामविवर्जितं" (उ०) ; 'जितात्मनां' प्रशान्तानां निष्पक्षाणां मनीषिणां राज्यमेव 'स्व-राज्यं' स्यात् ; नहि एवानात्मवेदिनां । सत्स्वेवं शमवत्स्वस्तु समाजे यदि दुर्जनाः उद्भवन्त्येव, तदा क्षिप्रं निग्रहीष्यन्ति 'रक्षकाः', उच्छेत्स्यन्ति च दुर्जनान्, उपायैः उचितैरपि । स्वे स्वे कर्मणि अभिरताः एवं सर्वेऽपि मानवाः परस्परं सुमनसो भवेयुः प्रशमान्विताः, सहोदराणामिव वा, अपि एकदेहाङ्गवच्च वा, ज्ञानदास्, त्राणदाश्चापि, पणदाश्च, सहायदाः । (६०) ।

गुणोत्कर्षाय प्रोत्साहनं कथं ?

८ (७) प्र० ननं उक्तं हि गीतायां—"कार्यं कर्म समाचर, कर्मण्येवाधिकारस्ते, मा फलेषु कदाचन"(गी०) ; एतद्धे किन्तु विरलाः कृत्यबुद्ध्या एव केवलं, गुणोत्कृ-

र्षाय यद्यस्तु प्रोत्साहनमपेक्षते, उद्दीपनं भवेत् किन्तु गुणोत्कर्षप्रदर्शने ? शंकाऽन्याऽपि—कृष्णेन द्विधा उक्तं, मनुना तथा ; "कामात्मता न प्रशस्ता, न चैवेहास्त्यकामता", "निष्कामं कर्म सेव्यं" चेति, उभयं मनुनोच्यते (म) ; "न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ; × नैष्कर्म्यसिद्धिं परमां सन्यासेनाऽधिगच्छति" (गी० )—कृष्णोऽपि द्विविधं चैवमाह व्यामोहकारकं । "कर्मणश्चापि बोद्धव्यं, बोद्धव्यं च विकर्मणः अकर्मणश्च, बोद्धव्यं, गहना कर्मणो गतिः" ( गी० ) ।

उ० पारिभाषिकसंज्ञानां ज्ञानात् अत्र समन्वयः, विरोधपरिहारश्च, सर्वशंकानिरासकः ; कृष्णेन, मनुना चापि, सूचितं हि स्वयं यथा ; "सुखाभ्युदयिकं चैव, नैःश्रेयसिकमेव च, प्रवृत्तं च निवृत्तं च, द्विविधं कर्म वैदिकं ; इह चामुत्र वा 'काम्यं' 'प्रवृत्तं' कर्म कीर्त्यते ; 'निष्कामं ज्ञानपूर्वं तु 'निवृत्तं' उपदिश्यते ; (७०) ; प्रवृत्तं कर्म संसेव्य देवानां एति साम्यतां, निवृत्तं सेवमानस्तु भूतानि अत्येति पंच वै" (म०) । "न कर्मणां अनारम्भात् 'नैष्कर्म्यं' पुरुषोऽश्नुते ; × असक्तबुद्धिः सर्वत्र, जितात्मा, विगतस्पृहः, नैष्कर्म्यसिद्धिं परमां सन्यासेनाधिगच्छति ; 'काम्यानां' कर्मणां न्यासं 'सन्यासं' कवयो विदुः", ( न, यौवनेऽपि, बाल्येऽपि, कापायाऽदि-ग्रहणेन ; विना तपो, विना विद्यां, सदाचारं विनाऽपि [illegible] ; स्वार्थायैव, गृहस्थानां भारस्य बहु वर्धनं मिथ्या-सन्यासिनां एषां भरणाय कृतैव वै ) ; "सर्वकर्मफलत्यागं प्राहुः त्यागं विचक्षणाः" (गी०) ; कामस्याभिसंधिः स्यात्, आवृत्तं इदमेव च, यथा हि 'अविद्या', विद्यायाः न-अभावः किल केवलं, किंतु मायमयी भ्रान्तिः, मिथ्या-ज्ञानं, असद्-ग्रहः, "अतस्मिंस्तदपि तद्बुद्धिः", रज्जौ सर्पभ्रमो यथा ; यथा अ-मित्रं तु मित्रत्वाभावः एव न केवलं, किंतु शत्रुः ; यथा चापि दुःखं खलु अ-सुखं पुनः ; यथा अ-सितं तु कृष्णं स्यात्, सिताभावो न केवलं ; तथा 'नैष्काम्य'-'नैष्कर्म्ये' न शून्यं काम-कर्मणोः अभावमात्रं, किंतु एते विशिष्टे काम कर्मणी ; बन्ध-निर्मोचकं 'कर्म' नैष्कर्म्यं' इति भण्यते ; ऋणबंधविमुक्तेश्च 'कामो' 'नैष्काम्यं' उच्यते ; 'प्रवृत्तं' ऋणकृत् 'काम्यं', निष्कामं तु 'निवर्तकं' ; 'आरम्भकं' तु 'कर्म' स्यात्, निष्कर्म' तु 'समापकं'; 'बन्धकं' खलु 'कर्म' अस्ति, 'निष्कर्म' स्यात् तु मोचकं ; ऋणार्पणं तु 'निष्कर्म', ऋणआदानं तु 'कर्म' वै ; एवं कर्मफल-आसक्तिः निवृत्तेन, उपदिश्यते, निवृत्युन्मुखलोकाय; न प्रवृत्तजनाय तु । प्रवृत्ति-बुद्ध्या स्वं धर्मकर्मादि आचरतां, पुनः, युक्तानि

न्व

अपेक्षितान्येव 'सदा प्रोत्साहकानि हि फलरूपाणि —कीर्तिर्वा, सम्पत्तिर्वा, इंदि ताऽथवा । नून गुण'विशिष्टानां विशिष्ट पारितोषिकं । समाजकल्याणकरा, ना- न्ये, तत्र 'गुणा' स्मृता । "वित्त, बंधु, वय, कर्म, विद्या, भवति पञ्चमी, एतानि मानस्थानानि, गरीयो यद्यद् उत्तर, पञ्चानां, त्रिषु वर्णेषु, भूयांसि, गुण वन्ति च, यत्र स्यु सोऽत्र मानार्हः, शूद्रश्च दशमीं गत "(म०) । ( विद्या विप्रे, धन वैश्ये, क्षत्रे शस्त्रि कर्मणि, विज्ञपना सेवितारस्तु, वयो वन्द्य चतुर्षु अपि) । (९०) । "न हायनै, न पलितै, न वित्तेन न बन्धुभि, ऋषय चक्रिरे धर्मं, योऽनूचान स नो महान् । न तेन वृद्धो भवति येनास्य पलित शिर, यो वै युवा अपि अधीयान, त देवा स्थविर विदु । विप्राणां ज्ञानतो ज्यैष्ठ्य,क्षत्रियाणां तु वीर्यत, वैश्यानां धान्यधनत, शूद्राणां जन्मत एव च" ( म० ) । ज्ञानवृद्धोऽधिक सम्मानं, ईप्सिता अधिका तथा आदर, मानदर्थं अधिकं नित्यमर्हति, विनोद अधिक चापि कार्यं त्वेव सहायक । हृदयआप्यायकान् एतान् एव्या उत्साह वर्धनान्, प्रत्येकस्य स्वधर्मस्यआवश्यकान् मात्रयोचितान्, "स्वे स्वे कर्मण्यभिरत" सिद्धि सर्वोऽपि एष्यते । "स हिंसता साधु न शास्ति योऽधिप, हितान् न य संशृणुते स किं प्रभु", समानसम्माहकमेव नैव यत, विग्राहक प्रस्तुत, 'शास्त्र' मस्ति 'किं' । अभ्यस्यते इदानीं तु यानि शास्त्राणि संस्कृते, न उपकाराणि तानि इह व्यवहारे, मनाक् अपि,( आयुर्वेद ऋते, किंचिन्मात्र ज्योतिष तथा), प्रत्यु ताऽपि विहन्तृणि व्यवहारस्य वै भृता, शास्त्रस्य व्यवहारस्य पार्थक्यात् पतिनी उभी, (१००), उद्धाराय उभयोस्तस्माद् यत्न कार्या सुधीमता, शब्दानां उत्तमा र्थाना प्राचीनाना मितरैरपि, अध्यात्मदृष्ट्या तेषां च व्यवहारे प्रयोजने । स्व भावगुणनिर्दिष्टकर्मणा यदि वर्णता भवेत्, तदा मनुष्याणां जीवनस्यानुबन्धिन प्रश्ना: सर्वेऽपि अनायासं उत्तीर्येरन् सुखेन वै, प्रश्नैर्यैरेव कालेऽस्मिन् नृलोको व्याकु लीकृत —कथं शिक्षा, कथ रक्षा, कथ चोदरपूरण, कथ वस्त्र, कथं वास, कथ मन्म थतर्पण, चतसृणां एषणानां कथं चोचिततोषण, चतुर्णां पुरुषार्थानां सम्यक् सम्पा दन कथ, पति पत्नी पुत्र पुत्री पितृ-मात्रादय, तथा भ्रातृ स्वसृ मित्र शत्रु प्रतिस्पर्धि सहायका, भावा ये इंद्वा जीवसम्बन्धेरुद्भवति हि,सुखदु खमया, येषां द्वद्वाना अनुभूतये जीवो देह उपाधत्ते, तेषां अनुभव कथ अधिकेन सुखेन स्यात्, दु खे नाल्पतमेन, कथ विनोद, आमोद, क्रीडा, आनन्दन तथा,परस्पराभिद्रोहो,

द्रोहोऽल्पो अथवा पुनः ; (११०) । राज्ञां सहगामित्वं, न परस्परसंगरः, रण-कंडूः तथा शांतिः सर्वेषां च, कथं भवेत् ?—इत्याद्यनाम् अद्योपत्नां प्रश्नानाम्पूर्ण-मुत्तरं, 'कर्मणा वर्णः' इत्येतन्मंत्रेणेवाप्यत इति ध्रुवं । विशीर्णजीर्णसंस्कृतीनां भारतसंस्कृतिं उद्धर्तुं, प्रणयीकर्तुं, नान्यां जानीमहे वयं रीतिं, नीतिं, विहा-यैतां विशुद्धां 'कर्मवर्णतां' । कर्मणैव हि वर्णः स्यात् ; कर्माणि गुणतस्तथा ; गुणः स्वभावजश्चापि, शिक्षया परिष्कृतः । जन्मापि चेद् भवेद् अस्य ब्राह्मणस्यैव कुले, भूयः स्यात् कर्मणः पुष्टिः, सौन्दर्यस्येव मंडनैः । उभयं जन्मकर्मभ्यां, कर्मणैव [illegible] मध्यमं, नास्त्येव केवलं जात्या, वर्णत्वं, इति स्मृतं ।

यदि एवं उत्तमा कर्मवर्णव्यवस्था, तर्हि कथं भ्रष्टा ?

(८) प्र० प्रश्नोऽयं संभवत्यत्र—सुव्यवस्था यदि ईदृशी कर्मवर्णात्मिका पूर्वं, कस्माद् भ्रष्टा ? कथं न सा रक्षितुं स्वं समर्थाऽभूत्, एवं सुक्षिमती सती ?

उ० न हि दीपस्य भवेद् स्यात् तमः, अप्युत्तमोत्तमं, विना उपचारिहस्तेन, रोगिणस्तु सुखं स्वयं । जनतायाः व्यवस्था एवं, अपि सुष्ठुतमा सती, उद्युक्तस्य प्रयो-क्तृत्वं महाक्षमस्य काङ्क्षति । (१२०) । ज्ञानाङ्गे च, क्रियाङ्गे च, मस्तके, भुजयोरपि, कल्या-णसाधनं सर्वं शरीरस्याश्रितं सदा ; प्रथमं रक्षणं चाभ्यां उदर-ऊर्वोर्विधीयते । उत्त-माङ्गे हि विभ्रष्टे, नष्टं सर्वं हि तरक्षणं ; मस्तके विकृते, बाहू विकुर्वाते, तथोदरं न स्वकार्यं करोति, एवं पादौ उन्मार्गं व्रजतः । "प्रज्ञापराधाद् हि अहितान् अर्थान् पंच निषेवते" (चरक०), ततो बहुविधाः रोगाः पीडयन्त्येनं अंजसा । 'मूला' तु भवरोगस्य, 'तूला' क्षुद्ररुजां तथा, 'अ-विद्यैव' हि रोगाणां सर्वेषां मूलं आदिमं, सा सा विद्या च रोगाणां सर्वेषां एव भेषजं । प्रज्ञा दोषेण आयान्ते आधयो व्याध-यस्तथा । प्रज्ञा-प्रसादेन एवापि नाश्यन्तेऽपि च तेऽचिरात् । इत्थंचिकित्स्या व्या-धीनां, आधीनां आत्मविद्यया ; द्रव्याणां भेषजानां च विद्यया एवावगम्यते । "ना-मंत्रं अक्षरं किंचित्, न [illegible] द्रव्यं अनौषधं, नायोग्यः पुरुषः कश्चित्, प्रयोक्तैव तु दुर्लभः" (सत्य सु०) । माहात्म्यमन्यभावेषु तपो-विद्या-विलोपनात्, धर्मैरस्वी-जसो ह्रासात्, भूमिपानां अयत्नात्, निर्मर्यादतया राज्ञां, स्वाच्छंद्यात्, पाप-कृत्तया, (१२०), "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" (गी० ), इति न्यायेन सर्वत्र पापबुद्धिप्रविस्तरात्, समग्रं भारतं [illegible] वर्तमानां दशां अगात् । "ब्राह्मणं तु स्वकर्मस्थं दृष्ट्वा क्षिप्यति चेतरे, चान्यथा, क्षत्रियाद्यास्तु, विप्रस्तस्मात्स्वधर्मचरेत्"

(शु०नी०) , "क्षत्रस्याति प्रवृद्धस्य, ब्राह्मणान् प्रति सर्वशः ,ब्रह्मैव संनियन्तृ स्यात्, क्षत्र हि ब्रह्मसम्भव" (म०) । ज्ञानेन एव उत्पादितं शस्त्र, ज्ञानेन एव नियम्यते , निर्मातुं शक्यते यद्वत्,तद्वत् भक्तुं च शक्यते 'ब्रह्म'आदेशात्,प्रजाभिस्तु 'मनुं 'राजा धृत कृत , प्रत्येकजातौ, वृद्धानां श्रद्धेयाना कदम्बक, 'ब्रह्म' इति,बहुमान्यत्वाद्, 'वृहत्त्वाच्' च एव उच्यते,तत्प्रदेशाद् यथा योग्य राजत्वे तु नियोज्यते तथा एवा-स्यआज्ञया अयोग्य राजत्वाद् हि वियोज्यते।यद्वत्वो ढिला पूर्वं भूपा उत्पथगामिनं हताश्च धर्महन्तार प्रजापीडनकारिणं , ज्वलनैरिव तेजोभि तपसां, परमर्षिभि । "वेनो विनष्टोऽविनयात्, नहुषश्च नराधिप , सुदा पैजवनश्चापि, सुमुखो, निमि-रेव च,× ( दण्डक , कार्तवीर्यश्च, समग्र यादव कुल, ) । (१४०) । स्ववीर्याद् राजवीर्याच् च स्ववीर्यं बलवत्तर, तस्मात्स्वेनैव वीर्येण निगृह्णीयाद् अरीन् द्विज । ×यद् दुस्तरं, यद् दुरापं, यद् दुर्गं, यच् च दुष्कर, सर्वं तत् तपसा साध्य, तपो हि दुरतिक्रम ; ×तपो विद्या च विप्रस्य नि श्रेयसकर पर, तपसा किल्बिषं हन्ति, विद्ययाऽमृतमश्नुते" (म०) । "न बल, क्षत्रियस्याहु , ब्राह्मणो बलवत्तर ×धिग्बल क्षत्रियबलं, ब्रह्मतेजोबल बलं , एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे" ( वा० रामा०, बा० का०, अ० ५५ ५६ ), एव तु निर्विवेद असौ, वसिष्ठेन पराजित , पे विश्वमपि सक्रुद्ध मित्रं कर्तुं न नाशकत् , उग्रतेजा , महाराज , प्रवीर , क्षत्रियर्षभ सर्वथा अस्त्रशस्त्राणां निधानं परम च य , विश्वा-मित्रो हि, य पश्चात्, तपस्तप्त्वा महत्तमं, विश्वस्य मित्रं, ब्रह्मर्षि , गायत्रीमन्त्र कृत् तथा, बभूव या महादेवीं सावित्री वेदमातरं, सर्वशक्तिसमाहर्त्रीं,तप सार-स्वरूपिणीं, सर्वज्ञानप्रसविनीं, 'द्विजा ' सर्वे उपासते । प्राङ्गिधात्वद् एव एतान् भूपतींस्तु महर्षय , तप कृशा , वृहद्भास , पर्यैक्षन्त पुन पुन —( १५० )— 'अस्ति ते विषये कश्चिच् चोरो, मिथ्याप्रवञ्चक , व्यभिचारी, दुराचारी, स्वधर्मवि मुखोऽथवा, अशिक्षितो, दरिद्रो वा, मद्यालु , परपीडक , विद्या रूप धन ऐश्वर्य बल अभिजन दर्पित ?' 'नास्तीदृशोऽस्मद्‌विषये'—नृपा उदतरंस्तथा । नेदृशा ब्राह्मणा सन्ति, क्षत्रिया सन्ति नेदृशा , चारित्र्यनाशादुभयो भारता निरय गता । "अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात् , रक्षार्थं अस्य सर्वस्य राजानं असृजत् प्रभु " ( म० ), राजोत्पत्तिसमाख्याने व्यस्तमेतत्तु भारते । "धर्माय राजा भवति, न कामकरणाय तु यथा हि गर्भिणी हित्वा स्व प्रियं मनसो-

स्तुतं, गर्भस्य हितं आचरेत्, तथा राज्ञाऽप्यसंशयं वर्तितव्यं, कुरुश्रेष्ठ !, सदा धर्मानुवर्तिना, स्वं प्रियं तु परित्यज्य, यद्यल्लोकहितं भवेत्" ( म० भा० )। अभिषेके नृपाणां च, प्रतिज्ञा तैः अकार्यत—"प्रतिज्ञां चाधिरोहस्व, मनसा कर्मणा गिरा, पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत्, यश्चात्र धर्म इत्युक्तो, दण्डनीतिव्यपाश्रयः, तं अशंकः करिष्यामि, स्ववशो न कदाचन" (म० भा०) ; (१६०) ; 'भौमं ब्रह्म' इति शब्दाभ्यां अत्र हि अर्थोऽयम् इष्यते—ब्रह्म-विद्या च, सर्वा च भूगता ब्रह्मणः प्रजा । "ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपाले नियोजितः, स कथं तद् गृहे द्वास्थः सभार्यं भोक्तुमर्हति ? अहो अधर्मः पालानां पीडां बलिभुजां इव, स्वामिनि अथ यद् दासानां, द्वारपानां शुनामिव" ( भा० ) । भ्रष्टेषु ब्राह्मणेष्वेवं, विभ्रष्टाः क्षत्रियाः अपि, सर्वा वर्णव्यवस्था च सर्वथा व्यत्यस्ता गता । "दमनाद् दंडनाद् दंडः, नयनान्नीतिरुच्यते" (म०भा०), दंडस्य सम्प्रणेतॄणां, प्रणेतॄणां नयस्य च, भ्रंशाद्, अभावाच्चैवापि, दुर्नयो भ्रंश एव जायते । राज्ञाणां इतिहासेषु बहु एतस्य निदर्शनं—ब्रह्म क्षत्र-विश्लेषाद् यत् जायते घोरविप्लवः । विलासभोगसक्तानां, विभ्राणां अतिलोभिनां, इच्छतां धनं ऐश्वर्यं, विप्रलम्भनदम्भनैः, शासदानां तथा राज्ञां प्रजा-रक्षण-भक्षणैः, धर्मविक्रयिणां पापैः, भृशं उद्वेजिताः जनाः, संहत्य, बहवः, क्रुद्धाः, उभौ एतौ व्यनाशयन् । ईसा-शब्दाब्दशतके फ्रांसदेशे तथाऽभवत् ; तथा ईसा-विंशत्यब्दे रूसे रूमेऽपि चाभवत् । (१७०) । विप्राः कोष-पुर-ग्राम-राष्ट्रीनाथं चापि अधारयन् , 'राजपद'-सहितं 'जगद्गुरु'-पदं तथा, 'पोप'अभिधानाश्च ऐकन्त राजवत् शासितुं धराम्. मायापन्नाः ततस् तेषां कलहाः राजभिः सह, प्रजाविनाशिनश्चापि, राष्ट्रविप्लवकारिणः, यूरोपदेशस्य इतिहासे, युगे 'मध्यम' नामके, ('मिड्ल एजेज़'); जमदग्नेः, तत्सुतस्य परशुरामस्य चापि वै, कार्तवीर्यार्जुनेनाथ यथाऽभूद् बहुघातिकः; यथा एव 'आर्षीयकं' युद्धं विश्वामित्रवसिष्ठयोः । कल्पोर्द् महर्षि हिल्डब्रांड राज्ञोर्द् लोभस्य व्यपदेश । कदाचिद् भजयन् विप्राः, कदाचित् क्षत्रियाः, तथा, प्रजानां एव साहाय्यात्, अल्पदोषतराः हि ये अभूवंस् तस्मिंस् तु काले वै, लोकप्रियतराः सताः । नाटके मृच्छकटिके वर्णितो, राजविप्लवः कृतः प्रजाभिः कुपितैः ईदृशैरेव कारणैः । पुराण-एतिहाकाव्य नीति-स्मृति ग्रन्थेषु चैव हि, विप्लवानां ईदृशानां दृष्टान्ताः भूरि उदाहृताः । न एकस्मिन् एव वर्णेऽत्र व्याख्याः सर्वबलप्रभवताः; चत्वारो ये बलाः संति, ज्ञान

शस्त्र धन श्रमा , सम्यग् विभाजिता एव वर्णेषु तु चतुर्षु अपि, नून भवति लोकस्य सदा कल्याणकारका । (१८०)। नहि 'ब्राह्मणराज्य' वा केवल च अनिष्टकृत्, न च 'क्षत्रियराज्य' वा, 'वैश्यराज्य' न वा तथा, न चैव 'शूद्रराज्य' वा, प्रजाना स्यात् सुखावह, प्रत्युताकुलताकारि, राजधर्मविरोधि च, स्वच्छन्द हि यत तत् स्यात्, निर्मर्याद, असीमित कर्त्तव्य सर्ववर्णाना, अधिकारैश्च, सर्वत-मापित चापि अवच्छिन्न, सम्यग्दर्शिविभाजिते । कस्यापि एकस्य वर्णस्य प्रभुत्व, शस्त्रा विना समयाना, मिथो वर्णे स्वीकृताना तथाऽन्यैरै, ऐश्वर्यमदमत्त च भयस्य जनयिष्यति, तादृशस्य च राजत्व घोरानर्थकर सदा । तस्मात् चतुर्णां वर्णाना 'मानव' राज्य एव हि, अनुमताना अन्योऽन्य सर्वेषा सुखकारक । "सर्वे क्षयान्ता निचया , पतनान्ता समुच्छ्रया , सयोगा विप्रयोगान्ता , मरणान्त च जीवितम्" (वा०रा०), "जातस्य हि ध्रुवो मृत्युर्, ध्रुव जन्म मृतस्य च" ( गी० ), सृतिस्तु मृत्युजन्मान्ता, सयोगान्त वियोगान्त, नरोच्छ्रयान्ताः पाताश्च, सचयान्ता क्षयास्तथा । प्रकृतेर्विकृतिर्नित्य, विकृते प्रकृतिस्तथा, सर्वेष्वपि विभागेषु ससारस्य हि दृश्यते । (१९०)। सामान्य तु विशेषेषु, सत्स्वेव तेऽपि तथैव हि, निलीयते, विलीयते, उत्पद्यते च नित्यदा, नित्य परिणमन्तो वै विभिद्यन्ते ह्यभीक्ष्णश , जातिर्व्यक्तिषु बह्वीषु, जातौ च व्यक्तयस्तथा, अनेकाश्च तथा एकस्मिन्, एकोऽनेकेषु वै तथा, साम्राज्ये यान्ति राज्यानि, तच्च राज्येषु भिद्यते, लघवोऽपि महति एव, महान् लघुषु चैव हि, जीवात्मसु च सर्वात्मा, जीवाश्च परमात्मनि, सतत हि अनवरत, स्त्यायते च द्रवति च, सान्द्रीभवति एकतस्तु, तरलाश्चान्यत स्तथा, सलिल बाष्पमेघेषु, वारिवाहा जले पुन , घने हिमे जल, तच्च हिम तु तरले जले, सृष्टिश्चापि, लयश्चापि, नित्यमेव प्रवर्त्तते, द्वन्द्वन्यायफलीभूत जगतो रूपमेव तत् , व्यजनेषु अखिलेष्वेव प्रकृतेर्नियमो हि स , तस्माद् विक्रियते शुद्धा चातुर्वर्ण्यव्यवस्थिति , कालात् पुन सस्क्रियते तथा स्म तत्त्वदर्शिभि ।

जातिब्राह्मण एव कस्मान् न नमस्य ?

( ९ ) प्र० सगर्व पृच्छ्यते कैश्चित् जातिब्राह्मणमानिभि —"उच्चै स्थिति र्जगति तिष्ठति धर्मतश्चेत्, यस्य क्षमा च वचनं श्रुतकेतरैश्चेत् , तेषा प्रकाशन दशा च महीसुरैश्चेत् , तानन्तरेण निपतेन् क नु सज्जनाम ?" ( २०० ) ।

उ० अस्त्युत्तरं सादरम्, किंतु मवादकारक—धर्मस्थितिर्जगति सिध्यति दृढव्रतैश्चेत्, तस्य प्रणीतिरपि चातुर्वर्ण्यैः दैवैश्चेत्, तेषां प्रवक्तृता च महीश्वरैश्चेत्, तानन्तरेण निपतेन् क नु भवनाम? धर्मप्रवक्तुरस्य दृढवरस्य चापि प्राणस्थितिर्जगति सिध्यति चान्नतश्चेत्, अन्नानि चापि न महीकृषकैर्विना चेत्, तानन्तरेण निपतेन् क नु स प्रणाम? महा सुराश्च पतयो, ऽध्यश्च कर्षकाश्च, निष्पादर श्रमिव यज्ञहिता लुठ्युः महा, वहति, गमयति, विचारयति, प्रसारयति अयरजा, सकलाम् पराम् धं, सौजन्यत रत्नम् प्रजरान्, अपरान् वराँश्च स्वीकुर्वते, सुरर्ञ्जितप्रमिण सदैव, भार स्वयं च परक च समुद्वहति, तामन्तरेण निपतेम् क नु म प्रणाम? न पुस्तक, न च द्रव, न काञ्चन, न शारीर श्रम एवापि केवल, किं तु एतेषां सरसता हि सघ, सर्वे गुणा एतैर्वा पृथक्श्रयति। "महात्मा विहिता वर्णा, लोकतन्त्र अभीप्सता, यदि इह एकवर्णं स्यात् जगत्, सर्वं विनश्यति, यदि ते ब्राह्मणा न स्युः ज्ञान योगवहा सदा, उभयोर्लोकयोर, देवि!, स्थितिर्न स्यात् समास (अ?) त, (समाऽऽजना, मनुष्याणां, विना ज्ञानं न सिध्यति), यदि नि क्षत्रियो लोके, जगत् स्याद् अधरोत्तर, रक्षणात् क्षत्रियैरेव जगद् भवति शाश्वत, तथैव, देवि!, वैश्याश्च लोकयात्राहिता स्मृता, अन्ये तान् उपजीवति, प्रत्यक्षफलदा हि ते, यदि न स्युस्तु ते वैश्या, न भवेयुस्तथाऽपरे (२१०), तथैव शूद्रा विहिता सर्वधर्मप्रसाधका, शूद्राः हि यदि ते न स्यु, कर्मकर्ता न विद्यते, त्रय पूर्वे शूद्रमूला, सर्वे कर्मकरा स्मृता (म०भा०अनु०अ०२०८)। (२०२)। (२०२ श्लो०, आदित २५२९)।



## ६ अध्याय

विप्र दप प्रशंसा, स्त्रीनिन्दा च, मनुस्मृता कस्मात् न मान्या?

(१०) म० (क) "सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मण प्रभु, × बुद्धिमत्सु नरा श्रेष्ठा, नरेषु ब्राह्मणा स्मृता, × सर्वं स्व ब्राह्मणस्येद यत् किंचिज् जगतीगत, × (ख) राजा ऽग्निश्चापि, वायुश्च, सोऽर्क, सोम, स धर्मराट्, स कुबेर, स वरुण, स महेन्द्र प्रभावत, × महती देवता ह्येषा नररूपेण तिष्ठति, × (ग) दौःशील्याच्, चलचित्ताच् च, नैःस्नेह्याच् च स्वभावत, रक्षिता यत्नतोऽपीह भर्तृषु एता विकुर्वते, × शय्यासन, अलंकार, काम, क्रोध, अनार्जव, द्रोहभाव, कुचर्या

च, खीभ्यो मनुरकल्पयत्" × (म०); चचांसि ईदृंशि भूयांसि दृश्यंते ऽत्र मनु-स्मृतौ ; ब्राह्मणानां प्रशंसा दृष्टं, राज्ञां च महती तथा, नारीणां घोरनिन्दा च,यद् स्वयं मनुना कृता, उपेक्षणीयं एव एतत् सर्वं, मिथ्यावद् एव, किं ?

उ० नैवं, किंतु मनोरर्थः संडपाठैर्विलंप्यते; पूर्वापरेण सम्पूर्णं पाठे, सोऽर्थोऽवगम्यते । सर्वत्र हेतुपूर्वे हि श्लाघा,गर्हा ऽथवा,कृता मनुना; न विना हेतुं,'जाति'-मात्रेण केवलं,प्रत्युताऽनेन निन्दैव 'जाति'-मात्रस्य भाषिता; स्वधर्मकर्मानुष्ठातुः एव तेन कृता स्तुतिः; (१०); अननुष्ठातुरेषापि गर्हणं च कृत भूर्दा, कर्मणः श्रेष्ठ्यं एव एवं पुनः ख्यातं ; न जन्मनः । (क) "उत्तमांगोद्भवात्, ज्यैष्ठ्याद् ब्रह्मणश्चैव, धारणात् ; × स हि धर्मार्थमुत्पन्नो धर्मकोशस्य गुप्तये × आनृशंस्याद् ब्राह्मणस्य भुंजते हि इतरे जनाः यो ज्येष्ठो ज्येष्ठवृत्तिः स्यात् , मातेव स पितेव सः"; × (म०) यत्र 'उत्तमांगं' न ज्ञानं,तत्र ब्राह्मण्यमस्ति किं ? न ज्यैष्ठ्यं,नैव वा 'ब्रह्म', यस्मिन्, स ब्राह्मणः कथं ? धर्मगुप्ति-आनृशंस्याभ्यां विना स्यात् किं नु विप्रता ? "यथा काष्ठमयो हस्ती, यथा चर्ममयो मृगः, तथा विप्रोऽनधीयानः, त्रयस्ते नाम बिभ्रति" × (म०), महार्घं जातु नाम अपि न एष 'ब्राह्मणं' अर्हति । "बिडाल-बक-वृत्तीनां, जातिमात्रोपजीविनां", ब्राह्मण-ब्रुव-जीवानां,बहुशो गर्हणं कृतं मनुना यत् स्वयं, तत्तु पूर्वमेवास्मदुदाहृतं । (ख) जुगुप्सा दुष्टराजानां उक्ता एवं, दंडधृता तथा । "रक्षार्थमस्य सर्वस्य राजानं असृजत् प्रभुः" ( म० ); "अहं वो रक्षिता इत्युक्त्वा, यो न रक्षति भूमिपः, स संहत्य निहंतव्यः श्वा इव सोन्मादः आतुरः. ( म० भा० अनु० अ० ९६ ) ; ( २० ) ; अधर्मदर्शी यो राजा बलादेव प्रवर्त्तते, असत्पापिष्ठसचिवो, वध्यो लोकस्य धर्महा ( ,,शां० अ० ९२ ); दुराचारान् यदा राजा प्रदुष्टान् न नियच्छति,तस्मादुद्विजते लोकः,सर्पाद्वेश्मगतादिव, तं प्रजाः नानु-वर्तंते, न सद् विप्राः, न साधवः ; ततः स क्षयमाप्नोति, तथा वध्यत्वमेव च × (,,अ० १२३) ;यो राजा लोभमोहेन किंचित्कुर्यादसांप्रतं,सर्वोपायैर्नियम्यः सः,यथा पापान्निवर्त्तते" ( ,, अ० २७३); "नृपार्थे सर्वभूतानां गोप्तारं धर्मं आत्मजं, ब्रह्म-( विज्ञान )-तेजोमयं, दंडं असृजत् पूर्वं ईश्वरः ; दंडो हि वस्तुतो राजा, स नेता, शासिता च सः, चतुर्वर्णाश्रमाणां च धर्माणां प्रतिभूः स्मृतः ; दंडः शास्ति प्रजाः सर्वाः, दंड एवाभिरक्षति, दंडः सुप्तेषु जागर्त्ति, दंडं धर्मं विदुर्बुधाः ; समीक्ष्य स धृतः सम्यक् , सर्वाः रंजयति प्रजाः, असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ;

(धार्त्तवे नामा विटेन् देशे, फ्रांसे लुई (१६) तिनामक, राजा नष्ट प्रजाकोपात्, समीप तद्विदर्शन), यदि न प्रणयेद् राजा दण्ड दण्ड्येषु अतन्द्रित, शूले मत्स्यानिव अपक्ष्यन् दुर्बलान् बलवत्तरा ; सर्वो दण्डजितो लोको, दुर्लभो हि शुचिर्नर, दण्डस्य हि भयात् सर्वं जगद् धर्मे प्रतिष्ठते, (३०), दुष्येयु सर्ववर्णाश्च, भिद्येरन् सर्वसेतव, सर्व लोकप्रकोपश्च भवेद् दण्डस्य विभ्रमात्, तस्याहु सम्प्रणेतार राजान सत्यवादिन, समीक्ष्यकारिण, प्राज्ञ धर्म-काम र्थ कोविद, त राजा प्रणयन् सम्यक्, त्रिवर्गेणाभिवर्धते, कामात्मा विषम क्षुद्रो, दण्डेनैव निहन्यते, दण्डो हि सुमहत्तेजो, दुर्धरश्चाकृतात्मभि, धर्माद्विचलित हन्ति नृप एव सबान्धव, × सोऽसहायेन, मूढेन, लुब्धेन, अकृत बुद्धिना, न शक्यो न्यायतो नेतु, सक्तेन विषयेषु च, शुचिना, स सत्यधेन, यथा शास्त्रानुसारिणा, प्रणेतु शक्यते दण्ड, सुसहायेन, धीमता ×, मोहाद् राजा स्वराष्ट्र य कर्षयति अनवेक्षया, सोऽचिराद् भ्रश्यते राज्यात्, जीवितात् च, सबान्धव, शरीरकर्षणात् प्राणा क्षीयन्ते प्राणिना यथा, तथा राज्ञो अपि प्राणा क्षीयन्ते राष्ट्र-कर्षणात्"(म॰)। भगवान् ईदृशे श्लोके शास्ति नि सशय मनु — स एव ब्राह्मणो मान्य यस् सद्गुण विभूषित, स एव क्षत्रियो राजा धर्मात्मा रक्षकश्च य, समीक्ष्यकारी सद्वाग्मी प्राज्ञ सच्छास्त्रकोविद, (४०), न पुनर्ब्राह्मणमन्य क्षत्रियम्मन्य एव वा, गुणै सर्वैर्विहीनश्च, पापकर्मा च नित्यश, इमौ एतादृशौ दण्ड्यौ मनुना उक्तौ पुन पुन। "दश सूना सम चक्र, दश चक्र-समो ध्वज, दश ध्वज समो वेश, दश-वेश समो नृप"(म॰), 'चक्र' तु भैरवीचक्र अत्र, 'सद्' 'वधकीगृह', भोजनादि-प्रदानेन, 'पचनै' ऋणरूपिभि, विक्रीयते अथवा 'दक्षा' पण्यवद् यत्र, राक्षसै यत्र क्षीणा शरीराणि क्षीयते घोरपापिभि, रक्षेया तासा तथा जीवा पात्यते रौर-वेष्वपि, (न तैलिकस्य 'चक्र' तु तावत् भवति दोषवत्, व्याख्यातृभि, यथा कैश्चित् लिख्यतेऽनवधानत ), 'चक्रे'आत्मा तु हिंस्यते, 'सूनाया' पशवो यथा, ततोऽपि दारुणतरे प्रकारे पापभूमिते, भोजनार्थं शरीर स्व स्त्री विक्रीणाति यत्र वै, शरीर तथ क्रीणाति क्रूकधन् निर्दयो नर, स्व मातर न स्मरति, न स्वसार, न पुत्रिका, न क्षीतो न च सावित्री, ततो ऽन्तर नु किं भवेत् व्याकुला यत्र रुदति च क्षपति च, निष्ठुरे अहिता दुष्टे, स्वकामस्यैव तृप्तये, विनश्यति अचिराद् राष्ट्र तत् तु, कृपाहत यथा। (५०)। 'ध्वज पान् शौण्डिकमपि 'ध्वज'इदि मधवत्तर, यतो नरा मद्यमत्ता 'चक्राण' प्रविशन्ति हि; गृहत् कुत्र पद्यपानां, रूप कृत्स्नेन

वर्धित, अदृष्य सर्वभूताना, मद्येनैव विनाशिन । 'ध्वजा'श्च दारणा 'वेश्या', या नर्तनकलादिभि , न उपित्वा कृपणे 'चक्रे', 'भद्रान्' अपि विमोहयेत्, प्रलोभनैद् हावभावै , सुरामपि च पाययेत्, सुरापं चापि अकृत्येषु घोरेष्वपि निपातयेत, सचारयेत् च अथ राष्ट्रेऽखिले, देहे विष यथा । "दश सूनासहस्राणि यो वाहयति सौनिक , तेन तुल्य स्मृतो राजा लुब्धम उग्रप्रवर्तन " (म०), यतो, एषोऽसौ नृप 'सूना चक्र ध्वज' वतोऽपि च, तथैव 'वेशाऽजीवाम्य ", कर गृह्णाति निखप , गृहीत्वा च कर, तेषा पाप पुष्णाति भूरिश । ' यो राज्ञ. प्रतिगृह्णाति" तादृशाद् ब्राह्मणश्च स पाप पोषणात् "याति नरकान् एकविंशति"(म०),राजान च प्रजाश्चापि निपातयति तत्र स । उदार आशयो ह्येष नूनं भगवतो मनो , न जाति प्रक्षत्राणा भगवान् अनुमोदक । ( ६० )। "ब्रह्मबन्धुर्न हतव्य सर्वपापेष्वपि स्थित "—इत्यस्मिन् विषये पूर्वं विस्तरेण विचारित, स्थले अस्मिं तथाऽप्यत्र येषा अविहता गति , देववद् विहरन्तश्च, प्रहरन्तश्च दैत्यवत्, यथेष्ट विभवन्तश्च सर्वत्र प्रभवति ये,अन्याय आचरतो अपि दुर्बलेषु पुन पुन , तेऽपि नैतादृश यत्तु ईहन्ते खलु निखप—'न जातु हन्याद् अप्रेज सर्वपापेष्वपि स्थित, अप्रेजो नायमतत्य सद् असद् वा समाचरन्' । यैर् इन्द्रविद्युद् आच्छिन्ना, वायुर्वीजनक कृत , कृतो कृशानु-धरणी दासी दीप प्रपा धारी, अगुलि अग्र इङ्गितेन एव किंकरा धर्मकारिण , समर्था सर्वथा कर्तुं, अकर्तुं, वे, तथाऽन्यथा, न ईदृश तेऽपि कल्पते, भ्रष्ट विदधते न वा, तस्मिन् दण्डविधाने, यद्, विहित तैं , प्रथाते समस्ते भारते प्रप, व्यवधूय अभिभूय च स्मृत्यादीनि पुराणानि शास्त्राणि निखिलानि च । सुन्दोपसुन्दन्यायेन क्षय यास्यति तेऽपि यत्, तत् फल खलु पापाना तेषा , नास्मद्गुणै कृत । यत्र बन्धुर्येयाहुत्य दर्पोद्रेको, विस्रम्भन वैर परस्पर, नाशो ऽपद्य तत्र प्रवर्तते । (७०) । दृश्यते चेदृशा भावा बुद्धिविद्यावता अपि , दर्शिता तत् पुराणेषु सम्यग्दर्शिमहर्षिभि ,देवासुराणा सग्रामे , विश्वामित्रवसिष्ठयो ,रामरावणयोश्चापि कुरुपाण्डवयोस्तथा, ' ज्ञानिनामपि चेतासि देवी भगवती हि सा, बलाद् आकृष्य मोहाय महामाया प्रयच्छति" ( दु०स० ), सद्बुद्धिर् अथ विद्या च दुष्प्रकृत्या विपर्यते, "प्रकृतिं यान्ति भूतानि, निग्रह किं करिष्यति" (गी०), अत एव हि वेदऽज्ञा, 'विद्यो दुष्टाय मा दिश', ' विद्या ह वै ब्राह्मण आजगाम, गोपाय मा शेवधिस् तेऽह अस्मि, असूयकाय, अनृजवे, अयताय, मा मा दा , वीर्यवती तथा

स्याम्" (नि०)। "दुग्धपानं भुजगानां केवलं विषवर्धनं", शास्त्रदानं च दुष्टेभ्यः केवलं पापवर्धनं, 'मौक्तिकं' चापि 'विज्ञानं', 'प्रज्ञानेन' पाथितं, परस्परवधायैव पापिभिस्तु प्रयुज्यते, यथा पाश्चात्यजातीनां दुर्दान्तानां दशाऽद्य वै। हिन्दवः 'शास्त्र शास्त्रे'ति 'वेद वेदेति' रावेण्य, न वेद शास्त्र मर्मज्ञा रहस्यानां न वेदिनः, असत्याग्रहग्रस्ता, त्रस्ता सन्त्रस्ता भृशं, परपादतले क्षिप्ता, दासा स्वेषु (भारतीयजनेषु) तथाऽप्यहो, दम्भग्रस्तोऽनिशं भीता, नीता मूढैर् ह्यधोगतिं, दग्ध प्रत्ययविश्व, "सर्वपापेभ्यवरिष्यते"। (८०)। जन्मनैव हि वर्णस्य सर्वं विनिश्चितं स्थिरं। एकजेभ्यो द्विजातीनां दृढसीमान्तरं कृतं मनुना—पूर्वं एव एतत् तद्वा प्रयत्नेन दर्शितं। निदर्शनं च पर्याप्तं दृश्यतां ऐतिहासिकं—रामो नाम महाराजः, मर्यादापुरुषः, एवं ब्राह्मणं निजघानैव रावणं 'कर्म राक्षसं', पुलस्त्यस्य ऋषेः पौत्रं, महाविद्याधरं तथा, शास्त्राणां च समस्तानां कोविदं, भ्रातुर्मेन्द्रं, मारीचं, ताडकां नारीं, भ्रातरौ खरदूषणौ, तथा त्रिशिरसं चापि, कुम्भकर्णं महाबलं, "यस्य प्रमाणाद् अधिकं प्रमाणं नैव विद्यते", रावणिं मेघनादं च, लक्ष्मणेन सहायवान्, ब्रह्म रक्षःकुलं दुष्टं समग्रं चापि अघातयत्, सीतां हिंसितुं उद्युक्ता, स्वसारं रावणस्य च, निशाचरीं शूर्पणखां, लक्ष्मणेन तु अदण्डयत्, सैन्यमार्गं अददत्, समुद्रं देवं अपि अपां, भयवान् सन्तु मन्थनं, रज्जवा इव हि अपराधिनं, वसिष्ठं, वामदेवं च, विश्वामित्रं महामुनिं, भरद्वाजं, तथाऽत्रिं चापि अनसूयां पतिव्रतां, शरभङ्गं, अगस्त्यं च, महर्षीन् प्रणनाम च, (९०), "यदा, हते दशग्रीवे, विललाप विभीषणः, (विगत भीषणस्य हि यस्माद्, धर्मव्यपाश्रयात्)—"आदित्यः पतितो भूमौ, मग्नस्तमसि चन्द्रमाः, अस्मिन् निपतिते भूमौ वीरे मम सहोदरे, × × × योऽयं विमर्दं न भग्नपूर्वः, सुरैः समेतैः सह वासवेन, भवतः आसाद्य रणे स भग्नो, वेला इवासाद्य यथा समुद्रः, अनेन दत्तानि महाधनानि, भुक्ताश्च भोगाः, निभृताश्च भृत्याः, रत्नानि मित्रेषु समर्पितानि, वैराणि अमित्रेषु च यापितानि, एषोऽ(श्मा)हिताग्निश्च, महातपाश्च, वेदान्तगः, कर्मसु चाग्र्यवीर्यः, एतस्य यत् प्रेतगतस्य कृत्यं, तत्कर्तुं इच्छामि, तव प्रसादात्;—तदाऽस्य वाक्यैः करुणैः, महात्मा, सम्बोधितः साधु विभीषणेन, आज्ञापयामास, नरेन्द्रसूनुः, स्वर्गीयं आधानं, अदीनसत्त्वः × × रामः शोकसमाविष्टः इत्युवाच विभीषणं—नायं विनष्टो निश्चेष्टः, समरे चण्डविक्रमः, अत्युन्नतमहोत्साहः, पतितोऽयं अशङ्कितः, न पूर्वं

धिनष्टाः शोच्यन्ते, क्षत्र धर्मं अवस्थिता, वृद्धिं आशासमाना ये निपतन्ति रणाजिरे × × × इय हि पूर्वैः संदिष्टा गतिः क्षत्रिय सम्मता; क्षत्रियो, निहत संख्ये, न शोच्य इति निश्चय , (१००), तद् एव निश्चय दृष्ट्वा, ताव आस्थाय, विज्वर , यद् इहानन्तरं कार्यं तदस्य तद् अनुचिन्तय, × × × शतक्रतुसुरैर्देवै. श्रूयते न पराजित , महात्मा बलसम्पन्नो रावणो लोकरावण , मरणान्तानि वैराणि, निर्वृत्त न प्रयोजन, क्रियता अस्य संस्कारो, ममापि एव यथा तव ' ” (वा०रा०ल०)। जन्मतो'ब्राह्मण चापि, कर्मणा'क्षत्रिय' स्तु, स्त्र पुनर् निश्चिनुते रावणं, लक्ष्मण प्रभ । न जन्म क्षत्रिया चापि चक्रु राम महायता , सहाया अभवन्नस्य 'क्षत्रिया ' ऋक्ष वानरा । वालिन कपिराज च, भ्रातरि अन्यायकारिण, कृतसख्य रावणेन, न्यवधीद् एव पापिन, शिश्लेषापि हनूमन्त, सुग्रीव च, विवेकत । वाश्यप च हिरण्याक्ष 'जाति ब्राह्मण'मेव च, तथा हिरण्यकशिपुं, विष्णुर्व्यापादयत् स्वय । कृष्णश्च बलरामश्च मैन्द द्विविद वानरौ जघ्नतुर्मथुरायां वै, दुर्बलाना तु भीषणौ, दुष्ट गोरूपश्च चापि 'धेनुकासुर'नामकं, 'गो ब्राह्मण' हितौ सन्तौ, 'गो-वर्धन' मखकरौ । (११०)। गो ब्राह्मणाना पूजा यद् हिन्दुस्य उपदिश्यते, तत्पादु विवेकाद् अर्थस्तु तस्याश्च व्यासितो बुधा , 'गावस्तु' मातृ वात्सल्य, 'ब्राह्मणो' ज्ञानसचय , एतौ यथैव पूज्येते तमुद्देशत्र तु उच्छ्रय , न मिथ्या ब्राह्मणाना वा पशूना एव पूजनं । "दुष्टाना निग्रहश्चापि शिष्टाना चापि सग्रह ", इत्येष राज्ञो धर्मोऽस्ति, गोषु वा, ब्राह्मणेषु वा, नृषु, स्त्रीषु अपि, तिर्यक्षु, रक्षःसु अपि, असुरेष्वपि । विष्णुना भावितो राज्य प्रह्लादश्च, विभीषण , पिता विशस्तस्तु एकस्य, भ्रातरौ अपरस्य च । ' पिता, ऽचार्य, सुहृन् माता, भार्या, पुत्र पुरोहित , न अदण्ड्यो नाम राज्ञोऽस्ति, यः स्वधर्मे न तिष्ठति' (म०) । ' किं अनडुहा यो न वहेत्, कोऽर्थो राज्ञाऽपि अरक्षता ? यथा दारुमयो हस्ती, यथा क्षेत्र यथा ऊषर, तथा विप्रोऽनधीयानो, राजा यश्च न रक्षिता, नित्य यस्तु सतो रक्षेद्, असतश्च निवारयेत् , स एव राजा कर्तव्य , तेन सर्वमिद धृत' (म० भा० शां०) । 'कर्तव्य ' इति शब्देन,प्रजानां दर्शिता स्फुट शक्तिश्चापि, अधिकारश्च, राजत्वे विनियोजने धीरवीरनरस्यैव, भूषित स्य च सद्गुणै । (१२०)। आयर्त्तं लोककल्याणं 'द्वि अन्तेषु' 'द्वि जे स्थिति, आत्मन शिक्षके चापि, रक्षके, पोषके तथा । ' माता, पिता, तथाऽचार्य , त एव

त्रयः आश्रमाः, त्रयो लोकाः, त्रयो वेदाः, त एवोक्तास्त्रयोऽग्नयः ; त्रिषु अप्रमाद्यन् एतेषु, त्रीन् लोकान् विजयेद्वरः” ( म० ) । आचार्यः शिक्षकस्तत्र, पितृस्थानी च रक्षकः, मातृस्थानी पोषकश्च, लोककल्याणकारकाः । दुर्विप्रो, दुर्नृपश्चापि, दुःस्त्री, यद्वत् तु निन्दिताः मनुना ; सन्-नृपः, तद्वत्, सती स्त्री, साधु-शिक्षकः, देवेभ्योऽप्यधिकं तेन बहुधाश्च प्रशंसिताः । (ग) “यत्र नार्यस्तु पूज्यंते रमन्ते तत्र देवताः, यत्रैतास्तु न पूज्यंते सर्वास्तत्र-अफलाः क्रियाः; × शोचंति जामयो यत्र विनश्यत्याशु तत्कुलं, न शोचंति तु यत्रैताः वर्धते तद्धि सर्वदा ; × तस्माद् एताः सदा पूज्याः भूषणाच्छादन-अशनैः, भूतिकामैर्नरैर्नित्यं सत्कारेषु उत्सवेषु च; × प्रजनार्थं महाभागाः पूजार्हाः गृहदीप्तयः ; स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ; उत्पादनं अपत्यस्य, जातस्य परिपालनं, प्रत्यहं लोकयात्रा च, प्रत्यक्षं स्त्रीनिबन्धनं,(१३०); अपत्यं, धर्मकार्याणि, शुश्रूषा, रतिरुत्तमा, दाराऽधीनः, तथा स्वर्गः पितृणां आत्मनश्च ह ; उपाध्यायान् दशाऽऽचार्यः, शत-आचार्यांस्तथा पिता, सहस्रं तु पितॄन् माता, गौरवेणातिरिच्यते” ( म० ) ; ब्राह्मणात्, क्षत्रियाच्चापि, शिक्षकाद्, रक्षकादपि, पोषकस्थानिनी माता, गुरुत्वेन विशिष्यते ; एवं आद्रियते अस्माभिः स्त्री मनुना ; न तु निन्दति । “द्वारं [illegible] एकं नरकस्य ? नारी”—इत्याद् उक्तं एतम् नर-केण येन चित् ; ‘द्वारं नरो वै नरकस्य चैकं’—नारी च वक्तुं न कथं समर्था ? ‘नरो’हि यः ‘कुत्सित’-भाव-पूर्णः, ततश्च यः ‘कुत्सित’-कर्म-कारी, स वै ‘नरः कुत्सितः’ एव बुधः जगौ: ‘अयं नर-को हि अस्ति साक्षात्’ । धीप्रबोधीविपीराणां भीष्मोऽप्याह पुनः पुनः—“एवं स्त्री नापराप्नोति, नर एवापराध्यति ; व्युच्चरंश्च महादोषं नरः एवापराध्यति ; नापराधोऽस्ति नारीणां, नरः एवापराध्यति ; सर्वकार्यैऽपराध्यत्वात् नापराध्यंति च अंगनाः” ( म० भा०, शां०, अ० २७२, चिरकारुपाख्याने ) । स्त्रियै पुमान्, यथा पुंसे स्त्री, संसृतिभयप्रदः ; तुल्यरूपेण चैवैतत् प्रोक्तं भागवते स्फुटं; निवृत्तिमार्गिणी नारी तथैव बिभियान्नरात्, यथा ‘निवर्त्तमानो’ ना (नरः) नार्याः भीयात् समंततः । (१४०) । “स्वभावः एष नारीणां नराणां (च) इह दूषणं (परस्परं); अतोऽर्थान् न प्रमाद्यंति प्रमदासु विपश्चितः”(म०); नारीणां च नराणां च दूषणं हि परस्परं ; उभौ अपि क्षोभयेते, सन्निधौ, इतरेतरं; सांख्येषु पूर्वैः संख्यातं, पुरुषप्रकृती यथा । इच्छाशक्त्यधिका नारी, ज्ञानशक्त्यधिकः पुमान् ; योषा तु मायबहुला, नरो बोधाधिकस्तया; प्रकृत्या निर्मितिस्तु एवं प्रत्यक्षं लक्ष्यते तयोः ; तत्र

च, उत्तरदायित्व भूयान् योषो हि यस्य वै , आनन्द , प्रमदो नाम, 'हर्षक' स' 'प्रमाद्येद्', इच्छापूर्त्या तयाऽऽनन्द , स्त्रीनाम 'प्रमदा' तथा ; नरं एव आदिशति अस्मात्, सर्वज्ञानमयो मनु , "कोमल स्त्रीति नामैव", स्त्रीषु तस्माद् दयामय , "प्रमाद्येयुर् नरा नैव प्रमदासु विपश्चित ", आत्मान च स्त्रिय चापि रक्षेयुर् दुष्कृतात् सदा , सतीना च तथा धर्म तेनप्रदिष्ट पुन पुन ,अन्यैर्महर्षिभिश्चापि, "शीलरक्षाप्रमन सदा" ! 'नरो' 'नारी' च शब्दौ तौ 'काम स्यैवात्र वाचकौ,

! वराहमिहिरोऽपि एव रवे 'बृहत्संहिता'ऽभिधे, ग्रन्थ तु भर्त्सयामास दुष्टान् नारी विनिन्दकान्, उदार प्रशशसापि सतीर्योषा सहृदयिनी —"ये ह्यङ्गनानां प्रवदन्ति दोषान् वैराग्यकूटेन, गुणान् विहाय, ते दुर्जना एव हि दुष्टभावा ; सद्भाववाक्यानि न तानि तेषां। प्रब्रूत सत्य,कतरोऽङ्गनानां दोषोऽस्ति यो नाऽऽचरितोऽस्ति पुम्भि ? धाष्ट्येन पुम्भि प्रमदा निरस्ता , गुणाऽधिकास्ता , मनुनाऽत्र चोक्त, 'सोमस्तासां अदात् शौच, गन्धर्वा शिक्षितां गिर, अग्निश्च सर्वभक्षित्व, तस्मान्निष्क ( सर्वा ) समा ( स्पषा ) स्त्रिय , ब्राह्मणा पादतो मेध्या , गावो मेध्यास्तु पृष्ठत , अजाऽश्वा मुखतो मेध्या , स्त्रियो मेध्यास्तु सर्वत , स्त्रिय पवित्र मतुल, नैता दुष्यन्त कर्हिचित्, मासि मासि रजो यासां दुष्कृतानि अपकर्षति , जामयो यानि गेहानि शपन्ति अप्रतिपूजिता , तानि कृत्याहतानीव, विनश्यति समन्तत ', मनोर्वाक्यानि उदाहृत्य, वराहमिहिर स्वय, स्व शब्दैरेव लिखति, विषये प्रस्तुते पुन—"जाया वा, जनयित्री वा सम्भव स्त्रीकृतो नृणां , हे कृतघ्ना ! तयोर् निन्दां कुर्वतां व कुत सुख ? दम्पत्योर् व्युत्क्रमे दोष सम शास्त्रे विनिश्चित , (१०) , नरा न तं अवेक्षन्ते , तेनात्र वर अङ्गना , अहो धार्ष्ट्य असाधूनां निन्दतां अनघा स्त्रिय मुष्णतां इव चौराणां 'तिष्ठ चौर !' इति जल्पतां!"। चत्वारोऽनुष्टुभ ,पूर्वं ,या 'मनोर्'इति उदाहृता, एका आसां आलमा इदानीं लभ्यते हि मनुस्मृतौ , त्रियोऽन्या अन्यस्मृतिषु प्राप्यन्ते न पुनर्मनौ , एव अन्ये कियन्तोऽपि मनो श्लोका उदाहृता , रामायणे, पुराणेषु , भारतस्य च पर्वसु, अन्येष्वपि प्राग्ग्रन्थेषु , येऽद्यादृश्या मनुस्मृतौ , ईदृशैर्हेतुभिस्तर्कोऽय तु सिध्यति असशयं, यद् भूरि लोपा क्षेपाश्च पाठे प्रचलिते कृता । उद्योगपर्वणो, नीतेर्विदुरस्य हि धीमत , निदर्शनायोद्ध्रियन्ते श्लोका अत्र तु केचन—"सप्तदश इमान्, राजेन्द्र !, मनु स्वायम्भुवोऽब्रवीत्, वैचित्रवीर्य !, पुरुषान् , आकाश मुष्टिभिर्घ्नत , तानेव च इन्द्रस्य धनुर् अनाम्यं नमतोऽब्रवीत्, अथो मरीचिन पादान् अग्राह्यान् गृह्णतस्तथा ; 'यश्चाशिष्यं

प्रतीकौ इव ; न स्थाने भ्राम्यहस्तु 'शरीरयोः' ; ( १५० ) ; यद् एव विषयप्रसङ्ग-कारकं वस्तु विद्यते, तदेव 'नरकद्वारं', 'स्वर्गद्वारं' तथैव च, पुण्यापुण्यमयस्यास्य शरीरस्य तु कारणात्, वारंवारं अमुत्र-इह-गमनागमन-कारणं, तदेव सर्वथा धर्म्यं प्रयत्नेन 'मुमुक्षुणा', नरेण, भार्यां चैवापि ; न त्रिवर्ग-'बुभुक्षुणा' । "या उपयाति शनैर्माया'योषिद्'देव-विनिर्मिता,तां(नरः)ईक्षेत आत्मनो मृत्युं, तृणैः कूपं इव आवृतं,(स्त्री)यां मन्यते'पतिं'मोहान् मन्मायां ऋषभायतीं,सा आत्मनो विजानीयाद् वित्तापत्य-गृह-प्रदं दैवोपसादितं मृत्युं, मृगयोर्गायनं यथा" ( भाग० स्कं० ३, अ० ३१) । पुं-स्त्रियोः समता एवोक्ता ऋषिभिः; वा ततोऽधिकं, अर्धद्वयार्धं एकस्य देहस्य एवापि-कीर्तितं ; अर्धनारीश्वरो देवः प्रतीकस्तत्र शाश्वतः, गिरा-

शास्ति वै यश्च युध्येद्, यश्चातिवेलं भजते द्विषन्तं, स्त्रियश्च यो रक्षति भद्रमश्नुते,यथा-याच्यं याचते, कत्थते वा, यश्चाभिजातः प्रकरोत्यकार्यं, यश्चाबली बलिना नित्यवैरी, (३०), अश्रद्दधानाय च यो ब्रवीति, यश्चाकाम्यं कामयते, नरेंद्र !, वध्वाऽवहासं श्वशुरो मन्यते यो, वध्वाऽवसन्नभयो मानकामः, परक्षेत्रे निर्वपति यश्च बीजं, स्त्रियं च यः परि-वदतेऽतिवेलं, यश्चापि लब्ध्वा न स्मरामीति वादी, दत्त्वा च यः कत्थति याच्यमानः, यश्चासतः सान्त्वमुपानयीत,एतान्नयन्ति निरयं पाशहस्ताः × × "। सर्वेषां अपि शब्दानां सन्तोऽर्थाः, किन्तु, बुध्यते न,अधुना एषां तु पदानां ; व्यवहारविपर्ययात् । आर्षे हि प्राक्तने काले, येऽर्थाः संकेतितास्तु तैः शब्दैर्, न तेऽर्थाः चेत्यंते, कालगत्या च, साम्प्रतं ; वाक्शैली एका निवृत्ता,ऽन्या प्रवृत्ता शब्दपद्धतिः ; यातो व्याहारः एवो,ऽन्यो व्यवहारः उपागतः ; यथा 'गच्छामः' इत्यर्थे 'साधयामः' प्रयुज्यते, स्वीयेषु कालिदासेन नाटकेषु पुनः पुनः, न च सोऽर्थोऽस्य शब्दस्य व्यवहारे तु लौकिके । ईदृग् हेतुभिर् आर्षत्वं तच्छ्लोकानां तु सिध्यति । न चापि क्वापि हानिर्हि, भृगोः संस्करणे मनोः, सैषा लोपेन संजाता ; न प्रसक्तः यतोबहु ; आशयश्च तथा एतेषां, उत्तमः चित्तपावनः शोधनो व्यवहाराणां, अन्यश्लोकैः मनुस्मृतौ, इतिहासपुराणे चापि, अन्यत्र, विशदीकृतः । मनोराशयमुदाहृत्य, स्वं चापि विदुरो मतं, "यस्मिन्यथा वर्तते यो मनुष्यः, तस्मिंस्तथा वर्तितव्यं ; सः धर्मः ; मायाचारो मायया वर्तितव्यः ; साध्वाचारो साधुना प्रत्युपेयः ; जरा रूपं हरति हि, धैर्यं आशा, मृत्युः प्राणान्, धर्मचर्यां असूया, कामो ह्रियं, वृत्तं अनार्यसेवा, क्रोधः श्रियं, सर्वमेवाभिमानः" ( म० भा० विदुरनीति, उद्योगपर्व ) । ( ४२ ) ।

चतुर्मुखी चापि , लक्ष्मीनारायणौ तथा , अपृथक्चारिणौ तौ अनपायि निदर्शनं , "विप्रा प्राहुस्तथा चैतद्,यो भर्त्ता सा स्मृताङ्गना" (म०) ।' अनुशास्यति रामस्य सीता प्रकृत आसन, आत्मा हि दारा सर्वपा दारसंग्रहवर्त्तिना, आत्मा इय इति रामस्य पालयिष्यति मेदिनीं" ( वा० रा० ) , ( १६० ) , —यच आह वसिष्ठो, य इक्ष्वाकूणां 'पुरो हित', रामेऽरण्य पद्यमाने, राष्ट्रस्य 'हित' चिन्तक , 'पुः', पुर्यां तु 'पुरो',ऽग्रे वै, कल्याणाय, 'हिताय', हि, प्रजाना, सर्वकार्येषु, परामर्शं अथ उत्तम दातु, दशरथेनाय 'नि हित ' 'प्र हित ' सदा । अन्येषां च महर्षीणा अत्र चैवविधा मति —"नास्ति मातृसमा छाया, नास्ति मातृसमा गति , नास्ति मातृसम त्राणं,'नास्ति मातृसमा प्रिया,कुक्षौ सधारणाद् 'धात्री', जननात् 'जननी' स्मृता, अङ्गाना वर्धनाद् 'अम्बा', वीरसूत्वेन 'वीरसू', शिशो शुश्रूषणात् 'शुश्रू', माता देहमनन्तर" (म०भा०) ; "गुणव्यक्ति इव देवी,व्यनक्ति गुणभुग् भगवान् , स हि सर्वशरीरी आत्मा, श्री शरीरेन्द्रियाश्रया , नामरूपे भगवती, प्रत्ययस्त्व मपाश्रय" ( अ० स० ६ अ० ११ ), "नित्या एव एषा जगन्माता, विष्णो श्रीर् अनपायिनी , यथा सर्वगतो विष्णु , इव भगवती तथा , अर्थो विष्णु , इय वाणी , नीतिर् एषा, नयो हरि , बोधो विष्णुर्, इय बुद्धि , धर्मोऽसौ, सत्क्रिया तु इय , स्रष्टा विष्णु , इय सृष्टि , श्रीर्भूमिर् भूधरो हरि , सतोषो भगवान्, लक्ष्मीस तुष्टि सा शाश्वती स्मृता , ( १७० ), इच्छा श्री , भगवान् काम , यज्ञोऽसौ, दक्षिणा तु इय , आज्याहुतिर असौ देवो, पुरोडाशो जनार्दन , पत्नी शाला तु इय लक्ष्मी , प्राग्वंशो मधुसूदन , चितिर्लक्ष्मीर्, हरिर्यूप , इध्मा श्री , भगवान् कुशा , सामस्वरूपी भगवान्, उद्गीति कमलालया , स्वाहा लक्ष्मीर्, जगन्नाथो वासुदेवो हुताशन , शङ्करो भगवान् शौरि , गौरी लक्ष्मीर्भवेत् सदा , सूर्यस्तु केशवो मित्र , तत्प्रभा कमलालया , विष्णु पितृगण ,पद्मा स्वधा शाश्वत पुष्टिदा , द्यौ श्री ,सर्वात्मको विष्णु अवकाशोऽतिविस्तर, शशाङ्क श्रीधर ,कान्ति श्री चन्द्रिकाऽमला , धृतिर्लक्ष्मीर् जगच्चेष्टा, वायु सर्वत्रगो हरि , जलधिर्नेतु गोविन्द , वेला श्रीर् अस्य विस्तृता ; लक्ष्मी स्वरूप इन्द्राणी, देवेन्द्रो मधुसूदन , यमश्चक्रधर साक्षात्, धूमोर्णा कमलालया , ऋद्धि श्री , श्रीधरो देव स्वयमेव धनेश्वर , गौरी लक्ष्मीर्महाभागा, केशवो वरुण स्वय , श्रीर्देवसेना साऽज्ञेया, सेनानी षण्मुखो हरि , अवष्टम्भो गदापाणि , शक्तिर्लक्ष्मी स्मृता सदा ,

( १८९ ) ; काष्ठा लक्ष्मीर्, निमेषोऽसौ ; मुहूर्तोऽसौ, कला त्वियं ; ज्योत्स्ना लक्ष्मीः , प्रदीपोऽसौ सर्वः सर्वेश्वरो हरिः; लताभूता जगन्माता श्रीर्, विष्णुर्द्रुमसंज्ञितः ; विभावरी श्रीर्, दिवसो देवश्चक्रगदाधरः ; वरप्रदो वरो विष्णुर्, वधूः पद्मवनालया ; नदस्वरूपी भगवान्, श्रीश्च संगमनी नदी ; ध्वजश्च पुंडरीकाक्षः, पताका कमलालया ; तृष्णा लक्ष्मीर्, जगन्नाथो लोभो नारायणः परः ; रतिर्लक्ष्मीश्च, भगवान् गोविन्दो रागः एव च । किं चाति बहुनोक्तेन, संक्षेपेण इदमुच्यते, देव-तिर्यङ्-मनुष्यादौ पुन्नामा भगवान् हरिः, स्त्रीनाम्नी श्रीश्च विज्ञेया ; नाऽनयोर्विद्यते परं" (विष्णु पु०, अ० १, अ० ८) । "शक्ति-शक्तिमद्-उत्थं तु शाक्तं शैवं इदं जगत् ; स्त्री-पुंस-प्रभवं विश्वं स्त्रीपुंसात्मकमेव च ; परमात्मा शिवः प्रोक्तः, शिवा माया इति कथ्यते ; पुरुषः परमेशानः, प्रकृतिः परमेश्वरी ; शंकरः पुरुषाः सर्वे, स्त्रियः सर्वा महेश्वरी ; विषयी भगवान् ईशो, विषयः परमेश्वरी ; मंता स एव विश्वात्मा, मंतव्यं तु महेश्वरी ; आकाशः शंकरो देवः, पृथिवी शंकरप्रिया ; ( १९० ) ; समुद्रो भगवानीशो, वेला शैलेन्द्रकन्यका ; वृक्षो वृषध्वजो देवो, लता विश्वेश्वरप्रिया ; शब्दजालं अशेष तु धत्ते शर्वस्य वल्लभा; अर्थस्य रूपं अखिलं धत्ते मुग्धेन्दुशेखरः ; यस्य यस्य पदार्थस्य, या या शक्तिरुदाहृता, सा सा विश्वेश्वरी देवी, स स शर्वो महेश्वरः; पुंलिंगमखिलं धत्ते भगवान् पुरशासनः, स्त्रीलिंगं चाखिलं धत्ते देवी देवमनोरमा ; या इयं उक्ता विभूतिर्वै, प्राकृती सा अपरा मता; अप्राकृतीं परां अन्यां गुह्यां गुह्यविदो विदुः ; यतो वाचो निवर्तन्ते, अप्राप्य, मनसा सह, अप्राकृती परा सा एषा विभूतिः परमेष्ठिनः " ( शिव-पु० वायुसं० उत्तरखंड, अ० ५ ) । अर्थवादात्मककलापं पुराणं वर्णयति अमुं, परस्परं यः संजातः, त्रिदेवानां समागमे—" प्रकाशं च अप्रकाशं च, जंगमं स्थावरं च यत्, विश्वरूपं इदं सर्वं रुद्रनारायणात्मकं ; (नारायणात्मिकां देवीं, मोहिनीरूपं आश्रितां, आराध्यों एव विष्णुं, वक्ति रुद्रस्त्विदं शिवः— ) अहं अग्निर् भवान् सोमः, भवान् रात्रिर्, अहं दिनं ; भवान् ऋतं, अहं सत्यं ; भवान् क्रतुर्, अहं फलं ; ( २०० ) ; भवान् ज्ञानं, अहं ज्ञेयं ; ( अहं जाप्यं, भवान् जपः ) ; आवाभ्यां सहिता चैव गतिर्, नान्या, युगक्षये ; आत्मानं प्रकृतिं विद्धि, मां विद्धि पुरुषं शिवं; भवान् अर्धशरीरं मे तु, अहं तव तथैव च" । ( प्रत्यभाषत विष्णुश्च ब्रह्माणं पुरतः स्थितं ), " हेतुर् अस्य अत्र जगतः, .

पुराण पुरुषोऽव्यय, प्रधानं चाव्ययं ज्योतिर् अव्यक्त प्रकृति तम ; अस्य च एतानि नामानि, नित्य प्रसवधर्मिण, य, क, स, इति दुःखार्त्तैर् मृग्यते योगिभि शिव, एव योगी, भवान् बीजं, अहं योनि सनातन, अस्मान् महत्तर गुह्य भूत अन्यत् न विद्यते ' ( वायु पु० पूर्वार्धं, अ० २४-२५ )। "सर्वा (प्रजा) प्रकृतिसंभूता उत्तमाधममध्यमा, योषिता अवमानेन प्रकृतेर्वै पराभव, रमणी पूजिता येन, पतिपुत्रवती सती, प्रकृतिः पूजिता तेन, वस्त्रालंकारचन्दनै" ( दे० भा० )। 'विद्या समस्तास् तव, देवि!, भेदा, स्त्रिय समस्ता सकला जगत्सु, त्वया एकया पूरित अम्बया, एतत्, का ते स्तुति स्तव्यपरा परोक्ति। सर्वभूता यदा देवी स्वर्गमुक्तिप्रदायिनी त्व स्तुता, स्तुतये का वा भवन्तु परमोक्तय। त्व श्री, त्व ईश्वरी, त्व ह्री, त्व बुद्धि बोधलक्षणा, लज्जा, पुष्टि, तथा तुष्टि, त्व शान्ति, क्षान्तिरेव च।"(२१०)।"या देवी सर्वभूतेषु बुद्धि सिद्धि, क्षमा, दया, शक्ति, निद्रा, क्षुधा तृष्णा, छाया, जाति, धृति, स्मृति, व्याप्ति, भ्रान्ति, रुचि, तुष्टि, ऊहा, अपोहा च, धारणा, श्रद्धा, व्यवसिति, लक्ष्मी, मेधा, धीर् अपि, धीरता, या देवी सर्वभूतेषु चित्स्वरूपेण संस्थिता, नमस्तस्यै, नमस्तस्यै, नमस्तस्यै, नमो नम "(दु०स०)। शिवस्य हि महाशक्ति शरीरार्धं यथा, तथा। "अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतम सखा, भार्यावन्त क्रियावन्त, भार्यावन्त श्रियाऽन्विता, भार्या मूल त्रिवर्गस्य, भार्या मूल तरिष्यत, सखाय प्रविविक्तेषु भवन्ति एता प्रियवदा, पितरो धर्मकार्येषु, भवन्ति आर्तस्य मातर, आत्माऽऽत्मनैव जनित पुत्र इत्युच्यते बुधै, तस्माद् भार्यां नर पश्येन् मातृवत् पुत्रमातरं" (म०भा०आदि०९८,शकु०), विललाप, वन याते रामे, दशरथो मुहु, कैकेयीं भर्त्सयन् निन्दन्, आत्मानं चापि गर्हयन्—" यदा यदा हि कौसल्या दासीवच्च, सखीव च, भार्यावद्, भगिनीवच् च, मातृवच्च, चोपतिष्ठति, × न मया सत्कृता देवी सत्कारार्हा, कृते तव" ( वा० रा० ), एवं उच्चै स्थिति स्त्रीणां दृष्टा लोके महर्षिभि ; पति अपत्य प्रजानां च मातृणां शुद्धचेतसां। ( २२० )। सद्भिर्, सद् च राजन्य, सती माता तथैव च, समान नीव्यां मनुना स्थापितास्तु विशेषत ; मौल्या उपरि चैतास्या चतुर्भौमा, चतुर्विधा, तथा षोडषधा, चाथ बहुधा, चाऽन्यतरत्वधा, सुप्रतिष्ठापिता सवा शिष्टता सम्मता सदा। समाज माता तु सती, पिता सत्क्षत्रमुच्यते, आचार्य खलु सद्ब्रह्म, त्रिभिर्वै धार्यते जगत्। माता पिता

तथाऽऽचार्यः, एत एव त्रयोऽग्नयः ; ते एव हि त्रयो लोकाः, ते एव त्रयः आश्रमाः, ते एव हि त्रयो वेदाः, ते एव उक्तास्त्रयोऽग्नयः" ( म० ) ; अग्रणीर्नयनाद् अग्रे, स एव 'अग्निः' स्मृतो बुधैः, पावनाद्, दुष्टदहनाद्, अंधकारे प्रकाशनात् ; "अग्निर् मुखं ( मुख्यः ) च देवानां", परमात्मा, इति च श्रुतिः । भारते विपरीतं राजन् जातं सर्वं तु साम्प्रतं, दुष्प्राप्यं किल सद्ब्रह्म, सत्क्षत्रं च न दृश्यते, मातरो भूतसमुद्विग्नाः शपन्ते 'हैन्दवं' कुल । ( २२८; आदितः २७५७ श्लोकाः ) ।

---



## १० अध्यायः

### कथं हिन्दूनां योगक्षेमं साधनीयं ?

( ११ ) प्र० एतादृश्यां अवस्थायां योगक्षेमं कथं हि नः ?

उ० संशसकाः कतिपये इदं निश्चिनुयुर्यदि, 'कर्मणा वर्णतायाश्चापि, आश्रमाणां तथैव च, उद्धृत्यै, स्वैर् अपि प्राणैः, प्रयतिष्यामहे वयं', प्रचारयेयुः सिद्धान्तान्, कुर्युः आचरणं तथा, निमग्नस्योन्नतिर्भूयस्तदा अवश्यं भविष्यति । सदा परस्पराधीनाः, सुसम्बद्धाः परस्परं, परस्परोपकर्त्तारः, परस्परमुपाश्रिताः, सर्वथा अन्योन्यतश्चाप्यनुरक्ताः परस्परं, मुख-बाहू-रु-पद्वत्ते वर्णाः प्राप्स्यंति यौवनं; शाश्वतो मानवो धर्मः, सर्वसंग्रहकारकः, निर्मूर्च्छो निर्व्रणः स्वस्थो, भूयश्चोज्जागरिष्यति, आप्यायितस्तपस्याभिः संज्ञां शक्तिं च लप्स्यते ।

#### गुरुत्रये च, द्विजत्रये च, को वरिष्ठः ?

( १२ ) प्र० आचार्यः च, पिता, माता, शिक्षकाः, रक्षकाः, तथा पोषकाश्च इति त्रितयं, ब्राह्मणाः, क्षत्रियाः, विशः—एतस्मिंस्त्रितये कोऽ नु वरिष्ठः श्रेष्ठ एव च ?

उ० न शक्यमेतन् निर्णेतुं, "कतयोऽन्यत्र मोहिताः" ; एकं प्रशंसति इदानीं, तदानीं अपरं पुनः, न शक्नोति च निश्चेतुं, स्वयं हि भगवान् मनुः । ( १० ) । उक्तमेव हि पूर्वं यत् सर्वे तुल्य-'गुणाः' 'द्विजाः', परस्परानुबद्धाश्च, न स्वतन्त्रस्तु कश्चन ; 'एक जाति'श्च बालोऽपि सर्वप्रियतमः कुले; यदर्थं अन्ये जीवन्ति; स हि शेषो 'प्रयोजनं' ; स्वरूपलाभोऽप्यन्येषां विना तेन भवेन्नहि ; 'आचारणीयो' यास्ते

हि, वालेनैव हि 'मातृता','पितृता' चापि वाप्तेन, विना तेन प्रयो नहि । विचार एव मिथ्याऽत्र तारतम्यस्य सर्वथा, ईर्ष्या-मत्सरयो वर्त्ता, तथा मानापमानयो , ज्ञानिभिस्तु विशेषेण धार्यमेतत्सदा हृदि , यत सज्ज्ञान-सद्भाव प्रचारस्तेषु वशाश्रित , सज्ज्ञानाष् च सदिच्छा स्यात् ,सदिच्छायाश्च सत्क्रिया । नूनं स ज्ञानिचित्त च, महामाया महीयसी, बलाद् 'आकृष्य' 'विक्षिप्य', महामोहाय यच्छति (दु० स०) , "बलीयान् इन्द्रियग्रामो, विद्वांस अपि कर्षति" (म०) , महामायास्वरूपं ॥ विद्या अविद्या ात्मक द्विधा , तत्र अविद्या स्वरूप च योगोक्त खलु पञ्चक— अविद्या,ऽस्मिता मत्या , रागद्वेषौ उभौ तत्र , अस्या अभिनिवेशश्च, तद्व्र न ान्यद् अस्ति हि , एतेन पञ्चकेन एषा दृष्टि आवृत्य सर्वथा, तद्वशेनैव जीव तु कुमार्गे विक्षिपत्यहो ! "न धर्मशास्त्र पठतीति कारक, न चापि वेदाध्ययन, दुरात्मन , स्वभाव एवात्र तथा अतिरिच्यते, यथा प्रकृत्या ( मरिच भवेत् कटु )" ! ( हितो० ) । तथापि, सति सज्ज्ञाने, सदिच्छायास्तु सम्भव , भ्रमज्ज्ञाने तु, नैवास्ति सम्भवोऽस्या मनागपि । ( २० ) ।

( क ) एतेनैव हि भावेन आप्तो कर्पोरैभि अर्पित, "अधीति-बोध-आचरण प्रचारणे" ज्ञानस्य शुद्धस्य तु सम्प्रदस्य, विशेषु धर्मशिक्षाया , धर्मकृत्यस्य चैव हि , सात्त्विकयाश्च तपस्याया , सर्वं तत्तु विवर्जित । मिथ्याधर्मास्तु शिष्यन्ते, न प्रशासम्मता पुन कृत्यानि चातुरीयन्ते दम्भियान्येव भूरिश , तपो रजस्तमोयुक्त प्रायो यत्र विद्यालये , 'आचारा ' दत्तको भिक्षा', ग्रामे ग्रामे, कुले कुले , मूढग्राहा , हेतुहीना , सर्वथा 'वेद'-वर्जिता , परस्पर विरुद्धाश्च, पोष्यन्ते मूढशिक्षके , "यथाणा अत्र अवरा , दरिद्रिणा अपि अदरिद्रिण , सहस्राना असहस्राश्च, लघूनि महता अपि, सुधाशो 'असुधा ' चैव, शूराणा चैव भीरव " , ( भा० ) सुखेनैव हि भोज्या स्तु 'सुधाशो' 'असुधा' इति, प्राय प्रसार्यते 'मौर्य' कूटनीत्या एतया 'बुधै' । "सरस, वैपरीत्येऽपि, सरसत्व न मुञ्चति , साक्षरो, विपरीतत्वे, राक्षसो भवति ध्रुव ' , रागद्वेषाभिभूतात्स्य दुर्बुद्धि दुष्प युज्यते वाच, प्रवञ्चनार्थय लोकस्य, न तु भूतये , महोत्पाता ततो लोके उत्पद्यन्ते हि दारुणा , 'भोपागोण्ड'-कृता यद्वत् प्रभुता सति साम्प्रत । ( २० ) । "वाचि अर्था नियिता सर्वे, वाङ्मूला , वाग्विनि सृता , तस्माद्, य स्तेनयेद् वाच, स. सर्वस्तेयकृन्नर " ( म० ) , 'महा' नाम 'महद् बुद्धि' देवी बुद्धि-

नरं प्रियां पूतां सरस्वतीं वाचं पुंश्चली कर्त्तुं उद्यतः, उद्गं अमोघवद् घोरं, शिरोऽस्य एक च सोऽरिच्छिनत्। महाजनस्य नेताऽपि, यो वाचं दुष्प्रयोक्ष्यते, स्वार्थान्धो वा; मदान्धो वा, लोभान्धो, कामुकोऽपि वा, लोकानां विप्रलम्भाय, शिरस्तस्य वितं-दयति; नेतृत्वात्, जीवनाद् एव वा,ऽयं प्रच्यावयिष्यते। "शास्त्रं ह्यबुद्ध्वा तत्त्वेन, केचिद् वादबलाज् जनाः, कामद्वेषाभिभूतत्वाद् अहंकारवशं गताः, याथातथ्यम-विज्ञाय शास्त्राणां, शास्त्रदस्यवः, 'ब्रह्म'स्तेनाः, निरारम्भाः, अपक्वमनसो, ऽशिवाः, तेषां तमःशरीराणां तमः एव परायणं ; × यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्व-शानुगः, तस्य द्वेषश्च कामश्च क्रोधो दम्भो ऽनृतं मदः, नित्यमेवानुवर्त्तन्ते गुणाः प्रकृतिसम्भवाः।" (म० भा० शां० २७५)। न ईदृशाः 'ज्ञानदातारो' महर्षीणां तु सम्मताः। "स्त्री-शूद्र-द्विजबन्धूनां न सुबोध्या श्रुतिः ; ततः भारत-व्यपदेशेन वेदार्थं उपदिष्टवान् ; (४०), सततं यतमानोऽयं महाकारुणिको मुनिः, यः स्वानुभावं अखिलश्रुतिसारं एकं अध्यात्मदीपं, अतितितीर्षतां तमोऽन्धं ; संसा-रिणां करुणयाऽह पुराणगुह्यं" शुश्रूष्यं एव हि वचो हितकारि तस्य (भा०)। "पठन् द्विजो वागृषभत्वं ईयात्, स्यात् क्षत्रियो भूमिपतित्वं ईयात्, वैश्यो जनः पण्यफलत्वमीयात्, जनश्च शूद्रोऽपि महत्त्वमीयात्" (वा० रा०), इति उद्देश्येन आदिकाव्यं वाल्मीकिः वरस्से जगौ। "सर्वेषां ब्राह्मणो विद्याद् वृत्त्युपायान् यथाविधि, प्रब्रूयाद् इतरेभ्यश्च, स्वयं चैव तथा भवेत् ; जानन् अपि हि मेधावी वृत्त्युपायान् अशेषतः, ब्राह्मणोचितवृत्त्या एव वर्त्तेत; अन्यां न धारयेत्; अद्रोहेणैव भूतानां, अल्पद्रोहेण वा पुनः, या वृत्तिस्तां समास्थाय, विप्रो जीवेद् अनापदि, न लोकवृत्तं वर्त्तेत वृत्तिहेतोः कथंचन, अजिह्मां अशठां शुद्धां जीवेद् ब्राह्मणजीविकां ; संतोषं परं आस्थाय, सुखार्थी, संयतो भवेत् ; संतोषमूलं हि सुखं, दुःखमूलं वि-पर्ययः ; नेहेतार्थान् प्रसङ्गेन, न विरुद्धेन कर्मणा, न विद्यमानेषु अर्थेषु, नआर्त्यां अपि यतस्ततः ; इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः ; अतिप्रसक्तिं चैतेषां मनसा संनिवर्त्तयेत् ; (५०) ; सर्वान् परित्यजेद् अर्थान् स्वाध्यायस्य विरोधिनः, यथा तथा अध्यापयंस्तु; सा हि अस्य कृतकृत्यता; बुद्धिवृद्धिकराणि आशु, धन्यानि च हितानि च, नित्यं शास्त्राणि अवेक्षेत, निगमांश्चैव वैदिकान् ; ऋतं उञ्छशिलं प्रोक्तं, (कलौ तस्य न सम्भवः; विद्यानां किन्तु सन्ति एव) त्रीणि कर्माणि जीविका, याजनाध्यापने चैव, विशुद्धाच्च प्रतिग्रहः" (म०)। आदर्श-'ब्राह्मणं', नूनं,

व्यासो महामुनि , स्वय तादृग्गुण , ख्याति वाक्यैर्वैराग्यसम्भृतै , सर्वभूतदया पूर्णै , सर्वकल्याणकांक्षिभि —"येन पूर्णं इवाकाश भवत्येकेन सर्वदा, शून्य येन जनाकीर्णं, तं देवा ब्राह्मण विदु , येन केनचिद् आच्छन्नो, येन केनचिद् आशित, यत्र क्वचन शायी च, त देवा ब्राह्मण विदु , अहेर् इव गणाद् भीत , सम्मानान् मरणादिव, ( मरणाच्च न भीतो य ), त देवा ब्राह्मण विदु , न क्रुध्येन्, न प्रहृष्येच् च मानितोऽमानितश्च य , सर्वभूतेषु अभयद , त देवा ब्राह्मणं विदु ; विमुक्तं सर्वसंगेभ्यो,मुनिं आकाशवत् स्थित, अस्व एकचर, शांत त देवा ब्राह्मणं विदु , ( ६० ) , जीवित यस्य धर्मार्थं, धर्मो हर्यर्थमेव च, अहोरात्राश्च पुण्यार्थं, त देवा ब्राह्मण विदु , ( "एव तु पण्डितैर्ज्ञात्वा सर्वभूतमय हरिं, क्रियते सर्वभूतेषु भक्तिरव्यभिचारिणी", वि० पु० , 'हर्यर्थं' इत्यस्यार्थोऽत्र 'सर्वार्थं' इति शिष्यते ) ; निराशिष अनारम्भ निर्नमस्कार अस्तुतिं, निर्मुक्त, बन्धनै सर्वै , त देवा ब्राह्मण विदु , अनुत्तरीयवसन, अनुपस्तीर्णशायिन, बाहूपधान, शाम्यन्त, त देवा ब्राह्मण विदु , द्वन्द्वारामेषु सर्वेषु य एको रमते मुनि , परेषा अनव ध्यायन् तं देवा ब्राह्मण विदु , येन सर्वं 'इद' बुद्ध, प्रकृतिर्विकृतिश्च या, गतिज्ञ सर्वभूतानां, त देवा ब्राह्मणं विदु , अभय सर्वभूतेभ्य , सर्वेषां अभय यत , सर्वभूतात्मभूतो य , त देवा ब्राह्मणं विदु " ( म० भा० शां० अ० २५१, २७५) । "न जातिर्दृश्यते तावद् , गुणा कल्याणकारका , जीवित यस्य नात्मार्थे, धर्मार्थं यस्य जीवित अहोरात्र चरेत् क्षांतिं, त नरं ब्राह्मण विदु " ( म० भा० अनु० ) । गोविन्दराजटीकाया उक्त रामायणस्य, च, "न शूद्रा भगवद्भक्ता ; विप्रा भागवता स्मृता , ( ७० ) , सर्ववर्णेषु ते शूद्रा , ये हि अभक्ता जनार्दने ; न प्रशमापर ह्येव वचन चैतदुच्यते,किंतु वस्तु सुशास्य तद् , बाधकानां अभावत ; ब्राह्मणत्वादिजातिर्हि लक्षणैवाऽधिगम्यते , आकृत्यैवाऽधिगम्या सा न गोत्वाश्वत्ववत् पुन " ( वा० रा० आर० अ० ६८, टीका ) । 'यदा भूतपृथग्भावं एकस्थं अनुपश्यति, तत एव च विस्तार 'ब्रह्म' सम्पद्यते तदा , × अद्वेष्टा सर्वभूतानां मैत्र करुण एव च, निर्ममो निरहंकार समदु खसुख क्षमी, × यस्मान्नोद्विजते लोको, लोकान्नोद्विजते च य , हर्षामर्षभयोद्वेगैर्मुक्तो य स च मे प्रिय " ( गी० ) । इय तु परमा काष्ठा, प्राप्याऽल्पैरेव मानवै , आदर्शमेत चेद् गृह्णात्, बुभुक्षुष्या यतेत च, 'साधुरेव स मतव्य सम्यग् व्यवसितो हि स "

( गी० ) ; सोऽयं एवंविधः शब्दः 'ब्राह्मणः' श्रैष्ठ्यसूचकः, आच्छिद्यमानो यैः फैश्च, निरये पातितोऽधुना। बीभत्सरूपिणो भूरि, वीथ्यां वीथ्यां, पुरे पुरे, ब्राह्मणान्' स्वान् रटन्तश्च, पान्थोद्वेजनकारिणः, भिक्षन्ते हि, क्वचिद् दीनाः, बलिनां अग्रतः स्थिताः ; अन्यत्र विकटाकारैः त्रासयन्तो अबलाः क्वचित् ; अरक्षितेभ्यो बालेभ्यः मुष्णंति आभूषणानि च ( ८० )। क्षत्र-विट्-वृत्तिभिश्चापि जीवन्तो बहवो नराः, शठाः 'ब्राह्मण'-सम्मानं अपि भूयोऽनुभुञ्जते ; नामजात्याऽपि ये नैव ब्राह्मणाः, तेऽपि स्वाँस्तथा बहवः ख्यापयंत्यत्र, 'जन्म-वर्णा'द्यरेच्छया। घोरापराधान् कृत्वा च, चौर्यं, हत्यां तथापि वा, पलायन्तो राजदंडात्, नटवद् बहुरूपिणः, स्वाकृतिं गोपयन्तश्च, महा-संन्यासि-वेषिणः, 'साधु-सन्त-महन्तानां' रूपं, 'वैरागिणां' च वा, 'धारयन्तः कियन्तोऽपि पूज्यंते मूढबुद्धिभिः, 'ब्राह्मणाः' इति कृत्वा तु, श्रद्धान्धैर्' अविवेकिभिः। ब्राह्मण्याभिनिवेशो हि सात्त्व-भावे न लभ्यते ; राजसे तामसे भावे प्रायः एतर्हि दृश्यते। सद्ब्राह्मणाः शांतदांताः विद्वांसो विनयान्विताः भारते येऽवशिष्टाः, ते लज्ज्यंते ब्राह्मणब्रुवैः। "क्षात्राणि वैश्यानि च सेवमानः, शौद्राणि कर्माणि च ब्राह्मणः सन्, अस्मिन् लोके निन्दितो मन्दचेताः, परे च लोके निरयं प्रयाति; × यः स्याद्दान्तः सोमपाश्चार्यशीलः, सानुक्रोशः सर्वसहो निराशीः, ऋजुर्मृदुरनृशंसः क्षमावान्, ■ वै विप्रो नेतरः पापकर्मा" (म०भा०शां०)। विविधाश्चाप्यनाचाराः 'ब्राह्मणानां' प्रदर्शिताः, 'तंत्रवार्सिक'कारेण,दक्षिणे चोत्तरे तथा,भारते,अद्यापि दृश्यते ते तथैव हि सर्वतः।(९०)।

( ख ) रक्षासारः क्षात्रधर्मस्तथा व्यासेन कीर्त्तितः; विप्रधर्मादपि श्रेयान् स, इत्येतच्च सूचितं, "क्षत्रं वै ब्रह्मणो योनिः; योनिः क्षत्रस्य ब्रह्म च। यथा, राजन् !, हस्तिपदे पदानि संलीयंते सर्वसत्त्वोद्भवानि, एवं धर्मान् राजधर्मेषु सर्वान्सर्वावस्थान् संप्रलीनान् निबोध; मज्जेत् त्रयी दंडनीतौ हतायां, सर्वे धर्माः प्रक्षयेयुर्विरुद्धाः, सर्वे धर्माश्चाश्रमाणां हताः स्युः, क्षात्रे नष्टे राजधर्मे पुराणे; सर्वाः विद्याः राजधर्मेषु शिष्टाः, सर्वे योगाः राजधर्मेषु दृष्टाः, सर्वे धर्माः राजधर्मे प्रविष्टाः, धर्मो नान्यो राजधर्माद् विशिष्टः; एवं वीर्यैः सर्वधर्मोपपन्नः, क्षात्रः श्रेष्ठः सर्वधर्मेषु धर्मः, पाल्यो युष्माभिर्लोकपालैरुदारैः; विपर्यये स्याद् अभवः प्रजानां; नष्टाः धर्माः शतधा शाश्वतास्ते, क्षात्रेण धर्मेण पुनः प्रवृद्धाः, तस्माच्छ्रेष्ठाः राजधर्माः; न चान्ये; वीर्यश्रेष्ठाः राजधर्माः मताः मे; आत्मत्यागः,

सर्वभूतानुकम्पा, लोकज्ञान, पालन, रक्षण च, विषण्णाना मोक्षण पीडितानां, क्षात्रे धर्मे विद्यते पार्थिवाना, निर्मर्यादा, काममन्युप्रवृत्ता, भीता राज्ञो, नाधिगच्छन्ति पाप, शिष्टाश्चान्ये सर्वधर्मोपपन्ना साध्वाचारा साधुधर्म चरन्ति, त्याग श्रेष्ठ मुनयो वै वदन्ति, सर्वश्रेष्ठ यत् शरीर त्यजति, तत् तु व्यक्त राजधर्मेषु, सर्वे प्रत्यक्ष ते भूमिपाला यथैते" (म०भा०शा०)। (१००)। एव पितामहो भीष्म प्रशशास युधिष्ठिर। "यदि न प्रणयेद्राजा दण्ड दण्ड्येष्वतन्द्रित, मत्स्या इवाभक्षयिष्यन् दुर्बलान् बलवत्तरा", अद्यात् काक पुरोडाश, श्वा च लिह्याद् हविस्तथा, स्वाम्य च न स्यात् कस्मिंश्चित्, प्रवर्तेताऽधरोत्तर" (म०), निग्रह सर्वदुष्टाना, शिष्टानामपि सग्रह, प्रग्रहश्चापि सर्वेषा, साधूना चाप्यनुग्रह, रजन च आर्यवृत्ताना दुष्टाना च मञ्जन, मज्जन्तु शुभकार्याणां, अशुभाना च तर्जन, शान्तिक, पौष्टिक, कर्म, क्षेमो योगस्तथैव च, सम्यग्राज्ञ्युपकर्तान्ना ‖ विना, भूमौ न सिध्यति। उपद्रवेभ्यो रक्षार्थं प्रजाना, कर्म, शान्तिक, 'राष्ट्रे सर्वत्र येन स्यात् शान्ति सुस्थापिता, सदा, सम्परिवृद्ध्यै, पुष्ट्यै च, तासा, कर्मास्ति पौष्टिक, अप्राप्तप्रापण योग, क्षेम प्राप्तस्य रक्षण। अराजके तु लोकेऽस्मिन्, स्यात्, तथा दुष्टराजके, सर्वत्रोपद्रवश्चैव, विप्लवश्चापि सर्वत, सत्क्षत्रिये सन्नृपतौ लोककल्याणमाश्रित, साधुमण्डनतश्चापि, दुष्टदण्डनखण्डनै। (११०)।

(ग) अन्यच्चापि तथैवाह कुरुवृद्ध पितामह, 'विप्र, वैश्य, राजपुत्र च, राजन्!, लोका सर्वे संश्रिता धर्मकामा, × 'वार्त्ता'मूलो ह्यय लोक, तया वै 'धार्यते' सदा, × वैश्यो हि धनधान्येन, त्रीन् वर्णान् बिभृयादिमान्" (म०भा० शा०), वैश्याधीना च सा 'वार्त्ता', 'धारणाद्' 'धर्म'रूपिणी, वैश्यधर्मोऽपि तेनैव हेतुनाऽस्ति वर पर, यथैव माता सर्वेभ्योऽन्येभ्यो गुरुतरा तथा। एव, यथा गुणा तुल्या त्रय, वर्णास्त्रयस्तथा, न कश्चिदवरश्चात्र, न च कश्चिद्धरोत्तर। "यज्ञाय सृष्टानि धनानि धात्रा, द्वेष्यो भवति अर्थपरो हि लोके, कामात्मता खलु अपि न प्रशस्ता, न वा धर्मो यो नार्थकामौ प्रसूते" (म०भा०,शा०)। "यावद् भ्रियेत जठर तावत् स्वत्व हि देहिना, अधिक योऽभिमन्येत, स स्तेनो दण्ड अर्हति" (भाग०)।

(घ) बाल शूद्र चतुर्थश्च सर्वसग्रहकारक, यथोक्त पूर्वं, अव्यक्त यथैव त्रिगुणस्य च; बालस्यैव पोषणाय त्रयोऽन्ये कर्मसाधका।

भोजनविवाहयोः जातिविवेकः सर्वथा व्यर्थ एव किं ?

(१३) प्र० भोजने च विवाहे च परजातिविवर्जनं यद् चिरात् भारते ऽभ्यस्तं, किं नु तद् सर्वथा वृथा ?

उ० "यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" (म०), इति सिद्धान्तं आलम्ब्य, प्रश्नोऽयं सुविचार्यतां; जातिनाम्नोर् एव भेदः, साम्यो हि विषर्जने, पर्याप्यते न हि इदानीं हेतुत्वेन कथंचन; मूढग्राहः, शौचदम्भः, परात् विषभयं, तथा भयेशुरीदृशाः, चान्ये हेतवो व्याजसंभूताः (१२०); न जातिनामभेदस्तु स्वतः पर्याप्तकारणं। पर्याप्यन्ते न ते चापि व्याजाः स्वोद्देश्यसिद्धये। एकजातीनां त्रिसाहस्र सर्वति एतर्हि भारते, तत्र एकोऽपि न सहेतुः वयं अपि उपलभ्यते। जातीनां वैभवस्य यद्, प्रान्तीयानां च तत्था, देशीयानां तथा, तद्वद् भिन्नधर्मावलम्बिनां; 'पूर्वोऽहं', 'एष एवाहं', 'एतज्जातीयको ऽहं', 'एतद्राष्ट्रीयः एवाहं', 'एतद्धर्मावलम्बी अहं'—घोराः अभिनिवेशास्ते, रागद्वेषैः परिप्लुताः, 'अस्मिता'-जनिताः सर्वे मानवान् भ्रामयन्ति वै, परस्परं द्वेषयित्वा विनाशं प्रापयन्त्यपि। न भाले कस्यचिद् दृश्यं प्रकृत्या लिखितं किल—क्षत्रियो, ब्राह्मणः, शूद्रः म्लेच्छोऽयं, वैश्यः, एव वा, श्रीवास्तवो, वा सक्सेना, गौडो वा, माथुरोऽथवा, स्याम, चूड़ा, नम्बूद्री, सोपा, देढी, अथ पैरिशा, महेसरी, वा राठौरो, ऽग्रवाले वा, कनौजिया, मद्रासी वा, अथ पंजाबी, बंगाली, गौर्जरोऽथवा, हिन्दी, चीनी तु, जापानी, ईरानी, तुर्की, अरबोऽथवा, जर्मनी, मिश्री, रूसी, मेक्सिकन् वा, कनेडियन्; सर्वे सर्वां उद्वहन्ति, सर्वे सर्वत्र यान्ति च, "सर्वे सर्वासु अपत्यानि यथोः संजनयन्ति हि" (म० भा०); (१३०); अथ हिन्दुर्, अथान्येषुर् मुस्लिमः, क्रिश्चनोऽथवा, भवतीह स एवायं; मुस्लिमश्चापि क्रिश्चनः; तौ चैवआर्यसमाजेन प्राप्नुतो हिन्दुतामपि; देशीयत्वं, राष्ट्रियत्वं, अपि एवं परिवर्तते उपयुक्तैर् 'नैसुरालिजेशनैर्' विधिभिः; यथा व्रात्यस्तोमादिविधिभिः भारतेऽपि पुराऽभवत्। भिन्नानां विविधआचाराः प्रान्तानां भारतस्य तु, व्यासेन दर्शिता भूयो विवादे कर्णशल्ययोः; अभिक्षिपन्तौ अन्योऽन्यं, यथाप्युक्तं दृश्या एव हि, तत्कालीना तथाऽप्येवं ईदृशा सामाजिकी स्थितिः; "अटता तु मया, देशान् नानाधर्मसमाकुलान् आगच्छता, महाराज !, वाह्लीकेषु विशामितं; तत्र वै ब्राह्मणो भूत्वा, पुनर्भवति क्षत्रियः, वैश्यः, शूद्रश्च, वाह्लीकः, ततो भवति नापितः, नापितश्च ततो भूत्वा पुनर्भवति

ब्राह्मण , द्विजो भूत्वा च तत्रैव पुनर्दासोऽभिजायते , ×पञ्चनद्यो वहन्त्येता सिन्धु षष्ठास्तु यत्र, ते आरट्टा नाम वाह्लीका , एतेष्वार्यो हि नो वसेत् । कुरव सहपाञ्चाला , साल्वा , मत्स्या , सनैमिषा , कोसला , काशि पौण्ड्राश्च, कालिङ्गा मागधास्तथा, चेदयश्च महाभागा , धर्मं जानन्ति शाश्वत" ( म० भा० ) । ( १४० ) । (कलिङ्गदेश किं वन्यैर् निन्दितो धर्मशास्त्रिभि )। वेदेषु चोदाहरण तादृश दृश्यते, यथा, "कारुरहं, ततो भिषक्, उपलप्रक्षिणी नना, नानाधियो वसूयवोऽनुगा इव तस्थिम, इन्द्रायेन्दो परिस्रव" ( ऋ० ९—११२—३ )। श्रूयते स्थिरधी श्रीर्वै , प्रान्ते पंचनदे, पुरा, 'वर्ण'स्तु 'जीविका-धर्म नाम्नी' ह्यभूच्च च ; नान्यथा , पर्यवसंत 'वर्ण'स्तु जीविकापरिवर्त्तनात् । यस्मिन् यस्मिन् जनपदे जीविका स्थिरता भवत्, प्रकृतेर् आनुकूल्याच्च, सुप्रबन्धात् नृपस्य च,•प्राधीण्यात् शिक्षकाणां च शिष्य सद्वर्ण निर्णये, न तत्र हेतुर्वर्णस्य परिवर्त्ते ॥ तादृश , प्रभाप् च 'जन्मवर्णं च' आसीद् 'वंश परम्परा', पुराणे श्रूयते यद्वत्, "कर्मभि वर्णता गतं" । जाति देश राष्ट्र धर्म-कृतानि कृत्रिमाणि तु लक्षणानि ईदृशानि इह व्यावर्त्तन्ते पुन पुन , मनुष्य वं पुनस्तु एक स्थिरत्वेन अनुवर्त्तते, तदेव भाले सर्वेषां प्रकृत्या लिखित स्फुट, पादौ द्वे भुजा अस्थानि,कर्णं जिह्वा अक्षि नासिका , व्यक्तप्राकृतिरपि,एतत् सर्वेषां अस्ति सुस्फुटं । (१५०) । 'अह हिन्दुर्' 'अह मुस्लिम्', 'क्रिस्चनोऽहं', 'यहूदक', 'सजातीयो' 'अन्यजातीय'—इति भ्रमोऽप महाभ्रम ? 'मानवोऽहं मणोजात'—इत्येवाल कथं नहि ? "जाति रीति कुल-गोत्र दूरत", वेदा-वाग्-यसन भेदवर्जितं,'देश काल विषय तिवर्त्ति यत्' मानवत्व'इह भावयऽस्मान्ते । "सामान्य एकत्वकरं विशेषस्तु पृथक्त्वकृत्,तुल्यार्थता हि सामान्यं विशेषस्तु विपर्यय ; सर्वेषामेव भावाना सामान्य वृद्धिकारणं , ह्रासहेतुविशेषस्तु, प्रवृत्तिर् उभयस्य च"(चर०),'सामान्ये' बल आधेय मनुष्यत्वे'प्रयत्नत ,न तु 'जाति' 'विशेषेषु सर्वव्यापात कारिषु , सामान्ये 'धारणा' कार्या, 'विश्वबन्धुत्वस्' , तदा एव वै, विनिवर्त्तिष्यते 'ह्रास','विशेषै' 'जातिभि' कृत ,आकेशान्त च अक्षताङ्ग समाज संरक्षिष्यते । प्रवृत्तिस्तु 'विशेषाणा' अपि भवत्येव, न संशय , गौणा एव हि ते सन्तु, सामान्य मुख्यमेव च । प्रयोग प्रस्तुते प्रश्ने सिद्धान्तानां अथ ईदृश — शीलव्यसनसाम्येन विवाहो भवतु च, भोजन , निरामिषाणां सदृशैः ; सामिषाणां च सामिषे , सुरापाणां सुरापैश्च, हिंसकाना च हिंसकै , सात्त्विकानां सात्त्विकैश्च;

राजसानां च राजसैः ; तामसानां तामसैश्च; प्रकृतीनां तु साम्यतः ( १६० ); शूकरऽदाः वराहअदैः, गोभक्षाः शृगालअदनैः, महिषैर्वाजिनश्चापि तथा कासरमर्दनैः, शीलगवाः शीलगवैः, अजाभक्षाः अजाअशिभिः, आखेटकाः मृगयुभिः, दुग्धपाः क्षीरपैरपि, गोधूमतण्डुलभुजः यवमुद्गचखादनैः, कंदमूलफलऽहाराः कंदमूलफलअदनैः , सिंहव्याघ्राश्च क्रव्यादाः क्रव्याद्‌भिरितरक्षुभिः; तृणाऽक्षाः हस्तिनः उक्षाः सैरिभाः ऋषभास्तथा तादृशैः करिभिः षंडैः तुलापरं वृषभैरपि; शैवाः, शाक्ताः, वैष्णवाश्च, शैवैः, शाक्तैश्च,वैष्णवैः,सह आहारविहारेषु विवाहेषु परन्तु वै, परस्परं रमन्तां च, मोदन्तां स्वतः एव च ; नैसर्गिको विधिर् अयं सर्वथा चापि अकृत्रिमः, शीलव्यसनसाम्येन प्रकृत्यैव नियोजितः । पशूनां 'जातयो' भिन्नाः यद्, रूपेणैव तत् तथा ; न पुनर्मानवेषु एवं जातिभेदः स्वरूपतः ; कृत्रिमैरेव वेषैः स्वान् भेदयंति एव ते नृपा । पुराणी इयं प्रथा—वेश-भेदाः 'कर्म'-विभेदने । सा तु "कर्म-विवेकार्थं" इदानीमपि पाल्यते; 'कान्स्टेबलस्य' अपरो वेशो, सैनिकस्यापि चापरः, 'जजस्य' च, 'वकीलस्य', 'क्लर्जिमेनस्य' चान्यथा ;(१७०), शय्यायै स्वपरं वस्त्रं, अश्वआरोहाय चापरं, मार्जन्याश्च प्रयोगाय वस्त्रमन्यद् अपेक्षितं ; देश-काल-निमित्तानां विशेषैः विविधाः प्रथाः,' अभूवन् पूर्वकाले याः, सर्वाः ताः नाधुना हिताः ; "ततः शकान्, सयवनान्, काम्बोजान्, पारदाँस्तथा, पह्लवाँश्चैव, निःशेषान् कर्तुं व्यवसितस्तदा ; ते वध्यमानाः वीरेण सगरेण महाऽत्मना, वसिष्ठं शरणं गत्वा प्रणिपेतुः मनीषिणं ; × सगरः स्वां प्रतिज्ञां च गुरोर्वाक्यं निशम्य च, 'धर्मं' जघान तेषां वै, 'वेश-अन्यत्वं चकार [illegible] ; अर्धं शकानां शिरसो मुण्डं कृत्वा व्यसर्जयद्, यवनानां शिरः सर्वं, काम्बोजानां तथैव च, पारदाः मुक्तकेशाश्च, पह्लवाः श्मश्रुधारिणः, निस्स्वाध्यायवषट्काराः कृतास्तेन महात्मना ; × सर्वे ते क्षत्रियाः, तात !, धर्मस्तेषां निराकृतः, वसिष्ठवचनाद्, राजन् !, वेशश्च, सगरेण हि" (हरिवं० अ० १४ ) । न यातऽयत्तसांकर्यं पुराऽसीत् ,साम्प्रतं यथा ; न 'रैल्वे', वायुयानानि, वहित्राणि अचिरगानि चापि अतिवेगानि , वाष्पैर्वा विद्युता प्रेरितानि वा , 'लारी', 'बस्', 'मोटरादीनि'; नानिशं च गतागते, कोटिशोऽपि मनुष्याणां, 'चातुर्मास्ये'ऽपि संततं ; ( १८० ) ; 'देवनिद्रोऽधिर्सि' चापि, 'शुक्रास्तोदय' मेव च, न मत्वा, 'हिन्दव'श्चापि प्रयांति अद्य तु कोटिशः ।.दस्युभिः किंच मार्गेषु रुद्धेषु प्रायशः पुरा, परस्परसहायार्थं

'सार्थ'वज-'जाति-निर्मितिः, 'समुत्थितानां सम्भूय', 'श्रेणीवत्' 'निगमादिवत्' ; प्रधानहेतुः सर्वत्र 'कर्म'-सामान्यमेव हि ; एकस्मिंश्च कुले 'जाताः', जीवंश्चैक-जीविकां, परस्परं संहताश्चापि, एकजातित्वमागताः, पुराकाले ; तदधत्वे सर्वं वि-परिवर्त्तितं ; ततो नवीना कार्योऽस्ति समाजस्य व्यवस्थितिः । "आयुः सत्त्वबल-आरोग्यसुखप्रीतिविवर्धनाः, रस्याः, स्निग्धाः, स्थिराः, हृद्याः, आहाराः सात्त्विक-प्रियाः ; कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः आहाराः राजसस्येष्टाः दुःख-शोकाऽऽमयप्रदाः ; यातयामं गतरसं पूति पर्युषितं च यद् उच्छिष्टमपि चामेध्यं, भोजनं तामसप्रियं" ( गी० ) ; भोजने अतः, विवाहे च, परा शुद्धिरभीप्सिता ; दुष्टाशाद् व्याधयो भूरि जायन्तेऽपि आधयस्तथा, पापानि च निकृष्टानि दुर्बुद्धि-जनितानि हि ; (१९०) ; शुद्धाशात्तु स्वदेहस्य, शुद्धोद्वाहाच्च सन्ततेः, स्वा-स्थ्यं, च परमोत्कर्षः, प्रत्यक्षं किल दृश्यते । जातिनाम्नोः समत्वेन किंतु नैतद् अवाप्यते । संचारिरोगाऽऽक्रान्तानां 'सजातीनां' तु हन्तः दृश्यते गृह्यमाणं हि भोज्यं ; नान्यनरात् तथा, स्वस्थस्यापि शुचेश्च, अन्य-'जाते'र्नाम तु विश्रुतः । एवमेव विवाहेषु वैषम्यं दृश्यते बहु ; कृष्णो वरो वधूः श्वेता, वरो गौरो असिता वधूः, कुरूपोऽयं सुरूपा इयं, कान्तोऽयं विकटा त्वियं, मूर्खोऽयं विदुषी चैषा, मूढोऽयं स्फूर्त्तिमती असौ, नपुंसकप्रायः एको हि अपरा तु अतिकामिनी, कामु-कोऽयं व्यवायेच्छुः सा मैथुनपराङ्मुखी, व्यभिचाररतो ह्येषः दुःखिनी एषा पति-व्रता, पत्नीव्रतो ह्ययं शुद्धः सा पुनर्व्यभिचारिणी, अयं भीरुरियं वीरा, स्वच्छा इयं मलिनस्तु असौ, कराला इयं मृदुश्चायं, विपरीतं तथैव च, दम्पत्योर्यद्यद् एकस्य अभीष्टं, द्विष्टं तद् अन्यतः, दम्पत्योर् दृश्यते हि ईदृग् विरोधो, सुखनाशकः, हिन्दूनां बहुशो लोके, 'जाति'-नाम्नि समे द्वयोः (२००) । "उन्मादो मातृदोषेण, पितृ-दोषेण मूर्खता", गाथा इयं प्रथिता लोके, विवाहे दोषसूचिका । "ब्राह्मादिषु वि-वाहेषु चतुर्ष्वेवानुपूर्वशः ; ब्रह्मवर्चस्विनः पुत्राः जायंते शिष्टसंमताः, रूपसत्त्व-गुणोपेताः, धनवन्तो यशस्विनः, पर्याप्तभोगाः धर्मिष्ठाः, जीवन्ति च शतं समाः ; इतरेषु तु शिष्टेषु, नृशंसाऽनृतवादिनः, जायते दुर्विवाहेषु, ब्रह्म-धर्म-द्विषः सुताः" ( म० ) । ज्ञानं तु 'ब्रह्म'-शब्देन, कर्म 'धर्मेण', कथ्यते ; 'ब्रह्म'-द्विषस्तु निर्विद्याः, पापिनो 'धर्म'-घातकाः, 'मूर्खा'श्चापि, तथो'न्माद' रोगादिभिरुपद्रुताः ; वरवध्वोर् आनुगुण्यं यत्र निश्चीयते ध्रुवं, विना छलं, विना लोभं, विना 'जाति-

जायते" तथा, 'सह-धर्म-चरी स्यात्' इत्युद्देश्येन प्रेरकं, तत्रैव सद्विवाहोऽस्ति, सत्यं 'सावर्ण्यं' एव च। कामस्य भार्या- तिस्रस्तु सात्त्विकाः सात्त्विकस्य वै, प्रीतिः स्नेहमयी, गाढा रतिः, शुद्धा च सन्ततिः। "परस्परअनुकूल्येन तदेवं रज्जमानयोः, संवत्सरशतेनापि प्रीतिर्न परिहीयते" (वा० कामसू०)। (२१०)। "एतत्कामफलं लोके यद् द्वयोरेकचित्तता; अन्यचित्तकृते कामे, शवयोरिव संगमः"(भर्तृहरि०)। ताभ्यामेव लभ्याः स्युः 'ब्रह्मवर्चस्विनः' सुताः, ब्रह्मचारि-व्रतं याभ्यां अच्युतं प्रतिपालितं; ब्रह्मचारी युवा यत्र, कन्या च 'ब्रह्मचारिणी'। "अविप्लुतब्रह्मचर्यः युवा गार्हस्थ्यं आविशेत्" (म०), कन्या च अदूपिता सत्या प्रयता ब्रह्मचारिणी। ब्रह्मचर्यऽवकीर्णानां पुंसां विहितं व्रतं; कन्यायाः दूषक-स्यापि दंडनीकृणो विधीयते, सर्वैरेव स्मृतिकारैः प्रशोत्कर्षं तु कांक्षिभिः। "आचार्यो ब्रह्मचर्येण ब्रह्मचारिणं इच्छते, आचार्यो ब्रह्मचारी" स्याद् इति आथर्व-णिनां श्रुतं। पुण्यकीर्तिं सदाचारं,तादृशो हि उपसीदति ब्रह्मचारी सदाचारः,सद्विद्या प्राप्तुं उत्सुकः। "कन्या वै ब्रह्मचर्येण युवानं विन्दते पतिं" (वे०); विद्या विनय-सम्पन्नां, ब्रह्मचर्यव्रते स्थितां, शुद्धां, तथाविधः शुद्धः युवा चापि अभिकांक्षते। सृष्ट्यादिकाले "प्रायच्छद् ब्रह्म वै मृत्यवे प्रजाः,न प्रायच्छद् (किन्तु) तस्मै ब्रह्म-चारिणं एव" हि (श०ब्रा०११-३-३१; गो०ब्रा०१०)। (२२०)। "वेश्या नाम महावह्निः, रूपेन्धनसमुज्ज्वला, कामिभिर्यत्र हूयन्ते यौवनानि धनानि च", इति श्लोकः प्रसिद्धोऽस्ति; तस्मात्तस्यतरो ह्यसौ—'विटो नाम महाव्याघ्रः शास्त्रदंष्ट्रान-सैर्युतः, योऽबलाः ग्रसति क्रूरः, वेपंतीर् हरिणीरिव'। "ज्ञानं, शौर्यं, महः, सर्वं ब्रह्मचर्ये प्रतिष्ठितं" (म०भा०शां०), ब्रह्मचर्यव्रताऽयत्तं ज्ञानं, शौर्यं, धनं, बलं; वर्चस्, तेजो, महो, रहो, ब्रह्मचर्येण वर्धते। बालानां, युव-कन्यानां, दूषणेन, विपत्तयः घोराः, मानवघातैस्तु उत्पद्यते जीवने भृशं। "अविज्ञातासु च स्त्रीषु, क्लीबासु, स्वैरिणीषु च, परभार्यासु, कन्यासु, नाऽचरेत् मैथुनं नरः; कुलेषु पाप-रक्षांसि जायंते वर्णसंकरात्, मधुमांसो, ऽङ्गहीनाश्च, स्थूलजिह्वा, विचेतसः; एवं धान्ये च जायंते यदा राजा प्रमाद्यति; तस्माद् राज्ञा विशेषेण चरितव्यं प्रजा-हिते"( म० भा० शां० ९० )। नवधा कथ्यते भक्तिः, दशधा चापि मैथुनं; अष्टाङ्गः प्रोच्यते योगः, तथाष्टांगं च मैथुनं; आसनान्यपि चत्वारि च अशीति-श्चापि मैथुने, पशूनां अनुकारेण तावंतः खलु संख्यया; योगे च तावन्ति,

उच्यन्ते, फल तु विपरीयते, (२३०), योगात्सम्प्राप्यते मोक्षो, मैथुनाद् घोरबन्धन, योगात्कूटस्थता नित्या, मैथुनात्सम्प्रवृत्तिर्भृशं, स्वे महिम्नि स्थितिर् योगात्, परानुसरण रतात्, योगात् "स्वरूपेऽवस्थान", पररूपे तु मैथुनात्; "सर्वं परवश दु ख सर्वं आत्मवश सुख", लभ्याऽत्मवशता योगात्, पारवश्यं तु मैथुनात्, एकस्माद् आत्मनो लाभ, परस्माद् आत्मविस्मृति, एकस्तु पाशुपत्याय, पशुत्वायैव चापर। तथाऽप्यस्ति 'स्व भावो'ऽय, 'प्रकृति', परमात्मन, विहाय पाशुपत्य यद् 'पशुत्व' याति अविद्यया, ततश्च धीर 'वीरत्व', 'दिव्यत्व' च पुन, क्रमात्। सकेत खलु शाक्ताना अयं दक्षिणमार्गिणा, उत्कर्षक्रमतस्त्रिस्रो जीवावस्था भवति हि, 'पशु', 'वीरश्च', 'दिव्य'श्च यो जीवन्मुक्त एव वै। धिया ईरयेद् इन्द्रियाणि, धिय चाप्यात्मबोधत, परेभ्यश्च धिय रायेत्, स 'धीर' इति कथ्यते। 'वीन्' अश्वान् ईरयेद् यस्तु, तथैव स्वेन्द्रियाण्यपि, धृतिगृहीतया बुद्धया, निगृह्णन् प्रग्रहैरिव, वीरत्वाय हित 'वीर्य' यश्च रक्षेत् प्रयत्नत, काम क्रोध च दमयन्, स हि 'वीर' इतीर्यते, (२४०), 'अश्वान्' किल इन्द्रियाण्याहु, यतस्ते विषयान् प्रति मनो ह्याशु वहति, एव, विषयाश्च मन प्रति, 'अश्वास्तिष्ठति' यस्मिन् स नाडीव्यूह कलेवरे, 'ऊर्ध्वमूलो ह्यध शाखो" रहस्ये 'ऽश्वत्थ' उच्यते। मध्याया 'वीर' धीराया अवस्थायां, बुधे, ननु, प्रकृत्यैवास्ति सर्वेन्य-पूर्वं अभ्युदय, तत नि श्रेयस मार्गितव्य 'दिव्य', यातोऽन्यथा भवेत्, कामश्चाभ्युदयस्याग, धर्म्यो वैवाहिकश्च तत, राधवीयस्सात्त्विकश्च, न तु राजस-तामस, "धर्माविरुद्धो भूतेषु कामोऽस्मि, भरतर्षभ!" (गी०)। यथाऽपदिष्टं भगवता मनुना सर्ववेदिना—सात्त्विकप्रेमनिरस्य द्रा, धार्मिका, ज्ञानिनो, बुधा, दया 'मैत्री परा, स्वस्था, सुमुखा, सुस्मिता, सुता जायते सद्विवाहात्तु सर्वदा 'धीरधीर यौः, अन्ये पाशव कन्दर्पोत्थारा, दर्पभयप्रतुरा, क्रोधिन, कर्कशा, क्रूरा, कामित, कूटभाषिण, स्नेहहीना, अविश्वास्या, सर्वेषा अपि 'शत्रव', "अन्त शाक्ता:, बहि शैवा, सभामध्ये च वैष्णवा, नानारूपधरा कौला विचरति मही तले"। "मित्रं मिन्देर्नन्दते, प्रीयतेर्वा, सत्रायतेर्मितुतेर्मोदतेर्वा, (२५०); शत्रु शदे, शास्तेर्वा, श्यतेर्वा, श्रणातेर्वा, श्वसते, सीदतेर्वा, श्रमे, शुचो, बहुशः सूद तेश्च" (म० भा० कर्ण० ३६)—निरुक्तिरेष मित्र–शत्रवो स्मृताऽस्ति। "पापान् निवारयति योजयते हिताय, गुह्यं निगूहति, गुणान्प्रकटीकरोति, आपद्गत न विज-

एव तु उत्पाद्याः प्रजाः, पालयितुं हि याः सुखेन सम्यक् शक्याः स्युः, पितृभ्यां न अधिकाः ततः ; अन्यथा बहुदुःखानां अनन्तैव परम्परा, पितॄणां, तदपत्यानां, समाजस्याखिलस्य च, चिन्ता, क्षुत्क्षामता, रोगाः, दौर्बल्यं, कलहाः, सदा, आमिषार्थे शुनां यद्वद्, अन्योऽन्यस्यापि भक्षणं ; कोटिशो जायमानास्तु, नदीषु जलधौ तथा, भक्षयंति यथा मत्स्या दुर्बलान् बलवत्तराः। काम एव जगत्स्रष्टा, मात्रयाऽऽनन्ददायकः ; मात्रां अतीतो ऽज्ञानवत्, विषमं चापि सेवितः, कारणं घोरकष्टानां, धर्मापेतः, स एव हि। अतः कामो निरोद्धव्यः, संसेव्यश्चापि मात्रया, वैवाहिकेन विधिना, गार्हस्थ्ये चापि संस्कृते, विज्ञानसृष्टधर्मानुसारेणैव च सर्वदा। 'कामे' नियमिते, सर्वं अन्यत् नियमितं भवेत्। तत्र आद्यो 'रस-काम' तु मूलकामः स्मृतो बुधैः। 'रसना' ऽतो नियम्याऽऽदौ, "जितं सर्वं जिते रसे" (भा०);

---

भक्षेण जिन्विष्यसि, शूद्रकल्पस्ते प्रजायामाजनिष्यते,ऽन्यस्य प्रेष्य॰, कामोत्थाप्यो, यथाकामवध्यो ; यदा वै क्षत्रियाय पापं भवति, शूद्रकल्पोऽस्य प्रजायामाजायते ; ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा शूद्रतामभ्युपैतो॰, स शूद्रतया जिज्यूषितः। एते वै त्रयो भक्षाः, राजन् !, इति होवाच, येषां आशां ( इच्छां ) अपि न इयात् क्षत्रियो यजमानः। अथास्य स्वो भक्षो, न्यग्रोधस्यावरोधाश्च फलानि औदुम्बराणि आश्वत्थानि प्लाक्षाणि अभिषुणुयात्,तानि भक्षयेत्,सोऽस्य स्वो भक्षः,इति" (ऐत० ब्रा० अ० ३५)।

एवं, तत्तद्भक्षसेवेन सन्ततेर्'वर्ण'-परिवर्त्तनं, वेदावयवेन ऐतरेयब्राह्मणेन दर्शितं। रामादीनां, यज्ञ चरुणा मातृभिर् अशितेन, जन्माभूत् ; तथा विश्वामित्र-जमदग्नि-परशुरामाणामपि ; इति पौराणैतिहासिकान्युदाहरणानि। "ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतो॰", इत्यस्यान्याऽपि व्याख्या सम्भवति, यदि "तृतीयः" इति शब्दादनन्तरं विराम पठ्यते, यथा, 'ईश्वरः क्षत्रियः, ह अस्मात् द्वितीये वा तृतीये, परो, पुनर्भवति', यथा चरुव्यत्ययेन ऋचीकस्य भार्या ब्राह्मणप्रकृतिकं एव जमदग्निं जनयामास, महर्षिच्यवनस्य विशेषवरदानेन, परन्तु जमदग्नेः पुनः परशुरामः क्षत्रियप्रकृतिको बभूव ; एवं चरुव्यत्ययेन, महाराजगाधेः पुत्रः, ब्राह्मणप्रकृतिको विश्वामित्रो बभूव ; तथा च, 'वा', यद्येवं न भवति, यदि पापं, प्रमादः, भोजने, पुनः पुनः क्रियते, तदा सन्ततिः स्थिररूपेण ब्राह्मणतामेवोपैति ; इत्यादि।

बृहदारण्यकोपनिषदि अपि, षष्ठाध्यायस्य चतुर्थे ब्राह्मणे लिखितं, "स य इच्छे-

महाभारतयुद्धस्य कारणं मुख्यं अस्ति, यद् "आपूर्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशं, असुरा जज्ञिरे क्षेत्रे राज्ञां च बलदर्पिताः, (२७०), राज्ञां बलैर्बलवतां सिता भूः भृशपीडिता, पुरे पुरे च नृपतिः कोटिसंख्यबलैर्वृतः, राष्ट्रे राष्ट्रे च शतशो ग्रामाः कुलसहस्रिणः; ग्रामायुतैः पुरैः राष्ट्रैः भूमिः निर्विवरीकृता" (म० भा० आ० ६५; स० ५१), यथा भारावतारार्थ, 'महार्णं' हृदि संस्थितं; 'लुब्धः', 'क्रोध', सदा जातः, कामस्यानुजः एव यः। साम्प्रतं चापि घोराणि भयानकानि पुनः पुनः युद्धानि यानि सर्वत्र, तत्र एतद् ह्येव कारणं, अतिसंख्या मनुष्याणां, पापिनां ईर्षिता तथा। भारतेऽप्यस्ति बाहुल्यं नृसंख्यायाः असंशयं, दिवसे दिवसे चापि वर्धते तदभीक्ष्णशः; तथाऽन्नवस्त्रसामग्री ह्रीयते चानुपाततः; नास्माभिः घोरपादयति पूर्ववत्, सेविताऽपि, भूः; अतिकर्षणात्, उर्वराऽपि, यत्र तत्रोपरायते;

---

स्पुत्रो मे शुक्लो जायेत" (ख) कपिलः पिंगलो जायेत"'(ग) श्यामो लोहिताक्षो जायेत"'(घ) अथ य इच्छेद् दुहिता मे पंडिता जायेत"'(ङ) अथ य इच्छेद् पुत्रो मे पंडितो जायेत" " स एतद् एतत् जायया सह अश्नीयात्; इत्यादि।

एते प्राचीना मनूक्ता वेदोक्ता वा प्रकाराः अभिलषितसंततिमुत्पादने असिध्यन् वा पुराकाले, सिध्यन्ति वा इदानीं, सेत्स्यंति वा भविष्ये, इति तु न वक्तुं शक्यते; सफलप्रकारनिश्चयस्तु साम्प्रतमपि वैज्ञानिकगवेषणाधीनः; पाश्चात्यैरत्र महान् परिश्रमः क्रियते; अत्र नूक्तश्रुतिस्मृतिवाक्योदाहरणस्याभिप्रायः एतावानेव यत् श्रुतिस्मृतिकाराणां ऋषीणां मतेन, एकस्मिन्नेव कुले एकदम्पतीभ्यां एव भिन्नप्रकृतयः चत्वारोऽपि वर्णाः उत्पत्तुं शक्नुवन्ति। आयुर्वेदकामशास्त्रग्रन्थेष्वपि केषुचित्, इच्छायत्ततदुपायाः केवलं सूचिताः; न तु निश्चिताः।

पाश्चात्यवैज्ञानिकैः सूक्ष्मवीक्षक('माइक्रास्कोप')यन्त्रेण बहुशः परीक्ष्य एतद् अपि निश्चितं यत्, मधुकरराज्ञी यदा अनुचरमधुकरैः निर्लिंगैः, विशेषप्रकारकं एकं मधु भोज्यते, तदा पुंलिंगान् अल्पसंख्यकान् मधुपान् सूते; अन्यत् मधु भोज्यते चेत्, अल्पिष्ठसंख्यकाः स्त्रीलिंगा- मधुकर्यः, तासां एव एका नवचौदपटले मधुकरराज्ञी भवति; साधारणं मधु अशित्वा, साधारणाः बहुसंख्यका- निर्लिंगाः सरघाः सूयन्ते। तैरन्यानि अन्यान्यपि विविधानि परीक्षणानि, अपत्यानां लिंगं यथेष्टं विधातुं, तन्तुषु क्रियन्ते सन्त्येव निरन्तरं। (५०) १. गर्भाधानात्प्राक् चिरकालं इष्टपूजनं तपश्च

गृध्रुभिः कर्कैः, 'भू-पैः', मंछिन्नानि वनान्यपि ; ग्राम्याश्चतुष्पदः चापि बहुशो हि विनाशिताः ; उपपातकानि मनुना कर्माणि गणितानि वै यानि, 'विज्ञान'-दृष्ट्या च महापातकतराणि हि, तानि क्रियंते बहुशः, लोभात् चातुरदर्शिभिः ; (२८०); "गोवधो; अयाज्य-संयाज्य-पारदार्य-आत्मविक्रयः ; कन्यायाः दूषणं चैव; वार्धुष्यं ; व्रतलोपनं ; सर्वे-आकरेषु अधीकारः ; महायंत्रप्रवर्तनं; इन्धनार्थं अशुष्काणां द्रुमाणां अवपातनं ; तडाग-आराम-दाराणां अपत्यस्य च विक्रयः ; हिंसा ओषधीनां; स्त्र्याजीवो; ऽभिचारो ; मूलकर्म च ; भृत्या चाध्यापन-अदानं ; अपण्यानां च विक्रयः ; अनपक्रिया ऋणानां च, कौशीलव्यस्य च क्रिया ; असच्छास्त्राधिगमनं, नास्तिक्यं चोपपातकम्" ( म० ) । एतादृशानि कर्माणि, सद्यो वा, कालतोऽयवा, भवंत्यापत्कराणीह, घोरं वापि, अल्पमेव वा ; महापापैः समानि एव तस्मात् संति तु कानिचित् ; वैज्ञानिकैस्तु निर्णीतं, वनानां नाशनेन वै,वर्षा विहन्यते चापि, तथा वेगो न रुध्यते सरितां गिरिजातानां, उपरीक्रियते ततः भूमिर्, यथा ह्यनुभूतं प्रान्ते पंचनदेऽधुना ; कृषेर्हानिस्तु महती, गोवधाद् अविचारितात्, विविधेन प्रकारेण, दुग्धाभावस्तथैव च । महापातकमेवास्ति कन्यायाः दूषणं ननु ; मानसी विकृतिः, स्तस्माद्, उन्मादानां तथा उद्भवः,संततौ विकृतिर्भूयः, इत्यनर्थपरंपरा । (२९०) समीपे एव तस्यास्ति पारदार्यमपि ध्रुवं । व्यक्तीनां अधिकारेर् यै आकरेषु अनियंत्रितैः, तेषां तथा अतिवार्धुष्यैर्, महायंत्रप्रवर्तनैः, काम-क्रोध-लोभ-मोह-संघर्षाणां विवर्धनात्, प्रसिद्धमेवास्ति इदानीं, विश्वयुद्धं प्रवर्तितं । 'विज्ञान'-रहितैर्विप्रैः पुस्तकाक्षरलम्भिभिः, स-हेतु धर्माः नोच्यंते, विश्वासोऽस्मात् जायते । विवाहादपि भोज्येषु शौचाधिक्यमपेक्षितं ; भोज्याधीना यतः शुद्धिर् विवाहोऽस्तु शारीरयोः ; न पुन'र्जाति'-मात्रेण तत् शौचं उपलभ्यते । "सर्वज्ञानमयो वेदः, सर्ववेदमयो मनुः" ; आहारशुद्धेर्महिमा, वेदेन, मनुना तथा , अन्दैर् बहुगभीरार्थैः पुनः पुनः उदाहृतः , "उपस्पृश्य द्विजो नित्यं अन्नं अद्यात् समाहितः , भुक्त्वा चोपस्पृशेत् सम्यग्, अद्भिः खानि च संस्पृशेत्; पूजयेद् अशनं नित्यं, अद्याच्चैतद् अकुत्सयन्, दृष्ट्वा हृष्येत्, प्रसीदेच्च, प्रतिनन्देच्च सर्वशः ; पूजितं ह्यशनं नित्यं बलं ऊर्जं च यच्छति ; अपूजितं तु तद् भुक्तं उभयं नाशयेद् इदं; (३००); नोच्छिष्टं कस्यचिद् दद्यात्, नाद्याच्चैव तथाऽन्तरा , न चैवात्यशनं कुर्यात्, न चोच्छिष्टः क्वचिद् व्रजेत् ; अनारोग्यं, अनायुष्यं, अस्वर्ग्यं, चातिभोजनं, अपुण्यं,

लोक विद्विष्टं, तस्मात् तत् परिवर्जयेत्" (म०) । "सत्त्वं अन्न-जनितो जन-देहः"; "यदन्नः पुरुषो भवति, तदन्नास्तस्य देवताः" (वा० रा०) ; दुष्टान्नाद् दुष्टभावाः स्युः, पापानि, नरकं ततः , प्रसिद्धा भोजनाशुद्धेरेषा अनर्थपरम्परा ; सुरापानान्म-हाऽघानि प्रत्यक्षं प्रभवन्ति हि । "पानं, अक्षाः, स्त्रियश्चैव, मृगया च यथाक्रमं , एतत् कष्टतमं विद्यात् चतुष्कं कामजे गणे" ( म० ), "ॐ अन्नपते, अन्नस्य नो धेहि, अनमीवस्य शुष्मिणः ; प्र प्रदातारं तारिष, ऊर्जं नो धेहि, द्विपदे चतुष्पदे" (वे०) ; "अन्ने सर्वमिदं स्थितं, अन्नमयं हि, सोम्य !, मनः, प्राणश्च ; अन्नं ब्रह्म; ओषधीभ्योऽन्नं, अन्नात् पुरुषः ; अन्नं हि भूतानां ज्येष्ठं; अन्नाद् भूतानि जायन्ते , जातान्यन्नेन वर्धन्ते,स वा एष पुरुषोऽन्नमय."(उ०); "अन्नाद् भवन्ति भूतानि, पर्जन्यादन्नसम्भवः" (गी०); "आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः; तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमारः, तं स्कन्द इत्याचक्षते, तं स्कन्द इत्याचक्षते" (छां० उ०) ।

( २१० ) । आहारशुद्धेरेतावान् महिमा उक्तो महर्षिभिः ; न स्वस्य 'जाति' अस्पर्शेन प्रोक्तं पद्, मा तु सिध्यति । 'शूद्राः एव हि सूदास्तु द्विजानां अभवन् पुरा, पाचनायाचयानानां, भोजने, परिवेषणे , द्विज अतिथीनां सत्कारे, राज-श्रेष्ठि आदि-वेश्मसु , इत्येतद् इतिहासाभ्यां वर्ण्यते तु पुनः पुनः । "आर्धिकः, कुलमित्रं च, गोपालो, दासनापितौ , एते शूद्रेषु भोज्यान्नाः, यश्चात्मानं समर्पयेत्" (म०) । "अथापरस्यां दिशि भीमदर्शनो वृकोदरोऽदृश्यत सिंहविक्रमः , असिप्रवेके प्रतिमुच्य शायिते, खजां च, दर्वी च, करेण धारयन्; स्वयं च तो चर्म मपीं सुमर्दितां, समुक्षितां पानक राग-षाडवैः , किलासमाऽलभ्य करेण चडायसं, सशृंगिबेरार्द्रक-भूस्तृणांकुरं ; × ततो विराटं नृपमाह पाण्डवस् , × त्वां, शत्रुहन् !, जीवितुमागतोऽस्मि; × नरेन्द्र !, 'शूद्रो'ऽस्मि, 'चतुर्थवर्णभाक्',गुरूपदेशात्परिचारकर्म-कृत्; जानामि सूपांश्च, रसांश्च संस्कृतान्, मांसानि, अपूपांश्च पचामि शोभनान्, रागप्रकारांश्च बहून्फलाश्रयान्; महानसे मे न समोऽस्ति सूपकृत् ; × 'चतुर्थ-वर्णो'ऽस्मि अहं,उग्रशासन !, न वै वृणे त्वां पदं अन्यथा ईदृशं, जात्याऽस्मि'शूद्रो' बल्लवेति नाम्ना, जिजीविषुः त्वद्विषयं समागतः ; युधिष्ठिरस्यास्मि महानसे पुरा बभूव सर्वप्रभुर्अन्नपानदः । × तमेवं उक्ते वचने नराधिपः, प्रत्यब्रवीन्मत्स्यपतिः प्रहृष्टवत्, यथैव कामस्तव तत्तथा कृतो, महानसे त्वं भव मे पुरस्कृत." (म० भा०) ।

इत्युदाहरणैः स्पष्टा याऽऽसीद् अत्र प्रथा पुरा । निष्कर्षस्त्वत्र—'शौचं' हि, भोजनो-द्वाहयोः, परं, ईप्सितं, किंतु तथैव 'जाति'-नाम्नैव साध्यते ; शीलव्यसनसा-म्येन साधनीयं हि तत् सदा । ( ३२२; आदितः २०७९ श्लोकः ) ।

---



## अध्याय ११
### यज्ञः किं ?

( १४ ) प्र० "सहयज्ञाः प्रजाः सृष्ट्वा पुरा उवाच प्रजापतिः, अनेन प्रसविष्यध्वं, एष वोऽस्त्विष्टकामधुक्" ( गी० ), इति प्रसिद्धः श्लोकोऽयं; 'यज्ञ' शब्दश्च भूरिशः, संस्कृत-'ग्रन्थेषु' दृश्यः ; कोऽर्थो, हेतुश्च, तत्र, कः ?

उ० विषयेऽस्मिन् पूर्वं उक्तं; तथापि पुनरुच्यते । द्वंद्वात्मिका हि प्रकृतिः ; अतोऽन्योऽन्यं उपाश्रितौ द्वंद्विनौ दृढसम्बद्धौ, पृथक्कार्यौ न कर्हिचित् ; प्रभवत्ये-कः एकस्मिन् काले,ऽन्यस्मिंस्तथाऽपरः ; स्वार्थस्य हृदि परार्थं, तस्य स्वार्थमेव-मेव च ; चक्रनेमिक्रमेण एतौ भ्रमतः खलु अहर्निशं । 'अहं स्यां बहुधा' इत्येषा पूर्वं स्वार्था एव च एषणा ; दम्पत्योः कामः आदौ तु 'स्वार्थः' एव, न संशयः ; अपत्येच्छा पुनस्तत्र 'परार्था', हृदि धीयते ; न पालनं अपत्यानां, पित्रोः आत्म-'बलिं' विना ; 'यज्ञस्य' च प्रधानाङ्गं श्रूयते 'बलिर्' एव हि ; आत्मनो बलिदानं च स्वस्य, वेदैस्तु सम्मतः सत्यो बलिः, परार्थाय स्वार्थत्यागो हि यो भवेत् ; न स्वार्थाय परेषां तु जीवानां हिंसनं बलिः ; अतो हि 'यज्ञपुरुषो' 'विष्णुः', यल् लोकभूतये स्वधाम्नोऽवतरन् भूमौ, आत्मानं कुरुते 'बलिं' । (१०) । "बीजैर्यज्ञेषु यष्टव्यं इति वै वैदिकी श्रुतिः ; अजसंज्ञानि बीजानि, छागं नो हन्तुमर्हथ ; नैष धर्मः सतामस्ति यत्र वध्येत वै पशुः "; 'अष्टादशपुराणेषु व्यासस्य वचनद्वयं, परोपकारः पुण्याय, पापाय परपीडनं"; "कषाय पशुभिर्दुष्टैर्धर्मकामार्थनाशकैः, शम-मंत्रहुतैर्यज्ञं विधेहि, विहितं बुधैः ; प्राणघातात्तु यो धर्मं ईहते, मूढमानसः, स वा-ञ्छति सुधावृष्टिं कृष्णाहिमुखकोटरात्"; "काम क्रोधादयो नाम कषायाः पशवः स्मृताः, मनुष्यहृदयाऽरण्ये चरन्तो नित्यं आन्तराः" ( म० भा० ) । कामोऽजो, महिषः क्रोधो, ऽश्वोऽहंकारो, भयं (मोहः) च गौः,नरस्तु अभिनिवेशो वै अस्मिता-ममतादिमान्; 'मेधेन', 'पावनेन', एषां पशूनां 'शम'-मंत्रतः शमनेनैव, सद्-

यज्ञा ,सतत संभवति वै। ऋषीणां निर्णयो ह्येष शान्तिपर्वणि वर्णित (म०भा०शां०)। तथा वायुपुराणेऽपि शुभा इद कथिता कथा—"पूर्वं त्रेतायुगमुखे यज्ञस्यासीत् प्रवर्तनं × ओषधीषु च जातासु, प्रवृत्ते वृष्टिसर्जने, प्रतिष्ठितायां वार्तायां गृहाश्रमपुरेषु च, वर्णाश्रमव्यवस्थानं कृत्वा, मन्त्राश्च, संहिता, मन्त्रान् संयोजयित्वाथ इहामुत्रेषु च कर्मसु, ( २० ), अथाश्वमेधे वितते, समाजग्मुर्महर्षय × कर्मण्यग्रेषु ऋत्विक्षु, सतते यज्ञकर्मणि, × आलब्धेषु च मेध्येषु तथा पशुगणेषु वै, हविषि अग्नौ हूयमाने देवाना देवहोतृभि , × ये इन्द्रियकात्मका देवा यज्ञभाजस्तथा तु ये, तान् यजन्ते सदा देवा कल्पादिषु भवन्ति ये , × महर्षयस्तु तान् दृष्ट्वा दीनान् पशुगणान् स्थितान् , पप्रच्छुरिन्द्र सभूय, कोऽय यज्ञविधिस्तव, अधर्मो धर्मघातायं हिंसा धर्मेप्सया तव, न इष्ट पशुवधस्त्वेष तव यज्ञे, सुरेश्वर ! × ते तु विवादेन, तत्त्वयुक्ता महर्षय , सन्धाय वाक्य इन्द्रेण, पप्रच्छुश्चेश्वर वसु, औत्तानपादे !, प्रबूहि, संशय छिन्धि न , प्रभो ! × ( राजा उवाच द्विधा वाक्य पक्षपाति उभयोस्तु यत्, ) यष्टव्य पशुभिर्मेध्यै , अथ बीजै फलैस्तथा, × एव श्रुत्वोत्तरास्ते वै युक्तामानस्तपोधना (अथ घात नृपं दृष्ट्वा,युगदोषाद्, अभाषुयन्) मिथ्यावादी नृपो यस्मात्, प्रवेक्ष्यति रसातल , वसुधा (रसा)-तल वासी तु तेन वाक्येन सोऽभवत् । ( ३० )। तस्मान् न वाच्यमेकेन बहुज्ञेनापि संशये, देवान् ऋषीन् वा उपादाय, स्वायम्भुव ऋते मनु", "सर्वधर्ममयो वेद", सर्ववेदमयो मनु ,स एवैकोऽस्य सर्वस्य विधानस्य स्वयम्भुव ,अधि यस्याप्रमेयस्य कार्यतत्त्वार्थं विद् मत "। "तस्माद्व हिंसा धर्मस्य द्वार उक्त महर्षिभि , तस्मान् न दान यज्ञा प्रशसन्ति महर्षय , अद्रोहश्चाप्यलोभश्च दमो भूतदया तप , ब्रह्मचर्यं तथा सत्य अनुक्रोश क्षमा धृति , सनातनस्य धर्मस्य मूल एतद् दुरासद , × यज्ञेन देवान् ( स्वर्गान् ) आप्नोति, वैराजं तपसा पुन , ब्रह्मण (लोक) कर्मसन्यासाद्, वैराग्यात् प्रकृतेर्लयं, ज्ञानात् प्राप्नोति कैवल्य , पञ्चैता गतय स्मृता " × (वायुपु० पूर्वार्ध, अ० ५७)। त्रेतायुगस्य चास्यैव बुद्धदेव , पुन कलौ, आवृत्तिमकरोद् भूयो हिंसा-यज्ञान् निवारयन् । 'भूत्वा उपरिचर , पृथ्वीं 'पतितो वसु', अत्र तु रहस्यार्थो भवत्येष—पुरा कृतयुगेऽभवन् धूमवद् वाष्पवद् देहा , तद्वद् व्योमगमास्तथा, त्रेतादौ दार्ढ्यमागम्य, ते रसा (भूमि)-स्पर्शिनो वसु , कामक्रोधौ वसुधातें,स्वाधर्पयेक्षुधातृषा प्रादुर्भूता ,ततोमृदा ,मांसान्नि आपिबादीपुरुदर । (४० )।

विश्वसित श्रुतेरेव अर्थो मांसप्रज्ञलोलुपै ,नवीना श्रुतय स्वेच्छाऽनुकूला रचिता अपि । अर्थो गुह्यतरोऽन्योपि कृष्णेन विशदीकृत , "यज्ञाना जपयज्ञोऽस्मि" (गी०), "जपस्तदर्थभावन" (यो० सू०), "सर्वेषामेव दानाना 'ब्रह्म' (ज्ञान)दान विशिष्यते" (म०) ; माता पिता तथाऽऽचार्य प्राण ज्ञान ददत्यपि, पालन रक्षण शिक्षा, महायज्ञा , दिने दिने , स्वार्थांशस्य विना त्यागात् प्रजाया पोषण नहि , "य मातापितरौ क्लेश सहेते सम्भवे नृणा, न तस्यापचिति शक्या कर्तुं वर्षशतैरपि" (म०) , "य आतृणोति, अवितथेन ब्रह्मणा, शिष्यस्य श्रोत्र, अमृत सम्प्रयच्छन् , त जानीयात् पितर मातर च, त न द्रुह्येत् कतमच्चनाह" (निरुक्त०) , ज्ञान तस्मै न देय, यो द्रोहशीलो भवेद्, अत , देयो लब्ध्वा वर धातु , देवानेव हि याचते । मनुनोक्ता 'महा यज्ञा ' पूर्वमेवात्र वर्णिता , परार्थबुद्धि ' 'यज्ञस्य' तत्त्व इत्येव शिष्यते , ' सहयज्ञा प्रजा सृष्ट्वा, पुरा उवाच प्रजापति —अनेन प्रसविष्यध्व, एष वोऽस्तु इष्टकामधुक्" (गी०) ; स्वय सह एव 'यज्ञेन' जजानापि प्रजापति , सहैव चापि 'यज्ञेन' प्रजा सर्वा ससर्ज स , (५०) , विना 'परार्थ भावेन' प्रसूतिर् न प्रवर्तते , 'परार्थभाव ' एवास्ति प्रजाया सर्व 'काम' धुक् , परस्परस्य साहाय्यात् , स्वार्थत्यागात् तथा अशात , धर्म्यं 'काम ' समर्पाद् सर्व सर्वैरवाप्यते । पानात् पाता, 'पति'श्च, अपि 'पिता' , मानाच्च 'मातृ'ता , गर्भस्य परिमाण यन् मीयते मातृ शक्तिभि , प्रजातानां प्रपानात् हि जननात् पालनात् तथा, सर्वो वंशकरोऽस्त्येव 'प्रजापति'–अभिधानभाक् । 'यज्ञो' नाम, 'परार्थाय', 'महाजन' हिताय च विशेषेण हि, यत् किंचित् क्रियते कर्म, तस्य वै । विना च स्वार्थदानेन परार्थ नहि सिध्यति ; परार्थ साधिते, भूय स्वार्थ चैव अपि सिध्यति , आ-मस्वार्थ बलिं कुर्वन् यजमानस्तु सद्यजि , स्वार्थ त्याग विना पित्रोर् ,नापत्यानां तु सभव , प्रजापतित्व-पितृत्व-मातृत्वानां च नैव वा , परस्परार्थं, स्वार्थानां त्यागेन तु विना क्वचित , न वर्धन मनुष्याणां, समाजस्थितिरेव वा, 'प्रसविष्यध्व एतेनैव, अयमेव हि कामधुक्' । 'स्वाथ'त्याग परार्थाय'—नून भावोऽयमेव हि 'यज्ञस्य' तात्त्विक रूपं, धार्मिक मार्मिकं तथा । (६०) । अत एव श्रुति ख्याति,"देवा , बलिं अकल्पयन् प्रजापतिं" ; विना तस्य बलिदानेन,संभव 'देवानां' नैव, तिष्ठेत् स "स्वे महिम्नि" एव सर्वदा । कृष्णोऽप्यनुवदन्नर्थं इम एव जगौ गिरा, 'प्रजापतिः ससर्ज़ादौ सहयज्ञा प्रजा इमा ' । यद्वै लोकार्थं उत्सृष्टं, धर्मशालाश्च, वाटिका ,मौर्या

धताराः, कूपाश्च, मन्दिराणि, सरांसि च, पान्थविश्रामशालाश्च, तथा वै सूतिकागृहाः, विद्यापीठाः, पाठशालाः, चिकित्सानां तथाऽऽलयाः, पन्थानो, रथमार्गाश्च, पशु-पक्षि-नर-प्रपाः, छायिनां फलिनां चापि वृक्षाणां श्रेणयः पथि, अग्रहाराश्च, सत्त्राणि, भिक्षागेहाः, सदाव्रताः, 'आपूर्त' सर्वं एव एतद् 'यज्ञस्या'न्तर्गतं ननु । "एवं बहुविधाः यज्ञाः वितताः ब्रह्मणो ( वेदस्य ) मुखे, कर्मजान् विद्धि तान् सर्वान्, एवं ज्ञात्वा विमोक्ष्यसे । द्रव्ययज्ञाः, तपोयज्ञाः, योगयज्ञास्तथाऽपरे, स्वाध्यायज्ञानयज्ञाश्च, यतयः संशितव्रताः । श्रेयान् द्रव्यमयाद् यज्ञाद् ज्ञानयज्ञः, परंतप !, सर्वं कर्माखिलं, पार्थ !, ज्ञाने परिसमाप्यते ; यज्ञायाचरतः कर्म ( निष्कर्मणि ) विलीयते" ( गी० ); 'निवृत्तं' एव 'निष्कामं' क्रियते ज्ञानिना यतः । (७०) । किंतु लोकार्थमुत्सृष्टं, सज्जनैर्यत्, परार्थिभिः, परमार्थिभिरेवापि, स्वार्थाय ध्वंसते तु यद् विनियुक्तैः प्रबन्धाय, रक्षि-सेवक-आदिभिः, राजभिर्, मन्त्रिभिश्चापि, तथैव नृपाणां पुरोहितैः, यद् वस्तु सर्वसत्ताकं, कोषो राष्ट्रियको यथा, एकसत्ताकमेवैतत् कुर्यात् कोऽपि छलेन चेत्, यथा सर्वहितं न्यासं निधिपः स्तेनयेत् स्वयं, तथा धर्मघ्न-दैवघ्न-सत्त्रघ्नाणां अत्र दुर्गतिः । "देवाः अकुर्वन् यद्, दैत्याः अविध्यन् पाप्मना तु तत्" (उ०), एवं द्वंद्वमयं युद्धं शाश्वतं पुण्यपापयोः । विवेकेन सदा कार्यं ज्ञानिना दूरदर्शिना । 'यज्ञे' सति अपरेऽप्यर्थाः रहस्याः, आधिदैविकाः, शक्तयस्तैस्तु लभ्यन्ते ऋषिभिः, योगसिद्धयः; "तृतीयं यज्ञदीक्षायां" भवेत् जन्म इति हि श्रुतिः; कामः क्रोधो भयं दर्पः तथाऽहं-भावः एव च, अज-सैरिभ-गो-अश्व-नृ-नामभिस्तत्र सूचिताः, तत्तन्मेधेषु अथ एतेषां बलिदानं क्रियेत चेत्, मानसानां विकाराणां, चित्तसंस्करणं भवेद् उत्तमं; सुकराः सर्वाः भवेयुः सिद्धयः तदा । काम्येभ्यः किंतु यज्ञेभ्यः 'महा'-यज्ञाः वराः, तरां, दैनिकाः पंच, इत्येतत् 'महा'-शब्देन सूच्यते । (८०) ।

धर्मसर्वस्वे प्रोक्ते सति, वर्णाश्रमधर्माणां प्रतिपादनं कस्मात् ?

(१५) प्र० "न तत् परस्य कुर्वीत यत् स्याद् अप्रियमात्मनः; यद्यद् आत्मार्थं इच्छेद् च तत्परस्यापि चिंतयेत्"—इत्युक्तं 'धर्मसर्वस्वं'; तत् कस्माद् अवशिष्यते वर्णाश्रमाणां धर्माणां विस्तीर्णानां प्रयोजनं ?

उ० यथा बीजं हि 'सर्वस्वं' वटस्य महतोऽपि च, तथैवात्मैक्यसिद्धान्तो बीजं धर्मद्रुमस्य वै; सूत्रभूतं परं त्वेतद् व्याख्यां स्फीतां अपेक्षते, विकासिताऽवबोधाय; बीजं

विटपितो यथा;"संमतं विदुषां ह्येतद् समास-व्यास-धारणं";भाष्यं बोधाय उपयुक्तं, सूत्राणि स्मरणाय तु; विदितेनापि बोद्धव्यं, बोद्धव्यं तानितेन च; सामान्यं अपि तु ज्ञेयं,विशेषाः अपि वै तथा। सूत्रं तद् धर्म-'मर्मैव',ममर्म न पुनर् वपुः। 'इच्छेव' चेति 'अप्रिय' चेति,सूत्रे शब्दौ तु यौ,तयोः स्फोटनं कांक्षितं; मा भूद् अर्थे भ्रान्ति-स्तयोर्यथा। स्वदते शर्करा एकस्मै, अन्यस्मै मरिचं तथा; न मिष्टं एव सर्वेभ्यो दयं, न [illegible] तथा कटु। यद् एकस्मै प्रियं, तत् तु न सर्वेभ्यः प्रियं भवेत्; एकस्यै-यापि कालेन रुचिर्भूयो विभिद्यते (९०)। "क्रमेलकं निन्दति कोमलेच्छु, क्रमे-लकः कंटकलम्पटत्वं", प्रत्यक्षमेतत्तु पदे पदेऽस्ति, यथा भृशं "भिन्नरुचिर्हि लोकः"; न सर्वथा भिन्नरुचिस्तथापि; सामान्यं अप्यस्ति विशेषितेषु। स एव पुरुषो बाल्ये एकां धारयते रुचिं, तारुण्ये कांचिद् अपरां, अन्यां वयसि मध्यमे, वार्धक्ये चेतरामेव, वयोभेदात् क्रमेण वै, चतुर्णामाश्रमाणां [illegible] धर्माः अस्माद् विभेदिताः। अन्यैवेच्छा समस्थस्य, विषमस्थस्य चापरा, इच्छा नैकांतिका ह्यस्ति, नूनं आव-स्थिका हि सा; "धर्मोऽप्यन्यः समस्थस्य, विषमस्थस्य चापरः, नह्येवैकान्तिको धर्मः, धर्मो ह्यावस्थिकः स्मृतः" (म० भा०); शिक्षकस्यापराः कांक्षाः, अन्याः दंडधरस्य च, कृषकस्य तथैवान्याः, धारकस्येतरास्तथा; आवश्यकीयोश्चाप्येषां धर्माः अनुसरंति हि; अतश्चतुर्णां वर्णानां पृथग् धर्माः प्रकल्पिताः; शिक्षकस्यापरो धर्मो, ऽपरो दंडधरस्य च, कृषकस्य तृतीयश्च, सेवकस्यान्यः एव हि, अपि वै स्व-गुणानुसारिणां "गतयो भिन्नपथाः हि देहिनां"। (१०६)। सामान्यतस्ततोऽ-र्थोऽयं सूत्राद् ग्राह्यो विपश्चिता, 'अस्य इव मे दशा चेत् स्यात्, स्वभावोऽपि तथैव च, तदा किं अहं इच्छेयं, किं च मे स्यात् तदाऽप्रियं, तदेवास्मै अहं दद्याम्, न च कुर्यां तद् अप्रियं, न अधर्म्यं यदि तद्दानं, न चाऽप्यकरणं तथा-समयोऽयं पुनस्तत्र विचारायोपतिष्ठते, यथ. अप्रियः घातकस्य, बालोऽग्निं स्प्रष्टुं इच्छति, न पूरणीया [illegible] इच्छा सा, न न कार्यो वधश्च सः; वर्णाश्रमाणां धर्माणां ज्ञानेन एवात्र निर्णयः। देश काल निमित्तानां. 'इच्छा'-पात्रा-धिकारिणां, स्वभाव-शक्ति-अवस्थानां भेदैर्धर्मो विभिद्यते। धर्मबीज-स्कंध-शाखा प्रशाखा-पल्लवादिवद् भेदाः एते; संग्रहाय सर्वेषां तु, विवेकतः समन्वयायाऽपि, कृतं वर्णाश्रम-निबंधनं; एतेन 'धर्म-सर्वस्व'-प्रयोगो नाऽन्यथा भवेत् विविधव्यवहारेषु, भिन्नेष्ववसरेषु च। "सकल्पः सरहस्यश्च वेदोऽध्येयो द्विजन्मना"; (म०) 'रहस्यं' औपनिषदं

अध्यात्मज्ञानं उच्यते, 'कल्पः' तस्य प्रयोगोऽस्ति मुख्ये धर्मस्य कर्मणि, पञ्चाश्रमाणां धर्मेश्च धर्मो मुख्यतया स्मृतः, (११०), यतो धर्माः तु सर्वेऽस्मिन् अन्तर्भूताः हि अशेषतः, महायज्ञाश्च यज्ञाश्चाप्येतदर्थं हि कल्पिताः ।

वेदस्य च इतिहासस्य च कीदृशः सम्बन्धः, कस्माच्च ?

(११) प्र० वेदस्य च इतिहासस्य सम्बन्धः कीदृशः, कुतः ?

उ० असंख्याः शक्तयः, तृष्णाः, इच्छाः, ऊर्मयः, आशयाः, अविद्याः, वासनाः, मोहाः, काम-क्रोधादिवृत्तयः; तथा ज्ञानानि अनंतानि, विद्याः, प्रज्ञाः, प्रकाशिकाः राग-द्वेषादि-तमसो, अज्ञानांध्यविनाशिकाः; तथा सर्वाणि 'कर्माणि', 'निष्कर्माणि', अपि; नित्यदा अव्यक्तरूपेण निलीयन्ते अव्यक्ते हि परमात्मनि, सर्वेषामेव जीवानां चिद्रूपेण हृदि स्थिते । विभूतीनां अनन्तानां तासां तु परमात्मनः अव्यक्तानां ननु सर्वासां व्यंजनं जगदेव हि । इतिहासपुराणं च जगतां एव वर्णनं । विना व्यक्तिं तु न अव्यक्तं बोद्धुं शक्येत कर्हिचित्; यथा सूत्रं, विना भाष्यं, विशदं तु न बुध्यते; यथा च नियमः कश्चिद्, विना उदाहरणैरपि । सूक्ष्मैर्विधीनां मूलानां, नियतीनां परात्मनः, वेदेन 'सूत्र'पदशब्दैः क्रियते प्रतिपादनं; इतिहासैस्तु तद्भाष्यं बहूदाहरणैरिति । "परोपकारः पुण्याय, पापाय परपीडनं; (१२०); पापाद् दुःखं सुखं पुण्याद्"—श्रुत्या उक्तो नियमस्तु अयं; जीवदृष्टैर्विना किंतु न बुद्धिमधिरोहति; तस्मात् पुराणेतिहासाभ्यां वेदं समुपबृंहयेत् । सर्वे वेदान्तसिद्धान्ताः, इतिवृत्तैस्तु मानवैः, शोधितैः तत्प्रयोगेण, साफल्यं यान्ति; नाऽन्यथा ।

वेदा किं न अपौरुषेयाः ?

(१७) प्र० 'अपौरुषेयाः वेदाः' इति अस्ति 'हिन्दुषु' डिंडिमः; तद् किं सत्यं असत्यं वा ? 'वेद'-शब्दः किमर्थकः ?

उ० अर्थौ विशेष-सामान्यौ वेदशब्दस्य तु स्मृतौ; (१) एकः सांकेतिकः तत्र, संहितानां चतुष्टयं; (२) निरुक्त्या यौगिकोऽन्यस्तु, सर्वं सज्ज्ञानमेव वै । अन्तर्गतो विशेषार्थः सामान्यार्थे च सर्वथा । 'विद्यते' हि इति 'विद्या' स्याद्, 'वेदनाद्' 'वेदः' उच्यते । महाभारतकारेण ख्यातं तद् शांतिपर्वणि; "अङ्गानि, वेदाः चत्वारो, मीमांसा, न्यायविस्तरः, पुराणं धर्मशास्त्रं च, विद्याः, ह्येताः चतुर्दश, आयुर्वेदो, धनुर्वेदो, गान्धर्वश्चेति ते त्रयः, अर्थशास्त्रं (शिल्पवेदः) चतुर्थं तु, विद्याः ह्यष्टादश एव तु । एतासामेव विद्यानां न्यासं आह महेश्वरः, शतानि त्रीणि शास्त्राणां,

महातन्त्राणि ससर्ज , नानार्थानि च शास्त्राणि तत सर्वाणि शंकर प्रोवाच भगवान् देव , कलाज्ञानानि यानि च ( १३० ) चतु षष्टिप्रमाणानि, आयुर्वेद च सोत्तर, अष्टादश विकल्पा सा दण्डनीतिं च शाश्वतीं, गान्धर्वं, इतिहास च, नानाविस्तरं उक्तवान्—इत्येता शंकरप्रोक्ता 'विद्या' शब्दार्थसंहिता । पुनर्भेदमहत्त्व तु तासामेव तु विस्तर , ऋषिभिर्देवगन्धर्वैः सविकल्प कृतश्च ; तत् शब्द् अभ्यस्यते लोके, 'वेद' एव तु सर्वत्र । 'वेदा' चत्वार (चत्वार) संहिता; वेदशास्त्र(विस्तर )ते स्मृता , एतेषा पारगो यस्तु स चोक्तो 'वेदपारग' "(म भा.शां अ १२२)।"मीमांसते च यो वेदान् षड्भिरंगै सविस्तरै , इतिहासपुराणैश्च स भवेद् वेदपारग" (व्यासस )।अर्थाद् 'विद्या'च वेदश्चेति अनर्थान्तरमेव हि। चत्वार 'संहिता "वेदा" संकेतेन,विशेषत ; रहस्यार्थमय त्वाच्च,दुर्बोधत्वात् तथैव च, तासां तु 'वेद' इत्येव प्राय संकेत उदित ।"यावान् अर्थं 'उदपाने' सर्वत सम्प्लुतोदके,तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानत " (गी०), इति श्लोकस्य गीताया अर्थौ द्वौ सम्भविष्यत — (१) आत्मज्ञस्य न किंचित्तु वेदेभ्यो लभ्यमस्ति वै,गंगाया प्लवमानस्य कूपेभ्य किं प्रयोजनं ? (१४०), आध्यात्मिके निष्णातस्याप्यासनस्य सर्वदा, आत्मारामात्म कामस्य, निष्कामस्यापि सर्वत , तथा प्रतीक्षमाणस्य शरीरात् स्वाद् विमोक्षण, "नाभिनन्देत मरणं, नाभिनन्देत जीवित,कालमेव प्रतीक्षेत, निर्देश भृतको यथा" (म०), "नानवाप्त अवाप्तव्य" वेदेभ्यो हीदृशस्य वै । (२) 'उदकाना' अगाधानां निधिर्यद्वत् महा 'उदधि ', वेद पूर्णो महार्थाना,तद्रहस्यस्य वेदिता, हि अधिभूताधिदैवादि ज्ञानाना महतामपि । ज्ञानेभ्यस्तादृशेभ्यस्तु सर्वदाऽस्ति प्रयोजन ईदृशाणा, महर्षीणा; जगत्कार्येऽधिकारिणा । समीक्ष्य च परीक्षार्थं, उद्भियन्तोऽत्र केचन श्लोका , सदायिता शब्दा प्रयुज्यते प्रमाणभि आर्षेषु , भवेद् एव सम्भाव्यं अर्थनिश्चिति । "न स्विद् एतेऽप्युच्छिष्टा इति, न वा अजीविष्य इमान् अखादन्, इति होवाच, कामो मे 'उदपान' इति" ( छा० उ०, १-१० ४ ), "काम", इच्छात", मे मम 'उदकपान' लभ्यते इत्यर्थ " (शांकरभा०), "अदृश्यत महाकूपस्तृणवीरुत्समावृत ,समावृत्य 'उदपान'स्य कृकलास स्थितो महान् '(म० भा० अनु० १०५ ) , (१५०), ' अथापश्यद्यतीन् सर्वान् अंगुष्ठोदरवर्ष्मण ,क्लिश्यमानान् मन्दबलान् गोष्पदे 'सम्प्लुतोदके' " (म० भा० आ० ३१) , "यथा 'उदपाने' महति (ऽल्पमहति) सर्वत 'सम्प्लुतोदके',एव सर्वेषु वेदेषु आत्मानमनुजानत "

(सनत्सु० गी०);"यथा वप्रे वेगवति, सर्वतः 'संप्लुतोदके', नित्यं विचरणाद् बाधः, तथा राज्यं प्रमादतः" ( म० भा० शां० १०३ ) ; 'महत्तत्त्वं', 'बुद्धितत्त्वं', जगद्व्यापि तु यत् सदा, तदेव "विष्णुर्जिष्णुश्च ब्रह्मा शम्भुश्च शंकरः", इति पौराणिकैर्वाक्यैः पूर्वमेव प्रदर्शितं ; तस्य प्रेरणयैवात्र 'विद्याः' प्रादुर्भवन्ति वै, हृदयेभ्यो मनुष्याणां, ऋषीणां, विदुषामपि ; सन्ति 'वापीश्वरी'भूताः जीवाः 'विष्ण्वादि'-नामकाः, महान्तश्च महात्मानो महैश्वर्यैश्च संयुताः, परात्मनोऽनन्तसृष्टौ अधिकारिपदं गताः, ब्रह्मांडानां नियन्तारो, मानवानां यथा नृपाः ; "प्रादुः करोति धर्मार्थं पुराणानि यथाविधि, द्वापरे द्वापरे विष्णुः व्यासरूपेण सर्वदा;"...संख्या चेद् रजसां अस्ति, विश्वानां न कदाचन ; ब्रह्मविष्णुमहेशानां तथा संख्या न विद्यते ; प्रति विश्वेषु सन्ति एव ब्रह्म विष्णुमहेश्वराः ;""( १६० ) ; कर्मणा इन्द्रो भवेज् जीवो, ब्रह्मा वापि स्वकर्मणा, सुरत्वं च, मनुत्वं च, राजेन्द्रत्वं लभेत् नरः, कर्मणा एव शिवत्वं च, गणेशत्वं तथैव च" ( दे० भा० स्कं० ९ ) । यथोक्तं ब्रह्मसूत्रेषु, देवीभागवतादिषु पुराणेष्वपि ; ते चापि बुधान् आविश्य कुर्वते शास्त्राणि आविः, मनुष्याणां शिक्षायै हितकाम्यया ; तानि अभिद्रुत्य दैत्यैश्चाप्याविश्यन्ते हि पाप्मना, "अकुर्वन् खलु यद् देवाः अविध्यंस्तत् तु पाप्मना, दैत्याः सपदि अभिद्रुत्य" (उ०), इति अस्ति औपनिषदी श्रुतिः । अहिताय मनुष्याणां हितध्याने च, भूरिशः ; यथा वेदास्तु अहिंसार्थाः हिंसायै व्यंसिताः अपि । 'अपौरुषेय'-शब्दश्च 'रोचनार्थो' हि केवलं, प्रख्यापयति वेदानां उत्कृष्टत्वं, अपेक्षया । 'अपौरुषेयः' पुरुषः स्वयमेव यदा, तदा सर्वमेवापौरुषेयं, यत् किंचिज् जगतीगतं । ( १७० ) । परमात्मा स्वयं चैव 'परमः पुरुषः' स्मृतः ; महाभूतानि सर्वाणि, गुणास्तेषां तथैव च, शब्दस्पर्शादयः सर्वे, प्राकृताः वैकृतास्तथा, सामान्याश्च विशेषाश्च, सर्वे 'ब्रह्म'-कृताः इति ; सर्वेऽपि 'पुरुषाः' ( मनुजाः ) 'तस्य' काष्ठपुत्तलिकाः इव ; तेनैव निर्मिताः सर्वे ; 'श्रीपो' निर्मितयः तु याः संसृतौ प्रतिभासते, ताश्च 'तस्यैव' मूलतः । मानवं वाङ्मयं सर्वं, सन्वेदं, सार्वभौमिकं, 'अपौरुषेय'मेवातः ; 'पौरुषेय'मथापि वा, यतो हि संहिता-मंत्राः अपि 'दृष्टाः' महर्षिभिः । नैको भावो, विचारो वा, व्युत्पत्तिर् वा, उद्यमोऽपि वा, नासंख्यजीवचित्तेषु न उदितो यः पुनः पुनः ; न च शब्दो, ध्वनिर्वापि, यो न स्यात् सार्वकालिकः ; अनन्ते चिन्मये ब्राह्मे सर्वानुभवसागरे, त्रैकालिकाः अनुभवाः सर्वे सन्त्येव सर्वदा ; "अदृष्टम्, अननुभूतोऽर्थो न मन

स्प्रष्टुमर्हति ; स सर्वधीवृत्त्यनुभूतमर्वः" ( मा० ) ; "विदधि सर्व-नाम-रूप-कर्माणि ब्रह्म एव हि" (उ०); "अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः ; कर्मजानि शरीराणि, शरीराकृतयस्तथा ; (१८०) ; महाभूतानि नित्यानि भूताधिपति-संश्रयात् ; तेषां च नित्यसंवासो, न विनाशो वियुज्यतां" ( म० भा० आश्रमवा० अ० ३६ ) ; अचलोऽधिपतिः स्थाणुः सर्वगश्च सनातनः (गी०), नित्यानि, आविस् तिरो-भावेद्, भूतान्यपि च सर्वदा । 'कूटस्थ'-नित्यता एकस्मिन्, अपरेषु 'प्रवाहिणी' । सति एवं, 'पौरुषेयं' किं वक्तुं शक्येत तावतः ? प्रत्येकस्यापि कार्यस्य कारणं किंचिद् दृश्यते ; तत्कारणं स्वयं कार्यं भवत्यन्यस्य कस्यचिद् कारणस्य ; एवं अस्ति इयं अनन्ता एव परम्परा, कार्याणां कारणानां च, मितानि एव तु यानि ये । अमितं कारणं स्वैकं, निदानं, आदिकारणं, सार्वत्रिकं, सार्वदिकं, सर्वकारणकारणं, सर्वव्यापि, सदाव्यापि, सर्वेषां प्रेरकं परं ; 'अपौरुषेयं' तत्वाभि, 'सार्वपौरुषं' एव वा ; 'परमः पुरुष.' सोऽयं, 'सर्वेऽपि पुरुषाः' स वै ; कार्यं तस्यैव सर्वं, यत् किंचिद् भवति कुत्रचित् ; 'अपौरुषेयं' इति वा, "पौरुषेयं" इतीव वा, सर्वं हि शक्यते वक्तुं, जगदन्तर्गतं तु यत् । प्रसंगतः इदं वाच्यं—'कवौ' 'कस्मिन्' 'परे' सति, सर्वज्ञे सर्वधीवृत्तौ, केषांचिद् शब्दपाठिनां कोऽयं 'मौलिकता'-भावः,को'ऽपूर्वत्व'-भ्रमो महान् ? ! (१९०) । यत् किंचिदपि सच्छास्त्रं सज्ज्ञानप्रतिपादकं, 'विद्या'-अविष्करणं नूनं तत्सर्वं परमात्मनः ; यथा 'विद्या'ऽपि, तस्यैवासज्ज्ञानेषु आविर्-भा-व्यते । ज्ञान विज्ञान-शास्त्रेषु यत्तथ्यं प्रतिपादितं, 'पौरुषेयं' न केनापि वक्तुं तदिह शक्यते ; आर्षैस्तु पुरुषैः, काले काले, तत् तत्त्वदर्शिभिः 'दृष्ट'मेव, तथैवान्यैः, 'श्रुतं', 'सूक्तं', 'स्मृतं', तथा ; न 'कृतं' खलु केनापि, नवाद्यौ केनापि 'निर्मितं' । यद्दूर्यं च, महार्थं च, यच्च विस्मयकारकं, बहूनां अपरिचितं, 'प्राकृतातीतं' एव च, 'लोकोत्तरं' तदेव इह 'अपौरुषेयं' इति ईर्यते ; संकेतार्थं प्रवृत्तोऽयं शब्दो, न खलु तावतः । यथा एव 'अलौकिकी बुद्धि.', 'लोकातीतः पराक्रम' ; लोकात्मके तु संसारे सर्वं यद्यपि वस्तुतः । द्वौ द्वौ मिलित्वा, चत्वारः; शतं च, दशधा दश ; लौह-अश्मनोः घट्टनाच्च, संधानां घर्षणात्तथा, गृहेषु उत्पाद्यते वह्निः, दावाग्निर्जायते घने ; दुग्धपानाद् भवेत् पुष्टिः , विषपानात् मृतिस्तथा ; इतीदृशानि तथ्यानि 'पौरुषेयाणि' सन्ति किं ? 'दृश्यंते' पुरुषैस्तानि, 'क्रियंते' परमात्मना । "न अमन्त्रं अक्षरं

किंचित्, न च द्रव्य अनौषध", मन्त्रत्व औषधत्व च 'अपौरुषेय' इव खलु। (२००)। विधातृ विहितान्येव तादृक्तथ्यानि अशेषत। प्रकृते नियमाः सर्वेऽपौरुषेयास्तु सुस्फुट, तेषा च वर्णन शब्दैस्तादृश हि भविष्यति। अनन्त हि जगद् यस्माद् अनन्त तस्य 'वेदन', "वेदा अनन्ता" इत्येव वेदैरुक्त स्वयं सत। ऋषयो नहि कर्त्तार तेषा, द्रष्टार एव हि। "इष्ट, दत्त, तपो, ऽधीत, व्रतानि, नियमाश्च, ये, सर्वं एतद् विनाशान्त, ज्ञानस्यान्तो न विद्यते" (म० भा० अश्व०), "इष्ट च मे स्यात्, इतरच्च न स्यात्, एतत्कृते कर्मविधि प्रवृत्त, इष्ट हि, अनिष्ट च, न मा भजेता, एतत्कृते ज्ञानविधि प्रवृत्त, त्यज धर्मं असदृत्वाद्, अधर्म चाप्यहिप्सया, उभे सत्यानृते बुद्ध्या, बुद्धि परमनिश्चयात्, अनृत त्यज सत्येन, सत्य चोभयदर्शनात्, उभे सत्यानृते त्यक्त्वा, येन त्यजसि त त्यज" (म० भा० शांति०), "एष नित्यो महिमा ब्राह्मणस्य, न वर्धते कर्मणा नो कनीयान्, तस्यैव स्यात् पदवित्, त विदित्वा न लिप्यते कर्मणा "पापकेन" (बृहद्० उ०), "तन्त्र एके युवती विरूपे (रूप रहिते, विकृति रूपे वा, विद्याऽविद्ये परमात्मन) अभ्याक्राम वयत षण्मयूख (षड्महद्गुण, तृष्णया सह सप्तमद, सोरसम्प्रदाय, देह वा षाट्कौशिक), प्राप्यास्तन्त्रैंस्तिरते, धत्तेऽन्या, न अप वृञ्जाते, न गमाते, अन्त' (अथर्व०१० ७,४२), (२१०)। अपौरुषेया विद्या चापि अविद्या चापि, उभे अपि, तयोरेव जगत्सर्वं कार्यमस्ति, न सशय, जगदन्तर्गत सर्वं यत्किंचिद्वाङ्मय, तथा अपौरुषेयमेवास्ति, पारमार्थिकदर्शनात्, व्यावहारिक-दृष्ट्या तु बहुधाप्य, महोत्तम, असाधारणमेवापि, पौरुषेय तदुच्यते। (२१२, आदित ३२९२ श्लोका)।

---



## १२ अध्याय

धर्मग्रथेषु लभ्यानि जन्मवर्णबोधकानि वाक्यानि किं न मान्यानि ?

(१८) प्र० लभ्येषु धर्मग्रन्थेषु, 'जन्म वर्ण'-समर्थका श्लोकास्तु बहव सति, स्वल्पा 'वर्णस्य कर्मणा', न मान्य 'जन्मपक्षीय' वचनानां किं अतो मत ?

उ० "नवधाऽथर्वणो वेद, बाह्वृच्य चैकविंशति, सहस्राध्वा साम-वेद, यजुरेकशताध्वक" (पतं० महाभाष्य), सर्वमेतद्विरहित, किंचिदेवा-

वशिष्यते। "ब्रह्मा अध्यायसहस्राणां शतं चक्रे स्वबुद्धिजं, यत्र धर्मः, तथै-वार्थः, कामश्चैवानुवर्णितः, चतुर्थो मोक्षः इत्येव पृथगर्थः पृथग्गुणः। युगानामा-युषो ह्रासं विज्ञाय, भगवान् शिवः", दशाध्यायसहस्रैस्तन् महच्छास्त्रं समक्षि-पत्। सहस्रैः पंचभिश्चापि संचिक्षेप पुरंदरः। बृहस्पतिस्त्रिसाहस्रैः; सहस्रे-णैव च उशनाः" । ( म० भा० शां० ५८ ) तदध्यायसहस्रं प्रति एव उश-नसे गतं; मर्त्यलोके न कुत्रापि केन चाप्युपलभ्यते। 'वृद्धो मनुः' श्रूयते च, लभ्यते न तु साम्प्रतं । इतिहास-पुराणं च "शतकोटि-प्रविस्तरं" आदिकाले-ऽभवच् चेति श्रूयते; न तु लभ्यते। आयुः-काम-अर्थ-शास्त्राणां ग्रन्था: प्राप्यास्तु ये ऽधुना, आदौ तेषां खलु सर्वेषां कथ्यते चेदृशी कथा; कोटिशो विस्तरस्त्वासीत्, युगह्रासात्तु ह्रस्वता। ( १० )। एतेषामर्थवादानां अर्थः एकस्त्वयं हि, यत्, शीलस्य भारतीयानां ह्रासाद् विद्यापि अविनश्यत्। भूयांसो लोपिताः ग्रन्थाः आर्षाः, स्वल्पाः तु रोपिताः; अनार्षाश्चानुदाराश्च नवीनाः लिखिताः, भूरा शील-शक्ति बुद्धि-धिया-औदार्य-सात्त्व-अनुरूपिणः। स्वल्पान्येव हि रत्नानि, लोष्टकुड्यं तु भूरिशः; प्रकृतेर्नियमो ह्येष, किमाश्चर्यं अतो, यदि स्वल्पाः लभ्या 'कर्म-वर्ण'-श्लोकाः, भूरि तथा इतरे ? अन्यद् अत्र विचार्यं च; सर्वं द्वंद्वमयं जगत्; प्रत्येक-विषये तस्मात्, पक्षौ द्वौ सम्भविष्यतः; उत्तरे च, प्रति प्रश्नं प्रश्नं, द्वे भवतस्तथा; पक्षपातेन चान्यस्य पक्षस्यैतरस्य, तत्र वै, अस्यति व्यवहारश्च, विवादाः प्रभवन्ति च; अत एव हि निर्णीतं प्राज्ञैः सर्वार्थदर्शिभिः, "आश्रयेन्मध्यमां वृत्तिं, अति सर्वत्र वर्जयेत्"; "अतिवादांस्तितिक्षेत, नावमन्येत कंचन", ( म० ); "आत्म-क्रीड, आत्मरतिः, क्रियावान्, विजानन् विद्वान् भवते नातिवादी" ( उ० ); "उभय (–'अति'–) कोटि-स्पर्शिनी प्रकृतिः, पुरुषः मध्यस्थः" (भावप्रकाशः); ( २० ); "यस्मिन् विरुद्धगतयो ह्यनिशं पतन्ति, आनन्दमात्रमविकारमहं प्रपद्ये; तस्मै समुन्नद्धविरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे" ( भा० ); "तदेजति, तन्नैजति, तद् दूरे, तदु अन्तिके, तदन्तर् अस्य सर्वस्य, तदु सर्वस्यास्य बाह्यतः; अणोरणीयान्, महतो महीयान्, आत्माऽस्य जन्तोर्निहितो गुहायां, तं अक्रतुः पश्यति वीतशोको, धातुः प्रसादान्, महिमानमात्मनः; एतं संयद्वाम इत्याचक्षते, एतं सर्वाणि वामानि अभिसंयन्ति" ( उ० ); सर्वाणि वामानि अखिलानि यैवं, सर्वाणि संयच्छति तानि चापं, मनीषिणोऽतः प्रवदन्ति संयद्-

वामेति नाम्ना पुरुषं पुराणम् । "न निरोधो, न च उत्थानं, न बन्धो, न च मोचनं, न मुमुक्षुर्, न वा मुक्तः, इति एषा परमार्थता ; न पुण्यं न च वा पापं न ऊर्ध्वं, नैवापि अधोगतिः, न सुखं, न च वा दुःखं, इत्येषा परमार्थता ।" एको, नाना; ऋतं, माया; विद्या, ऽविद्या; शमो, श्रमः ; सामान्यं च, विशेषश्च; दैवं, पौरुषमेव च ; तथ्यं, मिथ्या च; सद्, असत् ; निद्रा, जागरणं तथा ; अहर्, निशा ; श्रमः, क्रीडा; कामो, नैष्काम्यमेव च ; प्रवृत्तिश्च, निवृत्तिश्च; कर्म, निष्कर्म वै तथा ; ( ३० ); "द्विविधं श्रूयते वाक्यं, कुरु कर्म, त्यजेति च", "कर्मणैव हि संसिद्धिः", "विद्ययाऽमृतमश्नुते", "नियतं कुरु कर्म त्वं", "ज्ञानवान् मां प्रपद्यते", "ज्ञानयोगेन सांख्यानां, कर्मयोगेन योगिनां"; प्रकृतिर्, विकृतिश्चैव; प्राधान्यं, गौण्यं एव च ;—द्वंद्वान्यसंख्यानीदृंशि दृश्यन्ते जीवने सदा ; द्वंद्विभ्यामुभयाभ्यां च कार्यमस्ति नृणां मुहुः । द्वाभ्यामेव हि चक्राभ्यां रथस्य स्याद् यथा गतिः, एवमेव समाजस्य व्यवस्थायां अपेक्षिते, 'मुख्य'-'गौण'-स्वरूपेणास्त्युभये, 'कर्म'-'जन्मनी' । वारं वारं पूर्वमुक्तं, 'कर्म' 'जन्माऽनुसारि' चेद् कस्यापि, अवश्यं 'वर्णो' भजेज्जन्मानुसारि सः ; नो चेद् एवं, तदा तु स्यात् 'कर्मणैव हि वर्णता' । बाधकैः सर्वदा उत्सर्गाः अपवादैर् अनुद्रुताः ; उभयेऽपि भवेयुस्ते मान्याः, हेतुविशेषतः, सामान्यश्च विशेषाश्च, स्वस्मिन् स्वस्मिन् स्थले स्थले ; "अपवादो ननु उत्सर्गं व्यावर्तयितुं ईश्वरः" ( रघु० १५,७ ) ; अपवादो बलीयान् वै उत्सर्गात् स्वस्थले मिते ; उत्सर्गस्तु प्रभवति साधारणतयाऽन्यतः ; सामान्यशास्त्रं उत्सर्गं वक्ति साधारणं, पुनः, ( ४० ), विशेषशास्त्रेण तु तद्, यत्र तत्र, हि बाध्यते, अवस्थासु विशेषासु, विशिष्टैः कारणैरपि ; एतेऽपवादाः स्वीकार्याः, अनुमान्यास्तथा सदा, प्रसह्येनापि मनसा ; संघर्षो दारुणोऽन्यथा, उत्सर्गेषु अतिनिर्बन्धाद्, अपवादावहेलनात् । अपवादोऽपि नियमः, उत्सर्गो नियमो यथा । परेण नियमेनैव नियमो बाध्यते ऽपरः, इत्यय चापि नियमः प्रकृतेरेव दृश्यते । आचाराणां तथा भेदाः दृश्यन्ते तु सहस्रशः, 'हिन्दूनां' वै प्रतिपद, त्रिसहस्रासु जातिषु ; यद्येषां वर्णनं कुर्यात् कोऽपि, ग्रन्थो महान् भवेत् । प्रत्यक्षमपि सति एवं, मूढग्राहो दृढो महान् , 'शुद्धो ममैव-आचारः', 'पवित्रश्चाहमेव वै' । अवस्था-भेदतो द्वंद्वी, प्रतिद्वंद्वी ततोऽन्यदा, प्रभुत्वं प्राप्नोति, चक्रनेमिक्रमेण हि । प्रकृतेर्विकृतिश्चैव ; विकृतेश्चापि संस्कृतिः ; संस्कृतेश्चापि विकृतिः; सर्वासां

प्रकृतौ एव , चक्रावर्त्तिनि ससारे भवत्येव पुन पुन , एवमेव पुनरावृत्ते तु, बलीयो 'जन्म' वै भवेद् , अपरस्मिन्नथा काले, बलीय 'कर्म' एव हि । (५०) प्रतिष्ठितार्यमर्यादे समाजे, सुव्यवस्थिते, कुलेषु एकैक धर्मेषु प्रवृत्तेषु अव्यतिक्रम, स्वभाव-गुण धर्माणा 'जन्म' हेतुर्भविष्यति । मर्यादासु विनष्टासु, प्रवृत्ते वृत्तिसकरे, ब्रह्मचर्ये च विप्लुते, व्यभिचारे च विस्तृते, ( मोक्षधर्मे भरद्वाजो व्याजहार यथा भृगुम्, "सर्वेषा खलु वर्णाना दृश्यते वर्णसकर " म० भा० शा० ), लुप्ते कृष्याधिकाराणा विभागे, धर्म-कर्मणो, श्रमाणा च वृत्तीणा, जीविकाना तथैव च, वैशिष्ट्याना साधनाना सकरे सर्वत स्मृते, कर्मणैव हि वर्णस्य निर्णयो भविता ध्रुव, सस्काराय समाजस्य, व्यवस्थार्थं पुनस्तथा । अथ ननु महान् दोष जन्म वर्णाग्रहे ध्रुव, 'जन्मनैवाहमुच्चोऽस्मि, नीचस्त्व चैव जन्मना', 'त्वद्गृहे त्व पवित्र स्या , पवित्रोऽह तु मद्गृहे', 'यथा श्रेष्ठ पवित्रोऽह तथा नैवान्यजातय ', इति भावाः भवत्यस्मात् चातुर्दिग्द्वेषकारिण । नैकोप्यणु शरीरेऽस्मिन्, 'शीर्यमाणे' पदे पदे, योऽनन्य कोटि योनीषु भ्रान्तो न दशास्वथासु यै, वैहङ्गमीषु, पाट्टीषु, कौर्मीषु, जरायुषु च, शौकरीष्वपि, वार्मीषु ( कृमीणा ), दैवीष्वपि, पुन पुन , सर्वाण्यपि शरीराणि पञ्चभूतमयानि हि, पञ्चभ्य एव जायते, पुनर्यान्ति च पञ्चता, प्रत्यक्ष प्रत्यह चैव परीवर्त्तोऽत्र 'खाद्य' यो , विष्ठा ओषधीना 'खाद्य' च, अपि अत्र ओषधयो नृणा , ( "ओषध्य फलपाकान्ता", गोधूमचणकादय , म० ), "स्थानाद् बीजाद् उपष्टम्भान् निस्यन्दान् निधनादपि, काय आधेय शौचत्वात् , पण्डिता हि अशुचि विदु " ( यो० सू० भा० ), "अस्थि स्थूण, स्नायु युत, मास शोणितलेपन, चर्मावनद्ध, दुर्गन्धि, पूर्ण मूत्र पुरीषयो , जराशोकसमाविष्ट, रोगायतनमातुर, रजस्वल अनित्य च" शरीर मानव सदा ( म० ), एतादृश्या अथ स्थाया, देहाना, जगतस्तथा, 'अहमेव पवित्रो,ऽह अस्पृश्योऽस्पृश्यजातिभि , शुद्धो ऽभिजनवानस्मि'—कोऽयमेष मदभ्रम ?

शुचि अशुचिशब्दौ निरर्थकौ किम् ?

( १६ ) प्र० तर्हि शब्दौ किं एतौ तु, 'शुद्धो ऽशुद्धो', निरर्थकौ, 'अपवित्र' पवित्रश्च' अपि, 'अशुचि शुचिर्' एव च ?

उ० नैव, सदैव सापेक्षौ किंतु, नैकान्तिकौ हि, तौ । नहि अविद्धा ऽशुचि तया, शुचिता स्वस्मि कुत्रचित् , मर्त स्थित सदा नून अपि द्विजतमोदरे , अतो

जाग्पु-पो-पो प-जातीनां तासां नास्ति स्मृतौ प्रमा। यथा हि—ब्राह्मणाः संति, गौडाः, वांगाश्च, गौर्जराः, काश्मीरकाः, नाम्बुद्रियाः कौंकणाः, मालवास्तथा, सारस्वताः, द्राविडाश्च, अपि औदीच्याः, मैथिलाः अपि, महाराष्ट्राः, कान्यकुब्जाः, शारयूपारकास्तथा, तेलुगू-त्वल-कालिङ्गाः, शाकद्वीपिनः एव च; प्रायशो देशभेदेन जातास्ते भिन्नसंज्ञकाः; विवहंति न चान्योऽन्यं, न आशयंति परस्परं, स्वं स्वं श्रेष्ठतम चापि प्रत्येकं खलु मन्वते। क्षत्रियाश्चापि शतधा संति भारत-भूतले; सूर्यवंशिनः एवैके, ह्यपरे सोमवंशिनः, रघुवंशभवाश्चान्ये, यदुवंशभवाः परे, सोलंकिनः, प्रमाराश्च, चोहानाः, वैसवारकाः, शीशोदियाख्याश्चैवान्ये, राठोराख्यास्तथाऽपरे, विसेनाः, डोगराः, थावा-गुरङ्-इत्यादि नामकाः; उपवीतं धारयंति केचिन्, नैव तथाऽपरे। (१००)। वैश्याश्च शतधा ह्येवं भारते साम्प्रतं स्थिताः; खंडेलवालाः, श्रीमालाः, जायस्वालास्तथैव च, अग्रवालास्तथोस्वालाः चूरूवालास्तथाऽपरे, बीसा-दूसा-रौनिहार-रोहतगी-सेठ-चेटिनः, रीतिभिर्भाषया देशैर्वेशैरितैश्च भेदिताः। स्वर्णी कायस्थभेदाश्च, साव दोसाधनास्तथा, भवंति बहवश्चान्ये, 'गणनायां' तु येऽकिताः; क्षत्रियान् वा ऽथ वैश्यान्वा ते आत्मानं तु मन्वते। तथैव शतधा शूद्राः व्याप्ताः भारतभूमिषु, माली-कुम्हार-ग्वालाश्च, अपि ऊँटहार-गडेरियाः, सुनाराश्च, लुहाराश्च, ठठेराश्चापि, जाटवा., कोरी, कुम्री च, काछी च, कुर्मी चेत्यादयो बहु, एतेषु केचिदात्मानं स्व-स्वरूपमनुरूपत., वैश्यान्वा, क्षत्रियान्वापि, ब्राह्मणान्वा तथा पुनः, देशकालानुसारेण मन्वते हि, यथोचितं। विवादोऽपि महांस्तत्र प्रांते प्रांते विजृम्भते, 'ब्राह्मणेतरवर्णानां' 'ब्राह्मणानां' गणान्तरे; 'ब्राह्मणाः' वयमेवात्र, सर्वेऽन्ये शूद्रजातयः, आगृहन्त्येवं एके तु, तथान्ये च विरुध्यते। (११०)। एतानि जाति-नामानि न 'स्मृतानि' तु कुत्रचित् स्मृतिकारैर्, न चैतासां विवादशमनाय च विदेश. कोपि लिखितः, वर्णानां निर्णयाय च। "तस्मात्, कौन्तेय!, विदुषा, धर्माधर्म-विनिश्चये, बुद्धिमास्थाय लोकेऽस्मिन्, वर्तितव्यं कृतात्मना; × न धर्म. परिपाठेन शक्यो, भारत!, वेदितुं" (म० भा०); "समाम्नानेन कृत्स्ना तु, शक्या लक्षणकर्मणा, समाप्तिः सर्वधर्माणां" —आपस्तम्बोऽप्यब्रवीदपि: (धर्मसू०)। सामान्यलक्षणैरेव धर्मरूपं तु बुध्यते, असंख्येयाः विशेषास्तु व्याख्याऽकांक्षाः पदे पदे। अत्राऽविदं छलेन एव सत्यं, तत्परिपालयेत्, आत्मार्थे च, परार्थे च, सर्वथा सत्यवाड्, नरः; "नास्ति सत्यात् परो धर्मः, न सत्याद् विद्यते परं" (म० भा०)—साधारणोऽयं उत्सर्गः; सापवादस्तथापि असौ;

''सत्यस्य वचनं श्रेय , सत्याद् अपि हि वदेत् , यल्लोकहितम् अत्यन्त तत्सत्यमिति न श्रुत ' (म० भा०), ''न नर्मयुक्तं अनृतं हिनस्ति, प्राणात्यये, सर्वधनापहारे, न स्त्रीषु (अबुद्ध्या हस्तिनीषु अकार्ये), पञ्चानृतानि आहुर् अपातकानि'' ( म० भा० शांति० )। आपस्तम्बोक्त सूत्रस्य तु एतद् एकं निदर्शनं। ( १२० ) । भूकम्पेनेव सहसा यथा विध्वस्ते पुरे, शिल्पकारादि संगृह्य, नव निर्मीयते पुर, हिन्दू समाजस्य तथा नवनिर्माणमीप्सितं। ''तपो-बीज-प्रभावैस्तु, ते गच्छन्ति, युगे युगे, उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मत , "शूद्रो ब्राह्मणतामेति, ब्राह्मणश्चैति शूद्रता, × कुलान्यकुलतां यान्ति, कुलतामकुलानि च" (म०)। सन्ध्याधे सकुले जाते, जातीनां, धर्मकर्मणां, विना पुन संस्करणं समाजस्य, न नो गति ।

आप्तदर्शितमार्गेण, कर्मवर्णोत्कर्षेण च, सकल सभ्यमत्याय, अत सनातना यदि बुभुत्सेरन् कांदि यथा, त्यक्त्वा कृत्वा दृढ तथा, ''भविष्यतीत्येव मन कृत्वा सतत अव्यथा '' (म०भा०), प्रचरेयुश्च सर्वत्र, बुद्धवत्, शंकरादिवत्, सिद्धान्तान् स्थापयन्तश्च कर्मवर्णनिबन्धनान्, बोधय नश्च, श्रावयेयु तेषां, सर्वान् जनानपि।

''अव्रतानां, अमन्त्राणां, जातिमात्रोपजीविनां, सहस्रश समेतानां परिषत्त्वं न विद्यते, य वदति तमोभूता मूर्खा धर्मं, अतद्विद , तत्पापं शतधा भूत्वा तद्वक्तॄन् अनुगच्छति'' (म०), (१२०), "सर्वेषां य सुहृन्नित्य, सर्वेषां च हिते रत , कर्मणा मनसा वाचा, स धर्मं वक्तुमर्हति" (म०भा०), 'धर्माधर्मौ न चरत 'आवां स्व ' इति वादिनौ; न गन्धर्वा , न पितर , देवा आचक्षते नहि, 'धर्मोऽयं, पापधर्मोऽयं', लोके प्रत्यक्षतां गता , सम्यग्विनीता , 'वृद्धा आर्या ', आत्मवन्तो, अलोलुपा , अदाम्भिका प्रशंसन्ति य, स धर्मो भवेद् ध्रुव, य पुनस्तं तु गर्हन्ते, सोऽधर्म इति निश्चित '' ( आप० धर्मसू० ), विचारणार्थं अर्थानां अर्यो योऽन्यो भवेत् तु य , अर्यते च सहायार्थं आर्तैं, 'आर्य ' स उच्यते। पर्यायेषु ईश्वरस्य, 'अर्य ' निघण्टौ किल पठ्यते, ''आर्य ईश्वरपुत्रो" ऽस्मीति, एव नैरुक्त मत, स्वामिनि 'ईश्वर' शब्दोऽयं, ' अर्य स्यात् स्वामि-वैश्ययो '' । ''कर्तव्यम् आचरन् कामं, अकर्तव्यम् अनाचरन् , तिष्ठति प्रकृताचारे य स आर्य इति स्मृत '' (शब्दस्तोम महानिधि )। ''वृत्तेन हि भवत्यार्यो, न धनेन, न विद्यया'' (म०भा०) , ''न वैरं उद्दीपयति प्रशान्तं, न दर्पं आरोहति, नास्तं एति, न दुर्गतोऽस्मीति करोति अकार्यं, त आर्यशील सुहृद् आहुर् आर्या , न स्वे सुखे वै

कुरुते प्रहर्षं नान्यस्य दु खे भवति प्रहृष्ट, दत्त्वा न पश्चात् कुरुते ऽनुताप, स आर्यशब्देन भवति अथार्या" । (१४०) । "समर्पिण, धर्मकामा, युक्ता, लोकहिते रता, अरूक्षाश्च, तथाऽयुक्ता" लोकैर्निर्णयकर्मणि, निर्णयति यथा, आचार स एव स्यात् सुसम्मत (तै०उ०), यथैव परिकल्प्यते, लौकिके राजशासने, 'क़ानून'-इति यथा धर्मो, 'असेम्बली-कौन्सिला'दिभि । मौर्य-साम्राज्यकालस्य, गुप्तानां समयस्य च, ताम्रपत्रेषु शब्दोऽयं, 'आयुक्त' इति, लभ्यते, 'कायस्थ श्च, 'नियुक्त'श्च, सकेतौ इतरौ तथा, लोकस्य प्रिय, 'आयुक्त', प्रजाभि स्वीकृत, वृत ; अधिकारे 'नियुक्त'स्तु, यो राज्ञा एव नियोजित', 'कायो' हि लेखशालाऽभित्, पत्राणा यत्र सचय, सम्बन्धिनां शासनस्य, 'काय स्थ' तत्र य स्थित, कुरुते लेखकार्यं च, पत्राणां चापि रक्षणं । "कार्याकार्य-विमर्शेषु विचिकित्सा भवेद् यदि, यथा वर्त्तेयुर आयुक्ता, वर्त्तितव्य तथा" एव तु (तै०उप०) । 'क' आत्मा तु भवते यस्मिन्, देह काय स उच्यते, 'कायो', 'दफ्तर', इत्येष देहो वै शासनात्मन.। व्यवहारेण शास्त्राणि,व्यवहाराश्च शाश्वत, ये शोधयन्ति कालज्ञा, धर्ममर्मविदो हि ते । "अनाम्नातेषु धर्मेषु, कथ स्याद्, इति चेद् भवेत्, य 'शिष्टा' ब्राह्मणा ब्रूयु, स धर्म स्याद् अशङ्कित, धर्मेणाधिगतो यस्तु वेद, सपरिबृहण, ते 'शिष्टा' ब्राह्मणा ज्ञेया, श्रुतिप्रत्यक्षहेतव"(म०), "इतिहास पुराणाभ्या वेद समुपबृंहयेत्, यस्मात् पुरा हि अनति इद, पुराण तेन तत् स्मृत" (वायु पु०, पू०, अ० १), ('जानाति' अर्थे 'ऽनति' च, 'पठति' अपि, 'पुरा' भव) । (१५०) । "एकोऽपि वेदविद् धर्मं य व्यवस्येद् द्विजोत्तम, स विज्ञेय परो धर्मो, यदि सोऽध्यात्मवित्तम, अन्ये कृतयुगे धर्मा, त्रेतायां द्वापरे परे, अन्ये कलियुगे नृणां, युगभेदाऽनुरूपत" (म०), "अश्वाऽ-लम्भ, गवाऽलम्भ, सन्न्यास, पलपैतृक, देवराच्च सुतोत्पत्ति, कलौ पञ्च विवर्जयेत्, एतानि पञ्च कर्माणि निषिद्धानि महात्मभि, समयस्य गतिं दृष्ट्वा, व्यवस्थापूर्वक बुधै" (परा० स्मृ०), अन्ये वदन्ति यद् धार्य सन्न्यासस्तु कलावपि, श्लोकैरेतादृशै स्पष्ट स्मृतिकारैस्तु सूचित, धर्मा सन्त्येव सत्कार्या, काले, काले, विवेकत । अस्पृ-श्यताया विषये पूर्वमेव विचारित, जन्मनाऽस्पृश्यतायास्तु नास्ति प्रत्यक्षलक्षणं । "अत 'चडाल' एवैक स्पर्शादौ तु निरस्यते प्रतिलोमतो" हि, नैवान्य, इत्येव निश्चिनोति च कुल्लूको मनुटीकायां, यद्व सूक्ष्म विचार्य ▪ (म० अ० १० श्लो०

१३ ), 'चण्डाल'नामिका जातिर्नाव काचित्तु दृश्यते, 'चण्डाला' इति'चण्ड'-त्वात् सति सर्वासु जातिषु, अधमाश्च, मुजाताश्च, सिराल्याश्च यथा, तथा। ( १६० ) । अस्पृश्यता निमित्तेन, न जात्या, धर्मसम्मता, यथा महापातकिन, यथा सचर्मरोगिण, यथा च मलदिग्धाङ्गा, उदक्याऽशौचिनो यथा, अस्पृश्या सर्वे एवैते, निमित्तेर्, न तु जन्मत । ईदृशी अस्पृश्यता चास्ति वैरिणोस्तु परस्पर, चण्डमुण्डादिदैत्येभ्यो ऽस्पृश्या चामुण्डचण्डिका, अप याते निमित्ते तु स्पृश्यतैवावशिष्यते । एके विवेकमिच्छन्ति कर्तुं 'स्वच्छ पवित्रयो', वदन्ति 'स्वच्छता' 'दृष्टा', 'अदृष्टा' तु 'पवित्रता', एका स्थूला च बाह्या च, सूक्ष्मा अन्या तथाऽन्तरी । तत्तु न स्मृतिकाराणां ऋषीणामस्ति सम्मत । बाह्याऽभ्यन्तरवस्तूना एकत्र, भगवान् मनु, शुद्धिप्रकरणे वक्ति प्रकारान् शौच साधकान् । श्लोको भगवता प्रोक्तो मनुनाऽत्र निदर्शन, यत्र 'पू' धातुरेवैक उभ-यार्थं प्रयुज्यते—"दृष्टिपूतं न्यसेत् पादं, वस्त्रपूतं पिबेद् अपः, सत्यपूतां वदेद् वाचं, मनःपूतं समाचरेत्" ( म० ), 'शुचि' 'शुद्ध' 'पवित्रञ्च' 'मेध्य' चेति पदान्यपि प्रयुज्यन्ते समार्थानि मनुना तु पुन पुन —" त्रीणि देवा 'पवित्राणि' ब्राह्मणाना अकल्पयन्, अदृष्ट, अद्भिर्निर्णिक्त, यच्च वाचा प्रशस्यते, ( १७० ), नित्य 'शुद्ध' कारुहस्त, श्वा मृगग्रहणे 'शुचि', × योऽर्थ 'शुचि' स हि शुचि, न मृद्वारि-शुचि शुचि, × मक्षिका, विप्रुष, छाया, स्पर्श 'मेध्यानि' निर्दिशेत्" ( म० ) । चण्डालदेहे व्याप्ता चेत् 'सूक्ष्मा' अशोध्या 'अपवित्रता' 'आत्मीय', 'सूक्ष्म देह' सा नून स्पृष्टिन आविशेत्; तदाऽस्य स्पृष्टिन शुद्धिः स्थूल-स्नानाच्च सम्भवेत् । अन्यच्चात्र विचार्यं स्यात्—'श्वा मृगग्रहणे शुचि", मृगमांस शुना दष्ट श्वोच्छिष्ट भक्ष्यते यदा, यदा श्वपचादिभि, जात्या कीदृशी अस्पृश्यता तदा ? दृष्टाद् अदृष्ट, चादृष्टाद् दृष्ट, उत्पद्यते पुन, चक्रवत्परिवर्तेते, ऐहिकाऽऽमुष्मिके सदा, शारीर मानसौ, स्थूलसूक्ष्मौ वा, कार्य कारणे, वृक्ष बीजे, सृष्टि लयौ, जागर स्वप्न एव च, "अव्यक्ताद् व्यक्तय सर्वा प्रभवन्त्यहरागमे, रात्र्यागमे विलीयन्ते तत्रैवाऽव्यक्तसंज्ञके" ( गी० ), नात्यन्तिक तु पार्थक्य सिध्यतीह कथञ्चन, 'पवित्रता स्वच्छतयो', 'दृष्टादृष्टपदार्थयो', अन्योन्य चाप्युभौ पृक्तौ ओत प्रोतौ परस्परं; "व्याप्तिकं सर्व-मेवैतद् यद् एतद् अभिशब्दित" ( म० ), 'संकल्पस्य' हि 'अदृष्टस्य' 'कामस्य'

जगदात्मन , सृष्टि सर्वाऽपि 'दृष्टा' इव स्थूलभूतमयी, परं । ( १८० ) । 'कर्मणे'वा, अन्ततो गत्वा, 'नीच' जन्म, 'उच्च एव, वा , "सुरत्वं वाऽसुरत्व वा कर्मणैव हि लभ्यते , सुरेशत्व गणेश व महेशत्व तथैव च, ब्रह्मत्व चाऽथ विष्णुत्व, कर्मणैवाऽभुयाच्चर " ( दे० भा० ), हिरण्यकशिपुत्व च, रावणत्व तथा, गता , शिशुपालत्वमेवापि, कर्मणा विष्णुपार्षदा , "कर्मणैव हि संसिद्धि आस्थिता जनकादय " ( गी० ), "आत्यन्तरपरीणाम प्रकृत्यापूरतो 'भवेत् (यो० सू०), उत्कृष्टात् पुण्यत , पापाद्, वा, एकस्मिन्नेव जन्मनि , नन्दीश्वरो नरो ह्येरा भवद् वै शिवपार्षद , मानुषो नहुषोऽपीन्द्र सर्पश्चाप्यभवत् तथा (योग०भा०), "अत्युग्रपुण्यपापाना इहैव फलमश्नुते ' ( म० ) , एव बलीय 'कर्म' एव वर्तते, 'जन्म-कर्मणो ' । चत्वारोऽपि हि यद्वर्णा एकस्य ब्रह्मण सुता , एतेन रूपवेणैव लक्ष्यते 'जन्म-वर्णता' । अस्पृश्यो नैव पात्रोऽस्ति शरीरे कस्यचित् क्वचित् । हिंस्राश्च, दस्यव , 'चोरा ', मलअक्ता , भीमदर्शना , असभ्या दूरतो वर्ज्या , नास्पृश्या एव केवल, शासकैर्दण्डनीयाश्च, प्रयास्याश्चापि दूरत , ( १९० ), यथाऽद्य काले सन्त्येव पापा काश्चन 'जातय' , याना 'जरायम् पेशा' इति, 'क्रिमिनल् ट्राइब्ज़' इत्यपि, यासा सर्व नरा प्राये कुर्वते चौर्य जीविका , स्थाप्यते ता: निरीक्ष्यते बहिर्ग्राम तु यामिकै , परिव्रज्या च कार्यते स्थानात्स्थान, पुन पुन , कपटादिविमानेषु वसन्त्य 'कजरा' इव । "चण्डाल श्वपचाना तु बहिर्ग्रामात् प्रति श्रय " ,× इ यैव मनुरप्याह, "परिव्रज्या च नित्यश ,× वसेयुरते विज्ञाता , धारयन्त स्वकर्मभि " ( म० ) ।

सहस्रशो भिन्नाना जातीना अधुना चतुर्वर्णेषु राशीकरण कथ साधनीय ?

(२१) प्र० शत शत जातयस्तु, ब्रह्म क्षत्र विशामपि, सहस्रशश्च शूद्राणा, "अस्पृश्याना' परस्पर, वा , तासा ननु वर्णेषु चतुर्ष्वेव कथ भवेद् राशीकरण अद्यत्वे ? दुस्तर लक्ष्यते ।

उ० विना 'दण्ड' भय शक्य मर्यादास्थापन नहि, "दण्डस्य हि भयात्सर्व जगद्धर्म प्रतिष्ठते" (म०), स्थाप्येत चाप्यनायास मर्यादा इय पुनर्ननु, 'मनुष्य-गणनाया' चेद् ईदृश शासन भवेत्—'य कोऽपि यस्या कस्याश्च जाते स्यात् ज्ञान जीवन , "विद्योपजीवि" वर्ण स लिखेत,"ब्राह्मणो"ऽथवा; (२००) "रक्षो-पजीवि" वर्णश्च सर्व शस्त्राद्य जीवन , "क्षत्रियो" अस्येत वा, तद्वत् सर्व

कृष्यादि वृत्तिमान् "वार्त्तोपजीवि" वर्णस्तु, "वैश्यो" लिप्येत वा तथा, "श्रमोपजीवि"-वर्णश्च "शूद्रो" वा, भृति जीवन'। एवं सर्वमनुष्याणां चतुर्विभजनं भवेद् अनायासेन विस्पष्टं। "शिक्षा" महत्या महत्तमा भाविनी तत्र, यतः प्राय सर्वे 'ऽस्पृश्या' कृषीवला, 'जातिनाम्ना' कृतं तेषां अस्पृश्यत्वं च विलोप्स्यते, परिवर्तनं नाम्नस्तु। 'भाषा' इव 'नाम'रूपयो'। 'जाति'स्तु 'जन्मना', 'वर्ण' नतु स्याद् वृत्ति कर्मणः', विवेकोऽयं स्फुटं कार्यः शब्दयोर्जाति वर्णयो। 'वृद्ध' पुनः, यदा 'धर्म्यं', सदेव प्रभवेत् सुखं, सर्वमान्यं सदैव इहक् प्रवर्त्ततांऽपि 'शासनं', 'भूपालो' देश वृद्धा तद् धर्म्यं चेद् अनुमन्यते, ये लोकमान्या श्रद्धेया, क्षोभो लोकेऽन्यथा भवेद्, गताऽनुगतिके, शिक्षाहीने, पूजित पूजके, मूढमाहैर्गृहीते च, घोरं स्यात्ताऽपि विप्लवं। "द्वौ इमौ, पुरुषव्याघ्र!, परप्रत्ययकारिणौ, स्त्रियः कामित कामिन्य, मूर्खा पूजित पूजका, गतानुगतिको लोक", स्वल्पा वै पारमार्थिका (म० भा० विदुरनीति), स्व 'बुद्धिसरणा' केचित्, परबुद्धिसरा परे, पुरुषाणां प्रसिद्धानां बुद्धीनां अनुगामिन, 'प्रसिद्धसरणा'', स्मरतान् ये ऽनुयाति अविचारित, (२१०), केचिद् एव 'स्वप्रज्ञा', 'परप्रज्ञा'स्तु भूरिशः, प्रकृष्टज्ञानरूपता, सर्वलक्ष्यादिर्गी तत्र, प्रज्ञा प्राज्ञैस्तु विम्नार्था स्वदेशे वै प्रयत्नतः, अतोऽस्मिन् विषये, देशमान्यानामेव सम्मति उद्बोध्या प्रथम, पश्चात्, तद्द्वारा, लोकसम्मति। अनुगामि-अनुगम्यानां बुद्धिसाम्यं विना, नहि भारतीयसमाजस्य नव संस्करणं भवेत्। 'गतानुगतिकानां' हि बुद्धिर् नियामिका भतिमा। सदेहगर्ते पतिते तु कार्ये, तस्मात्समुत्सारयितुं बलेन, मार्गेण तत चालयितु श्रमेण,'महाजनस्यैव हि बुद्धिरिष्टे। परप्रत्ययगानां हि कार्यं 'राज्ञा' तु 'रञ्जनं', प्रसादनैरुपायैश्च तासां सद्बुद्धिवर्धनं, अनुकूलतया उपलाल्य बालान् माता हि पाययेत्, "अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनं" (म०)। तासां श्रद्धा च समाख्या, नेतृभि सत्यपरायणा। प्रत्यक्षमेव पश्यामो, वहवो, यद्, दिने दिने, त्यजन्त्येक [illegible] च कश्चिद् धर्मं, गृह्णन्ति चापरं, न महर्षि, न धर्माद्धो, न रसूलो, न पुस्तकं, वेदस्य वा, कुरानस्य, वैबलस्याथवा तथा, न शब्दप्रमाणात्मकं, निरोद्धुं शक्नुवन्ति तान्, (२२०), तेषामन्तर्गता बुद्धिर् आत्मीयैव नियामिका, मध्ये च तत्त-द्धर्माणां आचार्याणां विवादिनां कुरुते प्राड्विवाकत्वं, निश्चय चान्तिमं, तथा यथैव स्वस्य कल्याणं श्रद्धाति कथञ्चन। ईश्वरोऽस्ति, न वा सोऽस्ति, अपि अस्ति चेत् कीद-

दोस्ति स —इत्यत्रापि विनिर्णत्री वुद्धिरेवास्ति सर्वथा, ईश्वरास्ति वनास्ति च अध्यवस्यति सा, यदा, का मन्यताऽमान्यतयो ग्रन्थाना तु कथा तदा ? 'अह मान्यो' हि, अहं मान्य ', इति सर्वे वदति त, य तु एते आत्मसात् कर्तुं प्रयतन्ते विवादिन , स्वीया बुद्धि रुते ऽस्य एका, कोऽत्र निर्णायको भवेत् ? कोलाहले चतुर्दिक्षु तादृशे हि समुत्थिते, स्वीया हि आत्मप्रभा साक्षाद् बुद्धिरेवाऽस्य सिद्धिदा । बुद्धेस्तु कार्यं तर्कोऽस्ति, तर्कश्चापि परीक्षते गुणान् दोषाश्च वादाना, 'सद् अथ' निश्चिनोति च, अत्ययोऽपि बहुन् वादान् विकल्प्यापि, परस्पर, तर्कं णैव परीक्ष्यापि, निर्णय समयाप्नुवन् , मीमासायां स्वय तैस्तु सिद्धान्तोऽत्र प्रवर्त्तित , 'तर्क एव ऋषिर्नून अस्माक परमो मत ' , सद्-असत् तर्कयोश्चापि बुद्धिरेव विवेचिनी स्वकीया, सर्ववादेषु, यादृशी तादृशी च वा, (२३०) , कुनाथकै स्वार्थपरै बहुधा सा भ्रमार्यते, दु स्वदान् असमीचीनान् निर्णयाँश्चापि कार्यते, तानेव 'बुध्या' 'ऽज्ञानेन' साधून् लोकहितान् अपि, अतो हि सर्वप्रथम कराव्य नेतृ बोधन , सद्धर्मरूपे सज्ज्ञाने, ततस्त्'चैत शिक्षण' , सुष्ठु दुष्टु फलाना हि ज्ञापनैर्बुद्धिबोधन, कार्याणां कारणानां च विस्तरात्प्रतिपादनै । अत एवात्र हिन्दूना विस्तराद् गदिता रुजा, चिकित्साया उपायश्च तथैव कथितोऽखिल , विचारयन्तु सहृद , सुहृदो भारतस्य च, तथा मानवजातेश्च,"सर्वभूत हिते रता " न केवल स्वार्थपरा , स्वय निर्धारयन्तु च, बोधयन्तु तथा चापि'वासुदेव' 'महाजन,' भारतोद्धारकार्याय, मानवानां हिताय च । ( २३७ ,आदित ३५२९ श्लोका )।

---

ॐ

## १३ अध्याय

### सर्वधर्माणा मानवे धर्म सम्मेलन कथ ?

(२२) प्र० भारते ये ऽन्यधर्मास्तु प्रवृत्ता बहुपरे , तेषा हि मानवे धर्म भवेत् सम्मेलनं कथं ? 'शुद्धि' कृत्वा न किं ग्राह्या हिन्दुत्वेतेऽन्यधर्मिण ?

उ० यथैव शैव शाक्तानां,वैष्णवानां यथैव च, जातानां त्रिसहस्राणा हिन्दूना मेलन यथा, तथैव सर्वधर्माणां कर्तुं शक्येत मेलन, विभाज्यास्तेऽपि 'वर्णेषु' चतुर्ष्वेव हि 'कर्मणा' । 'शुद्धि' प्रकारो व्यर्थश्च निष्फलश्च परीक्षित , अपि वा दुष्फलश्चैव, प्रत्युत, द्रोहवर्धन । 'कर्म वर्ण' व्यवस्थाया अभावे नितरामपि,

'हिन्दुत्वे' च तथाऽन्योऽन्यास्पृश्य नायात्मके सति, मुस्लिम, क्रिश्चनो वापि, तथा कोऽप्यन्यधर्मकः, 'शुद्धया' हिन्दू मियेतापि, 'जाति' काऽस्य भविष्यति ? न विवाहादि सम्बन्धो 'जाति' निर्धारण विना, प्रवृत्ते जाति हिन्दुत्वे', यदि 'शुध्या' प्रवेशन विशेष 'जातौ' दाक्येत कर्तुं, तत्रैव सा दर्शिता । 'शुध्या' 'हिन्दुत्व'मानीता अपि केचिज्जना, पर व्यवहारेषु विहृता, विवाहादिक कर्मसु, 'जात्य'भावात्, पुनर्याता अन्यधर्मांस्तु तान् प्रति, इथा द्विगुणया घृणा, घृणया चापि, हिन्दुषु । (१०) । इय जाति'-प्रथा, 'जाति-बहिष्कार' प्रथा, तथा, कारणत्रितयात्ता हिन्दूना ध्वसकारिणी ।

भाकालवृद्ध पद्येषु प्रसिद्धेय कथा, यथा राजनारायणो विप्र, स्वजातीयैर्यदि स्कृत मिथ्याऽभिशापे, म्लच्छ, गचा दाऊद नामक नव्वाव, तस्य देशस्य शासक, मुस्लिमोऽभवत्, दिल्लीपुरे तु यत्काले सम्राड् अकवरो बभौ, क्रमात्, नव्वाब सेनाया मुख्य सेनापतिर्भवन्, 'काला पहाड़' इत्येतन्नाम्नैवऽसीत स विश्रुत, कायस्य च विशालत्वात्, कृष्णवर्णात् तथैव च, तत, सेनापतिर्भूत्वा, देवसायत नानि, स, निस्तेजोमूर्तिचूर्णानि, भेदभावकराणि च, मुर्मावचूर्णनिर्विश्वे ऽपरैराचि तानि च, क्रोधाद् वमञ्च हिन्दूनां, शतशश्च सहस्रश, वङ्गेषु च, विहारेषु, तथा औड (उड़ीसा) प्रान्तभूमिषु, लक्षशश्च स्वजातीयान् गोमांसान्यप्यखादयत्, मुखपिण्डा थिरसा तेषा, सूत्रमत्रोटयत् तथा, कृता 'अशुद्धा' सेऽप्येव स्वजातीयैर्यदि स्कृता, सर्वथा मुस्लिमी भूता, तेषा संघास्तथैव च, (२०), तत्कालीनैर्न हासोन्मुखैर्नै पण्डितमानिभि न पालिता मनोरथा, धीवद्भाग्यदर्शिभि — "सर्वान् पश्कृतान् अर्थान् अकृतान् मनुसमर्पीत्" (म०)। ईदृशैं कारणैरेव, सख्या अधिकतां गता मुस्लिमानां तु भारतेषु, हिन्दूनां ह्रासमागता ।

काश्मीरदेशस्यापि वृत्तान्त खलु तादृश । चतुर्दश शताब्द्या तु मुस्ता नोऽभूत् सिकन्दर महाराज प्रमुखतम, भूत्वा हिन्दु च घातक । किंवदन्ती तथा चेय, विप्रस्तस्याऽभवत् पिता, मन्त्री च पूर्वराजस्य, यो राजा हिन्दुरेव हि राजवश क्रमेणाऽसीद्, हत्वा त, स स्वय प्रभु बभूव, मुस्लिमाना च केषाचन सहायत, अङ्गीचकार धर्म [redacted] स्वय व्वापि मुस्लिम । सिकन्दरोऽथ सुल्तान, तत्पुत्रो, नवमु-स्लिम, 'भूयासं पुनरेवाऽहं हिन्दुर्' इत्याह पण्डितान्, ते च तन्न अन्वमोदन्त, तम काल-प्रचोदिता, 'अन्यता एवास्ति हिन्दुत्व, मुस्लिमस्त्व अन्यथा, प्राप्तु शक्यसि

हिन्दुत्वं अपरेणैव जन्मना' । आकर्ण्य 'मौल्वीन्' पश्चात्, मोऽवादीत् तान् त्वरा ज्वलन्, 'नाभूव' अद्य यावत्तु निविष्टो मुस्लिमो; ऽधुना तथा भवितुं इच्छामि; किं कृत्यं मम; वध्यतां' ; (२०) ; ऊचुस्ते, 'पंडितान् एतान् अस्मद्धर्मस्य वैरिणः, बद्ध्वा, क्षिप्त्वा प्रसेवेषु, वितस्तायां निमज्जय' ; एवमेव चकारासौ; मन्दिराण्यभनक् तथा शतशो; मुस्लिमीचक्रे बलेनैव हि 'पंडितान्' सहस्रशो, लक्षशश्च; यथाऽलुप्यत हिन्दुता कश्मीरदेशे, यत्रासीत् शुद्धार्याणां पुरा जनुः । इवैताः, मैत्राः प्रसन्नाः च, नीरोगाः, स्थिरयौवनाः, सुमुखाश्च, सुरूपाश्च, सुबलाश्च, सुबुद्धयः, शिष्टाः, सभ्याः, सदाचाराः, विशारदाः, सत्यवादिनः, बहुविद्याश्च बहवः, तेजस्विन्यस्तपस्विन', यत्राभवन् पुरा, तत्र सर्वमेवान्यथा कृतं, पापात्मभिः, बलात्कारैः, मानुष्यस्याविवेकिभिः, स्नेहेन रहितैः क्रूरैः, केवलं कामनोदितैः, जनकैः पूरितं च सततं, दुष्टमैथुनैः । मुस्लिमआक्रमणात् पूर्वं अपि सम्राभवत्, पुरा, बौद्धानां अधिकारे तु, विभ्रष्टे बुद्धमार्गतः, प्रजानां पीडनं चापि, मैथुनेषु च संकर, विक्षुब्धानां प्रजानां चापि उत्पाताः, राष्ट्रविप्लवाः । विस्तीर्णश्चापि संकीर्णः इतिहासोऽखिलो हि सः । ईसाशताब्द्यां पञ्चम्यां च, हूणाः काश्मीरं आपतन्, मिहिरकुलनामा च राजा एषां अभवन् तत्र ; (४०) ; स यशोधर्मणा राज्ञा मालवस्य पराजित ; हिन्दुराजेष्वपि तथा दुर्वृत्ताः बहवोऽभवन् । दिद्दा नाम्नी अत्र 'राजा'ऽभूत् नितरां व्यभिचारिणी ; तथैव नरराजानो बहवो व्यभिचारिणः ; विदेश्यानां स्वदेश्यानां एव घोरैरुपद्रवैः, विप्राणां चापि मूढानां भ्रान्त्या, धर्माधिकारिणां, सा स्वर्ग-भूमिर्नरकीभूता, अज्ञानापराधतः धर्मिणंमन्यमानानां, नितरामल्पदर्शिनां । दश प्रतिशतं तत्र हिन्दवः संति साम्प्रतं, नवतिर्मुस्लिमाश्चापि । श्रीः, हीलेन सह, अर्दिता ; दुराचारस्य बाहुल्य, स्वभावस्य च क्षुद्रता, कुरूपत्वं च बहुशः, वर्णे गौरे च सति अपि, श्वेताङ्गेऽपि मालिन्यं, न शुभ्रत्वं यथा पुरा, दरिद्रत्वं च, दीनत्वं, शिक्षाऽभाव परस्तथा, पशुवज्जीवनं चापि कृच्छ्रेण, भयसंकुलं—या 'देव-भूमयो' ह्यासन्, तासां अद्य इयं दशा ।

एवं गोमांतक-प्रान्ते, यस्तीरे पश्चिमोदधेः, 'गोआ' नाम्नाऽधुना ख्याते, दक्षिणे बम्बई-पुरात्, वैक्रम्यां षोडशीशत्यां पोर्तुगीजाः यदाऽऽगमन्, बहित्रैर् अब्धिमार्गेण तरन्तो बहुदूरतः, (५०), विजित्यास्य एकभागं ते, राज्यं अस्थापयन् स्वकं, ततः, तद्देशवास्तव्यान्, ब्राह्मणांस्तु विशेषतः, प्रच्याव्य हिन्दु-धर्मात्

स्वात्, छलेन च बलेन च, उद्युक्त, धर्मांधा क्रिस्चनीकर्तुं, उन्द्रना, विभीषिकाभिः, पूर्वं तु, दारुणेर्यमयातनै, वियोजनैश्च प्राणेभ्यो, कृतार्थास्तथाऽभवन् यथा इष्ट ईदृग्य नेत्, तद्, अन्योपायान् अचिंतयन्, क्रमात्, कालेन, हिन्दूनां गूढग्राहान् अवेदिषु, अनायासेन, तत्पश्चात्, आपुर्यत्ने कृतार्थतां, ग्रामणग्राम कूपेषु गोशिरांसि प्रचिक्षिपु, छिन्नानि, अङ्गानि चान्यानि, रात्र्या, सुप्तेषु वासिषु, प्रातरुत्थाय, विप्रास्ते, कूपेभ्यो जगृहुर्जलं, स्नानपानार्थं, अस्पष्टे आलोके, अनुदिते रवौ, पश्चात्, प्रकाशे, सदृश्यं गोमासानि, महाजन, सर्वांस्तान्, ब्राह्मणान् 'भ्रष्टान्', पोर्तुगीजा अघोषयन्, तथा च क्रिस्चनीभूतान् बहिष्कार्यान् स्वजातित, तज्जातीया महामूढा, मोहितश्च महाजन, बुद्धिशून्य कृत तैस्तु स्वपरविधर्मनेतृभि, तान्, स्वय तेऽपि चात्मान, पतितानेव मेनिरे, प्रायश्चित्तेन येनापि हि अनुद्धार्यान् कथयन, ( ६० ), गोभाग्रान्तास्तु तत्कालात् क्रिस्चनअपूरितो ऽभवन्, नवा विनिर्मिता 'चर्चा', सग्मा सद्रिरमूर्त्य । पारो 'शूलगये', येपा, स्पृष्ट्वा साण्ड महायूप, अग्नौ समग्र उक्षाण, पूर्वजा समभक्षयन्, ( पारस्करादि सूत्रेषु गृह्येषु विहित यथा ) तेषा अथ तमोऽन्धाना ईदृशी बुद्धिदुर्दशा ! गोमास स्पृष्ट पानीय पानेन निपतति ते, असरणयां अनुद्धार्या निरये सार्वकालिके ! अहो त्र(तृ भ)स्टस्यतावाद तेषां येषां, सदा उदरे, 'द्विजाना' पच्यते मास शावाना पशु पक्षिणा, गाव मुक्त्वे परित्यज्य, मत्स्यादीना तथैव च ! 'हिन्दुत्व' पृथ स्थान नाद्याप्यावर्त्तते तत । शुद्धो हि वैदिको धर्म स्थानोऽभूत् एवमेव वै, अधियोत्थैर् नृपाधर्मैं, इदानीं तु निपूदित ।

सर्वप्रान्तेषु सन्त्येव वृत्तान्तानीदृशानि च । प्राग्नती इव महाभ्रान्तिर्नाद्यापि विनिवर्त्तते, यज् 'जन्मनैव हिन्दुत्व', 'वर्णं च जन्मनैव' च, एतावताऽपि भोगेन तु लाभो सा न शोधिता, विध्वसनाय हिन्दूना भिस्तम्भ प्रचरत्यसौ । ( ७० ) । ईस्वी विंशी शताब्द्यास्तु वत्सरे चैकविंशके, अर्वजातेस्तु वश्याना मोपलाना उपद्रव मुस्लिमाना अभूत् तीव्र, प्रान्ते मद्रासनामके, मलाबारप्रदेशे च ; हिन्दवो बहु सूदिता, विप्राश्च नाम्बुद्रिय, नायरा क्षत्रियास्तथा । 'स्त्रीराज्य' तत्प्रदेशेऽस्ति, तथाऽऽचारा विलक्षणा, आचारेभ्यो भृशं भिन्ना हिन्दूना अन्यप्रान्तिना । 'मापिला' 'मोपला' वा इति कथ तत्र समागता, कथ निवासिता पूर्व तत्रत्यरेव हिन्दुभि, कथा इव महती, सर्वा नात्र वर्णयितु क्षमा । अस्तु । तैरेव 'म'

पिल्टैः' विशेषोऽयं महान् कृतः ; स्त्रियो नराश्च हिन्दूनां दूषिताः निहतास्तथा । मेनां सम्प्रेष्य 'मा-पिलाः' हत्वा नीताः धनं पुनः, दंडिताश्च यथायोग्यं, प्रान्तीयैर् आंग्ल-शासकैः । किंतु दूषित-हिन्दूनां 'शोधनाय' उद्यमस्तु यः कृतोऽन्यैर् हिन्दुभिस्तत्र, शिक्षितैः मर्मवेदिभिः, सानुक्रोशैः, दयार्द्रैश्च, नीतिज्ञैर्, दूरदर्शिभिः, नवां अवस्थां जानद्भिः, तं 'विप्राः' नानुमेनिरे ; शृंगेरि-शंकराचार्यः, तत्रत्यानां 'जगद्गुरुः', शुद्धि-प्रदानाद् विमुखः एवाभवत्, श्रूयते तथा ; तथैव विप्रा जाड्यवशात्सन् बहवः काशि-पंडिताः । (८०) । आंग्लानामस्माकं दर्शने, प्रभावाद्, यंत्रणादपि, दाक्षिणात्यैः कृता तेषां 'शुद्धिः' 'विप्रैः' कथं कथं; दुष्टेष्वपि दयार्हेषु हृद्धीनैर् भूरि निष्ठुरैः, धर्मतत्त्वानभिज्ञैश्च, नितरां मूढबुद्धिभिः, स्वकीय-'नीच'-दम्भेनाभिविष्टैर् वेतालवद् मृतां, स्वार्थमप्यपश्यद्भिर् भाविनं दूरवर्तिनं, स्वजातीयैस्तथा जातौ कृच्छ्रेण स्वीकृताः च ते । शुद्धिं चैनाम्यमोदन्त पंचषाः काशिपंडिताः । शिखा चेन्मुंडिता, सूत्रं त्रोटितं च बलादपि, अभक्ष्यं वाऽप्यपेयं वा खादितं पायितं बलात्, 'हिन्दुत्वं' हि कथं नष्टं आमूलं, सागरैय तु ? किमेतेषां प्रतीकारः सर्वथैवास्त्यसम्भवः ? जन्मनैव हि वर्णश्चेद्, व्यासं देहेऽस्मिस्थे तथा, क्षुद्रेण कारणेनास्य हननं कथमिष्यते ? जन्मना मानवत्वं यत्, तत्तु नैवापनीयते केनापि कारणेनेह ; वर्णोऽपि न कथं तथा ? अपनेयो यदि स्यात् सः, कारणैः कैश्चिदेव च, न कथं प्रायुपनेयो भवेत् सः प्रतिकारणैः ? सूत्रभंगेन भज्येत, शिखायाः मुंडनेन वा, अभक्ष्यापेयप्रयोगेन यदि वा, तत् कथं न सः, नवसूत्र-परीधानैर्, नवकेश-विवर्धनैः, वमनेन, विरेकेण, संधीयेत पुनः पुनः ? (९०) ।'

१ निदर्शनानि चान्यानि, नवीनीनानि पश्यत—पंजाब-प्रान्त-राजस्य जयपालस्य पुत्रक आनन्दपालस्, तस्यापि ब्रह्मपालाभिधः पुनः, सुल्तान-महमूदेन युद्धे बन्दीकृतः (१००१ ई०), तथा, आदितो मुस्लिमं धर्मं बलाद् च ; परिवर्तितं नामाप्यस्य, 'नवाब' इति ; सामन्तोऽपि (गवर्नर) कृतस्तु सः तस्मिन् प्रान्ते च, करदः ; किंतु, स्वस्थानं आगतः, संत्यज्य सः नवं धर्मं, पुनर्हिन्दुत्वमग्रहीत् ; पंडितैश्च स्वकालीनैः तस्मिन् कार्ये समर्थितः । सुल्तानेन तु, तत्पश्चात्, सामन्तत्वाद् वियोजितः । हिन्दुत्वं न पुनः किन्तु सोऽत्यजद्, देहमत्यजत् । नाम्नाऽल्-बिलादुरी इत्येको मुस्लिमैतिहासलेखकः, लिखत्येवं यद्—'अष्टम्याः शत्याः अन्ते तु, सिन्धुषु, मुस्लिम-

सूत्रे न धार्यते वाले, सन्न्यासिभिस्तथा, न शूद्रैर्बहुभि सूत्र, किमतस्ते
दृश ? सुरापान च गोमांसभक्षण पूर्वं 'हिन्दुभि', ब्राह्मणै क्षत्रियैर् वैश्यै
पि कृत बहु पुराणकाले, न स्पष्ट पुराणेष्वेव लिख्यते, ' सुराघटसहस्रेण
गगामपूजयत्'' ( वा० रा० ), बलराम स्वय तावद् अपिबत्तु बल मुल",
र बहु साहस स्वकीये दीर्घजीवने, क्षीबौ कृष्णार्जुनौ दृष्टौ गृहेऽपश्यच् च

---

पो याते दौर्बल्य, पुनरुत्थिता हिन्दवो, बहवो ये च बलाद् मुस्लिमीकृता,
ते हिन्दवोऽभूवन्', देवलानुमतेन हि । 'एकादशशताब्द्या तु किंतु सा शुद्धि-
णी प्रथा दुर्बलता प्राप्ता, ब्राह्मणाना विरोधत, यद्यप्यन्ये त्रयो वर्णा शुद्धेर्
न् समुत्सुका '—एव लिलेख यत् बेरुनी नामा मुस्लिम पण्डित, योऽवसद् बहुवर्षाण्य
ाने बहुशास्त्रवित् । ( १० ) । टिपू सुल्तान-नामा, यो मैसूर प्रान्त शासको ऽभूद्
दशशाब्दा तु ( १७८२–१७९९ ई० ), छलेन च, बलेन च, तैन, प्रलोभनेनापि
दवो मुस्लिमीकृता बहव, तस्य पातान्ते हिन्दूभवितु इच्छव, विप्रवया विमुख-
तु, न समाने प्रवेशिता । नार्लेकरो नरहरि, महाराष्ट्रीय ब्राह्मण, पानीपतकुरुक्षेत्रे
१७६१ ई० ) गतो मुस्लिमबन्दिता, मुस्लिमत्व तर्थकारि, कथचित् स्व व्यमोचयत्,
ि, द्वादशवर्षान्ते, प्रतिष्ठान उपागमत्, यत्तु 'दक्षिण-काशी ति दक्षिणे प्रथितोऽस्ति
। तत्तत्त्वविप्रास्त काले सौभाग्याद् अनुमेनिरे पुनरावर्त्तनं तस्य समाने खलु हैन्दवे ।
वसिंहो महाराजो, ( १६२७–१६८० ई० ) महोत्साहो महाप्रभु, 'शिवा-जी'
येव नाम्ना य सर्वत्र प्रथितो भुवि, निम्बाल्करनामान स्वीय सेनाधिकारिण, युद्धेषु
स्लिमीभूतं, पुनरावर्त्य हिन्दुतां, जनताबोधनार्थं वै, स्वां सुता उदवाहयत । पश्चात्
जोर-प्राजाद्य, तत्त्वीनेरनुसारिण, आज्ञा प्रचारयामासुर्—'ईसाधर्म गतो जन विधी
यते स्वसम्प्रदाय, नो चेद् हिन्दुर्भवेत्पुन ', बहवो ह्यत्र आवृत्ता हिन्दवो हिन्दुतां
न । ( काशीविश्वविद्यालय प्रोफेसर-डाक्टर श्रीअन्तेकरस्य निबन्धात्, कानपुरनगरे,
वकमहिलाइसाईद-महोत्सवे धाविनाद्, एतानि वृत्तानि संगृहीतानि) । (२०) । साऽनु
र्या उत्तमा नीति पुनरस्माभि स्वय वै, आग्रहात् अभावेऽपि, हिन्दूकरणसफलत्व
ऽस्यैव प्रस्माव इदानी च काठिन्य चास्ति तत्र यत्, कस्या जातौ प्रवेश्य स्यान् नवो
हिन्दुर् इति दृढ—तत् सरल भाषने सद्य कर्म-वर्ण प्रथा महे । ऊनविंश शताब्द्यास्तु
पराधें यो नरेश्वर, काश्मीरेष्वभवद्वीरो, रणवीर इति श्रुत, तस्यापि शुद्धानि अभवन्

संजय , जयद्रथवधोद्योगे, सङ्ग्रामे रोमहर्षणे, "पीत्वा च मधु मैरेयं द्विगुणद्रविणो मुहु", रणाद्द्रावयद् द्रोणं भीमसेनोऽति क्रुधा ज्वलन् , अष्टावरं रथान् यस्य विक्षेप च धमश्च च, गदया पोथयामास सारथींश्च हयांस्तथा ; द्रोणो रथं त्यजमान प्लवमानो रथाद्रथं, भीमसेनमनुधावश्च जगाम पि सत्वरं च, "पिता नस्त्वं गुरु धंम्बुरिति मन्यामहे वय , तद्वय विपरीत ते वदतोऽस्मासु दृश्यते ; मह्य

सीमाप्रान्तनिवासिभि मुस्लिमैं राजभिः सार्धं ; प्रायशोऽजयद् एव स । यदाकदा-चित् किन्तस्य योधा कोप्ता इति गणिता , सजातीया क्षत्रियाश्च महाराजस्य तस्य च, गृहीता मुस्लिमैश्चापि, तथा यन्दीकृता अपि, सजम्मरान् बहुशापि ग्नदश विभुता-स्तथा । कथंचिद् उन्मोच्यऽागता ते स्वदेशं उपागमन् । आत्मीयवत् पुरावत् च, व्यवहारे तु, न उत्सुक ब्राह्मणस्ते महाराजं, सजुगुप्सभिवऽकुरु । कृत्वा स्वजातीयं सार्धं परामर्शं ततस्तु ते, रणवीरनृपं तूर्णं , करुण क्रोध मिश्रितं, 'भवदर्थं , महाराज !, प्राणास्त्यक्त्वा गृहाणि च, दारुणं शत्रुभि सार्धं वय एव अयुध्महि , ( ३० ), अरिभिर्निगृहीताश्च, प्राप्ता बहु यातना , कथ कथं चिद् उन्मोच्यऽागता पुनरिहऽा गता , आशासाना , महाराजो हर्षात् स्वागमयिष्यति , दूरेऽपास्त तु साऽशा न , विपरीत हि दृश्यते , तर्हि सा भवताऽप्यव हन्याम एव हि, तर्हि न जाने कश्चित्परो नैव सैनिकस्ते भविष्यति, साहाय्यं तव नैवह समरेषु करिष्यति' । रणवीरस्तु तच्छ्रुत्वा तेषां मतिर्तं उत्तम, व्याकारयन् समग्राश्च सभाया-पण्डितान्, अथ, उपादिशच्चापि 'धर्मस्य, देश-काल उचितस्य च रचयन्तु भवन्तो हि नवीना ननु संहिता, यथाऽस्य देशस्य एवापि, सैनिकाना च तोषण, पोषण च, भवेत् सम्यक्' । सन्य तेऽरचयन् नव, 'रणवीर प्रकाश' तु, व्यवस्था यत्र यैं कृता, "सर्वान् बलकृतान् अर्थान् अकृतान्म नुरब्रवीत्" (म०) इति सिद्धान्तत 'शुद्ध्यै' सैनिकाना तु तादृशा । अचिरादेव तत्पश्चात् रणवीरस्य मृत्युन , शासनस्य प्रकारे च काश्मीरे परिवर्त्तनात्, प्रतापसिंहे तत्पुत्रे भूपऽासनमुपागते, आंग्लानामधिकारे च दृढीभूतेऽधिक रत , 'रणवीरप्रकाश स्य प्रचार कुण्ठितोऽभवत् । ( ४० ) । कर्म वर्ण प्रथा चेत् स्याद् गृहीता तु महाजनै , प्रान्ते प्रान्तेऽपि, हिन्दूना, सर्वं सिध्येत्सुखेन वै । केचिद् अत्र विशङ्कन्ते—हिन्दुत्वं न कथचन मुस्लिमास्तु ग्रहीष्यन्ति , कुराणेऽस्ति आग्रहो महान् तेषा, मुहम्मदे च्यापि, शब्दे च 'अल्ला' इति वै तथा , गोभक्षकाश्च ते सन्ति, न च त्यक्ष्यति तं विधि '

मन्धो ', स्वसमान शत्रु चेन्मन्यसेऽस्तु तत् , एष ते सदृशं शत्रो कर्म भीम करिष्यति , ( १०० ), अथोद्भ्राम्य गदा गुर्वीं कालदण्डमिवान्तक , द्रोणाय-भ्यासृजद्, राजन् ', स रथादवपुप्लुवे, साश्वसूतध्वज यानं द्रोणस्याशेययत्तु सा , × एवमष्टौ रथा क्षिप्ता भीमसेनेन लीलया" × ( म० भा० ) । 'गोमेध'-शब्देनैवैतत् , तथा 'शूलगवेन' च, वैदिकेन, हि, गोमांसभक्षण पूर्वं उच्यते ;

---

मूर्तिष्वपि न विश्वास तेषां, प्रत्युत खण्डने , चतुर्यं खलु काठिन्य, यद् दुस्तरतम ननु –कस्यां 'जातौ' तु हिन्दूना, नवो हिन्दु प्रवेक्ष्यते'। तत्रैव तु समाधान–हिन्दुष्वपि तु सन्ति वै, विशेषपुस्तकाऽमहिम्ना , निविश्य तथा गुरौ कस्मिंश्चिन्, नामनि तथा उपास्यस्यापि ईश्वरस्य च , "त्वदन्यो वरेण्यो न मान्यो न गण्य " "महेशान्नापरो देवो, महिम्नो नापरा स्तुति , अघोरान्नापरो मन्त्रो, नास्ति तत्त्व ( ममैव ) गुरो पर ; दीक्षा, दान, तपस, तीर्थ ज्ञान, यागादिका क्रिया , महिम्नस्तवपाठस्य कला नार्हन्ति षोडशीं" , 'हरेर्नाम,हरेर्नाम हरेर्नामैव केवल ', "एत स्तोत्रस्य पाठेन सर्व इष्ट प्रसाध्यते, भार्या, सुता , धन, राज्य, स्वर्ग, मोक्षस्तथैव च," प्रत्येक-स्तोत्र-चस्यान्ते, लिख्यते सर्वथा मृषा । शैवाना वैष्णवानां च युद्धानि विदितानि वै । (५०)। काश्या निष्कासितो व्यास , विष्णु तु अति समीडयन्, रुद्रेभ्यामर्थयत्रपि शिवस्यानु-चरैरिति, किंवदन्ती प्रसिद्धैव, काशीखण्डे च वर्णिता । 'वेदा प्रमाण, मान्यो हि मान्यो प्र यस्तु कश्चन ताद्दशोऽस्ति, इति हिन्दूना वैदिकाना महाऽग्रह , अनेन ह्याग्रहेणैव अपरेऽपि प्रहिता कृता , विरोधेन विरोधो हि जायते, वर्धते तथा । मुस्लिमा यथ पीरानीं कुराने प्रदिष्टा ननु, मुहम्मद स्वय किंतु प्रशसति 'किताबिन ', ( अर्थात् सुशिक्षिता ये हि सद्ग्रन्थैरपि सयुता ), अन्यौंश्चापि, 'रसूला'श्चान्यान् समनयति इत्यपि । मुस्लिमेष्वपि द्वैविध्य, 'मुस्लिमा ' 'मोमिना' तथा, अल्लाह परमात्मान मन्यते ये हि केवल, ते सर्वे ह्यभिधीयते 'मुस्लिमाः' इति निर्णय , मुहम्मदेऽपि ये किंतु निविष्टा , ते हि 'मोमिना ' , ( स्वीकार-वाची 'सल्म' इति शब्दो, यस्मात्तु 'मुस्लिम '; 'अमन्' विश्वास वाची च, तस्मान् 'मोमिन्' विनिर्मित ) । 'चमार'-नामका ये च संति हिंदुषु साम्प्रत, मांस गवा मृताना ते भक्षयति यदा कदा , प्राची-नकाले गोमेध प्रथा चाप्रचीत्तु भारते , तथा शूलगवो नाम यागोऽपि प्रथितोऽभवत् ; ( ६० ) ; सर्व तद् 'अवतीर्णेन' कृष्णेन हि निवारित , एतत्सर्वं पूर्वमेव प्रत्येऽ-

कृष्णेनेन्द्रमखध्वंसकारिणा पापहारिणा गोवर्धनेनप्रब्धा इयं प्रथा गोमांसवर्जिनी। गोमासवर्जं, अन्यानि मासानि विविधानि ॥ ब्राह्मणा क्षत्रिया शूद्रा खादन्त्येव हि भूरिश , क्षत्रियाश्चापि शूद्राश्च पिबन्ति तु सुरामपि , न चैतद् गण्यते पापं तेषा तेषा ॥ जातिषु । 'ब्राह्मणेषु' च सन्त्येव बहवो वाममार्गिण शाक्ता कौलास्तु, ये पंच-म कारान् भुजते मुदा, मद्य , मास च, मत्स्य च, मुद्रा, मैथुनमेव च ,

---

स्मिंस्तु प्रदर्शित । यद्वन्यमद्यमांसाना पान भोजनमेव च, हिन्दुप्वस्त्येव विस्तीर्ण, तत्कथ तु विपक्षने ? बहवो हिन्दवोऽप्यद्य नैव वै मूर्त्तिपूजका , न चाभून् प्राक्तने काले वैदिके मूर्त्तिपूजन , अद्याप्यार्यसमाजीया मूर्त्तिपूजाविरोधिन , वेदान् अधिश्चि-पनश्च हि हिन्दुष्वेवाभवन् जना , भारते सर्वकालेषु , तथा ऐतिह्यन दृश्यते , रामायणे चापि, महाभारतेऽपि, कथाऽस्ति वै जाबालि चार्वाकादीना, मत च प्रतिपादित , कृष्ण नापि च गीताया स्वय वेदा विनिन्दिता , तथा भागवतस्यापि स्कन्धे एकादश,ऽधिक । श्रीहर्षकविना चापि, काव्ये नैषधनामके, ध्यानेन कलियात्राया , कलेरैवोक्तिभिस्तथा, वेदऽग्रमहत्ता घोरा अनाचारा प्रदर्शिता —' हिंसागवी मखे वीक्ष्य, रिरक्षुर्, धावति स्म स (कलि), सा तु सौम्य (सोमीय, गोमेधीय) पशुप्रसक्ता खर ( खल, कलि ) दूरान्, निरास त, (७०), मुमुदे मदिराऽदान विन्दन्, एष ( कलि ) द्विजन्मन , दृष्ट्वा सौत्रामणीं इष्टिं तं कुर्वन्त, अदूषत, तत्र ब्रह्महत्य पश्यन्, अति मतीव आनशे, निर्वेदयं सर्वमेधस्य यज्वान, ज्वरति स्म स ,( सर्वमेधे हि तत्तन्नृपानीयैकप्राणिहिंसा ऽधिकारात्, 'ब्राह्मणो ब्राह्मण आलभेत' इति ब्रह्मवधस्य वैधत्वात्, निराश्रयत्वात् सतत , इत्यर्थ –इति नारायणकृता टीका), कम्र तन्नोपनम्राया विश्वस्या वीक्ष्य हृष्ट-धान् ॥ मन्लौ त विभाव्य अथ वामदेव्य भ्युपासन, ('कया नश्चित्र ' इत्यादि वामदेव्य ब्रह्मसाम, 'वामदेव्योपासने सर्वा स्त्रिय उपसीदन्ति' इति श्रुति , विश्वस्या सर्वस्या स्त्रिया , गम्याया अगम्याया वा—इति नारायणीया टीका), प्रधावत् क्वापि गा वीक्ष्य हन्यमाना अय (कलि ) मुदा, अतिथिभ्यस्तथा पुष्ट्वा, मद मद न्यवर्तत, मतौ महाव्रते पश्यन् ब्रह्मचारी–इत्वरी रत, यज्ञे ( अज्ञासीत् ) मिथ अज्ञ स भडाकांडतांडव , यज्ञमार्याऽश्वमेध ध्वलिंगाऽलिंगि वरागता दृष्ट्वापचट स, कर्त्तार श्रुतेर् भड, अपंडित ; भैमीभर्तु र् ( नलस्य ) अर्हमानी, राजधान्यां, महीभुज , स 'पाखडजना'न्वेषी, प्राप्नुवन् 'वेदपंडितान्', जलार्यैव नल प्राप्य, पापस्, तापाद्

न चापि परम धर्मं घोषयति अ भियो ऽ ह्रिय , ज्ञात्वापि तत्सजातीया धर्षणां मर्षयंति ता, न च जातेर्बहिष्कर्तुं साहस तांस्तु कुर्वते । सानन्द भक्षयत्येव मानवा पाशवान् शवान् , "मत्स्याद सर्वमासाद , तस्मान् मत्स्यान् विवर्जयेत्"— इत्याज्ञा तु मनोर्लिख्य मज्जन्ति एव हि ये जना ,(११०), उच्चमन्या , द्विजीभूता , तेऽस्पृश्यान् यद्वदति वै, धाष्टर्याद् अपरजातीयान् , दम्भस्य महिमा हि स ।

---

अपासरत्" ( नैषध, सर्ग १७) । ( ८० ) । कलेर्मिषेण श्रीहर्ष एव धर्षयति, ध्रुव, 'वेदपडित'-'पाखड' 'भडस्य' "अकाडतांडव' । ईर्ष्य् कामस्तु वामस्य तंत्रद्वयोपपत्तिरस्ति वै, पथानो च स कारान्धा स्वीकारस्यान्धबुद्धिभि । कस्माद् एवविधा मता विषय श्चोपपादिता वेदेषु, तत्तु, असदिग्ध, नहि निश्चीयतेऽधुना, लज्जा गोपायितु यत्नो मैमासैस्तु प्रसार्यते, विस्तार्यते च वाग्जाल बहुकोलाहलाप्लुतं , जनता हृदय किंतु कर्म सर्वं हि तादृश, येदाना कालिमा-कारि धृएय राघस्यमत्यजत् । व्यस्यतेऽर्थं कथ सत्याद्, दर्शयत्यपि तत, कलि —"बलात्कृत्त पापानि, सतु तानि अकृतानि च , 'सर्वान् बलकृतान् दोषान् अकृतान् मनुर् अब्रवीत्', श्रुतिस्मृत्यर्थबोधेषु नैकमत्य महाधिया ? 'व्याख्या बुद्धिबलापेक्षा', सा नोपेक्ष्या मुखोन्मुखी ।" आह असौ सत्य मप्यर्थं किंचिद्, बहु वदन्, कलि , "ईर्ष्यया रक्षतो नारीर्, धिक कुलस्थितिदाम्भिकान्, स्मरान्धव ।विश्लेषेऽपि, तथा नर अरक्षत , तृणानीव धृयागादान् विधूनय वधूर् अनु, तथापि तादृशस्यैव (श्लेष्ममांसादिमयस्य) का स्थिर जनवचना ? (९०), .. प्रलापमपि वेदस्य भार्ग मन्यध्वे एव चेत्, केनाभाग्येन तु तान् न विधीनपि तथा इच्छथ ?" ( तत्रैव ) । यथैव मानवे देहे, ऊर्ध्वं अन्न, अधो मल, नाभेर् उपरि मेध्यत्व, अमेध्यत्व अधस्तथा, तथा उपनिषदो, वामतन्त्र-मता अपि, श्रुतौ , सावधानेन सग्राह्य, त्याज्यं, सुष्ठु च, दुष्ठु च । निष्कर्षोऽस्मिन् प्रसगेऽस्य विचारस्य एष एव हि—नऽात्मसभावितैर्भाव्य, अहमानिभिरेव वा, हिन्दुभि , स्वस्य वै दोषा मष्टव्या मलतस्तथा; त्यज्यते यद् ( यदि ) हठ ते , तत् ( तदि, तदा ) चिरमन्यैश्च त्यज्यते । आत्मवत्तु, विवेकेन, मनुष्यान् अपरान् अपि, कर्म वर्णं व्यवस्थात समाने सुविभाजितान्, अवस्थासु विभिन्नासु, यो परिदृष्ट ईहते, आत्मान परांश्चापि आपद्भ्यस् सतारयिष्यति । एकतश्चातिदीनत्वं, अत्यौद्धत्य तथाऽन्यत , एकतो दासनाभाव , ऐश्वर्यान्धत्वमन्यत्त ,यो हि अत पादस्य रज निर्यनत्वत्, परे दिने, स

भिन्नजातेर्मनुष्यस्य स्पर्शनं वर्जयति ये, नित्यमेव गिलन्त्येते ह्यपेन्त कुणप पशो ! अहो दम्भस्य माहात्म्य अहो ऽहंकारविभ्रम , वैपरीत्य अहो बुद्धेर, अहो मोहस्य महिमा !

मनुस्तु सुरापान महापातकपञ्चके गणयति, अपरे किन्तु स्मृतिकारा तदेव हि, परिसंख्याविधानेन, चातुर्वर्ण्येऽनुमन्यते, विष्णुस्मृतिर्यथा वक्ति, विप्रस्त्वे माद्वीं पिबेत्, क्षत्रियो न्या अपि तथा, वैश्य , शूद्रोऽपि वा, तथा । एव्या

---

एव सम्प्राप्य धन, शिरास्यारोढुमिच्छति परेषा । यथा धूलिर्वात्याऽऽस्टा विघूर्णिता, साधु एकत पुराण हि, नवमेवान्यनस्तथा , (१००) , सङ्करऽऽकुलता एकत्र, कृत्य वैमुख्यं चान्यत पाशारज्जुर् उभयत पन्था क्षमो न दृश्यते स्वर्जे व्याघ्रा, नले नक्र , केन मार्गेण गम्यता ? हिन्दूना अन्यधर्मभ्य प्रत्यावर्तनकर्मणि, 'शुद्धि'रीत्या, तथाऽन्येषां ग्रहणे नव दीक्षया, हिन्दू समाजे, या ईदृक् शङ्का उभयत स्थिता, निरस्यते समस्तासा, कर्म वर्ण प्रकाशात । धर्म-वर्णस्य सिद्धान्त पन्था धन्यतम सदा, सर्व-संगमन सर्व-संवादी निरुपद्रव । एतत्स्मर्तव्यमन्यच्च, प्रसङ्गेऽस्मिंस्तु हिन्दुभि —ईसवीयाब्दस्य त्रयोदश्या आरभ्याद्, कलविंशत्या पर्यन्त अभवन् यानि मुख्य युद्धानि, तानि तु संख्यया द्वे शते ऽभूवन् षष्टिस्तेषां तु भूयसी हिन्दूरेव ।भवन् मध्ये तावत्स्वेव च भूयसी इस्लामधर्मिणोर्मध्ये , द्वेष्वेव एकत स्थिता राजानो हिन्दवो ये हि, मुस्लिमा अन्यतो नृपा , प्राय सर्वेषु युद्धेषु, हिन्दवो, मुस्लिमा तथा, योधा , प्रत्येकपक्षेऽपि परस्परसहायका । ( ११० ) । ( वर्षात् त्रयोदशात् पूर्वं अस्मात् , ( मार्च मासे, १९३१ ई० वर्षे), कानपुरे पुरे, उपद्रवो महान् आसीद् हिन्दू मुस्लिमयोर्मिथ , काश्यामपि ततोऽप्यऽभूत् किंचिदल्पतरस्तन , कराच्या च तदैवाऽसीत् (मार्च १९३१ ई०) कांग्रेसस्याधिवेशन , उपद्रवस्य हेतूंस्तु निश्चेतु तेन निर्मिता समिति षण् सदस्याना , त्रयस्तत्र तु हिन्दव , त्रयश्च मुस्लिमा आसन् , प्रधानोऽस्य जन कृत , त्रीन् मासांश्च पुरे तस्मिन् कृत अन्वेषण हि तै , पश्चाच् चतुर्भिर्मासैश्च विवृत्तिर्लिखिता तथा काश्यामेव , इतिहासत , भारते मुस्लिमागमाद् आरभ्य, व्यवहारस्य उभयोश्चापि परस्परं, विरोधस्य पि, साहाय्यस्यापि, तत्र प्रदर्शित , बहून् ग्रन्थान् विनिर्मथ्य प्राप्तनान् ऐतिहासिकान् , आंग्लराज्ये यथा चाभूद् वृद्धि द्रोहस्य चानयो , तत्सर्वं विस्तरेणास्यां विवृतौ प्रतिपादितं , तदैव सङ्ख्या पूर्वोक्ता युद्धानां गणिता —इति ) । (११८) ।

मनुस्मृतिर् नूनं मांसं बहु विनिन्दति ; राजसीं प्रकृतिं दृष्ट्वा क्षत्रियाणां तु, कर्म च, तेभ्यः तद् अनुजानाति, श्लाघमानाऽपि वर्जनं ( म० ) ; "न मांसभक्षणे दोषो, न मद्ये, न [illegible] मैथुने; प्रवृत्तिरेषा भूतानां; निवृत्तिस्तु महाफला ; मां सः भक्षयिताऽमुत्र यस्य मांसं इह अद्मि अहं, एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः; न-कृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्, न च प्राणिवधः स्वर्ग्यः, तस्मान्मांसं विवर्जयेत्; (१२०); योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया, स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते ; यो बंधनवधक्लेशान् प्राणिनां न चिकीर्षति, स सर्वस्य सुखप्रेप्सुः सुखमत्यन्तमश्नुते ; यद् ध्यायति, यत्कुरुते, धृतिं बध्नाति यत्र च, तदवाप्नोत्ययत्नेन, यो हिनस्ति न किंचन ; समुत्पत्तिं च मांसस्य, वध-बंधौ च देहिनां, प्रसमीक्ष्य, निवर्तेत सर्वमांसस्य भक्षणात् ; अनुमन्ता, विशसिता, निहन्ता, क्रय-विक्रयी, संस्कर्ता च, उपहर्ता च, खादकश्चेति घातकाः ; वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः, मांसानि च न खादेद् यः, तयोः पुण्यफलं समं ; फलमूलाशनैर्मेध्यैर्मुन्यन्नानां च भोजनैः, न तत्फलमवाप्नोति यन्मांसपरिवर्जनात्" ( म० ) । आरण्याः जन्तवो यस्मात् कृषिं हिंसन्ति भूरिशः, मृगयायां वध. तेषां, तथा तन्मांसभक्षणं, 'राक्षसैः' 'रक्षकैः', क्षत्रैः, कथंचिद् अनुमन्यते ; आन्तरस्यऽखेटकस्यापि सद्यः प्रस्तुतमेव तद्, भोज्यं ; न अपव्ययोऽस्य स्याद् ; विचारैरीदृशैरपि । परमांसैः स्वमांसस्य पुष्ट्यै, स्वादाय चैव हि, अहिंसकानां सौम्यानां पशूनां हननं, ननु, स्वगृहे पालयित्वा च, भक्षणं—पापमेव तत् । (१२०) कार्ये स्वास्थ्यिके प्राप्त, विशेषेण च हेतुना, अपि ईदृशानां च हननं अस्तु वैधं, [illegible] वार्यते; यथाऽनुज्ञातमेवाहैः "औषधार्थे सुरां पिबेत्"; "लोके व्यवाय-आमिष-मद्य-सेवा नित्यास्ति जन्तोर्, नहि तत्र चोदना, व्यवस्थितिः तासु विवाह-यज्ञ सुरा-ग्रहैः; आसु निवृत्तिरिष्टा"(भा०) । भीष्मोऽप्यनुपद्यतामं मनूक्तं प्राह सद्वचः, "उत्तमं भोजनं मांसं, द्वितीयं गोरसः स्मृतः, x न [illegible] मांसं तृणात् काष्ठाद् उपलाद्वापि जायते, हत्वा जन्तुं ततो मांसं, तस्माद्दोषो हि भक्षणे" (म० भा०) । "गोत्रचिह्नं शिखाकर्म", हिन्दुत्वस्य न मर्म तद्, इत्याह शबरस्वामी मीमांसा-सूत्र-भाष्ये ; "यथर्षि शिखां दधाति, यथा वा एषां कुलधर्मः; दक्षिणतः कपुजा वासिष्ठानां; उभयतः शिखा आत्रेयकाश्यपानां; मुण्डाः भृगवः ; पंचचूडाः आंगिरसाः" ( शाबरभा० ) । यज्ञोपवीतं भ्रष्टं चेन् नवीनं विप्र

धार्यते ? एतदर्थं ॥ मन्त्रो हि ऋषिभिर्दर्शित किल—"यज्ञोपवीत परमं पवित्र, प्रजापतेर्यत्सहज पुरस्तात्, आयुष्यमग्र्य प्रतिमुञ्च शुभ्र, यज्ञोपवीत बलमस्तु तेज"। "सहयज्ञा प्रजा सृष्ट्वा" इत्येवार्थोऽत्र तु कथ्यते। अन्यद् अत्र विचार्यं स्यात् 'जन्मना' यदि वर्णता, केनापि पातकेनेय कथमेवापयास्यति ? (१४०) । ब्राह्मण, क्षत्रियो, वैश्य, शूद्रो वा, मुस्लिमोभवन्, जन्मनैव कृता स्वीयां नैव हास्यति वर्णता। 'कर्मणा' चेद् इयं, नूनं, वियुज्येत विकर्मणा, सयुज्येत पुनश्चापि सा उपयुक्तेन कर्मणा। एतत्सर्वं तु विस्मृत्य धर्महेतु, असद्ग्रहा, धर्ममर्मानभिज्ञाश्च, 'धर्मं धर्मेति' राविण, मोहान्धा, दाम्भिका, पापा, दयार्हेष्वपि निष्ठुरा, स्वभ्रातॄन्, पीडितान् अन्यैं, पीडयन्ति अधिकं पुन, कश्चित् स्वाङ्गानि यथा उत्कृत्य दद्याद् व्याघ्राय वै, यथा, तथैवैतेऽन्यधर्मेभ्यो स्वजीवान् प्रददत्यपि, हिन्दूसमाजं सरर्ल पाताल नेतुमुद्यता। हिन्दवो 'नीच'जातीया, 'उच्च मन्यैस्तिरस्कृता, प्रत्यह यान्त्यन्यधर्मान्, पूर्वमेव इति वर्णित। अन्ये 'धर्मध्वजा' सति, धूर्ता 'धर्मधुरधरा', 'धर्माधिकारिणम्मन्या', विप्ररूपधरा भटा, उपायैर्विविधैर्यै ॥ स्वार्थसाधनतत्परा, मात्र वर्णयितुं शक्या तेषां नु वितता कथा। किन्तु सन्त्यन्यनेतार, सुभद्रा, दूरमानिन, निर्व्यलीक च हिन्दूना पीड्यन्ते ये च पीडया, (१५०), तापितानां कम्पितानां निर्व्याजमनुकम्पिन, दुःखिता परदु खन, तेषां च समवेदिन, परापिक्षथ, आर्यशीला, उदारा, दयालवो, अत्याचारे चापि सक्रुद्धा ये परेषां तु हिन्दुषु, ते विश्वसन्ति—'युद्धेन विजेष्यामो रिपून् वय, बलेन ाभिभविष्यामउद्धतान् अन्यधर्मिण', तत 'सगठन' चापि हिन्दूना यातयन्ति ते, धर्मपक्षैश्चोत्साहिते कार्येऽस्मिन्, भृशया धिया, 'प्रभुताऽस्माकमेव स्ते भविता धर्मभूर्तितो'। 'सम्रन्थन, 'सघटनं', सिध्यतीह ॥ नैव तत्, यतस्तु हृदय दूर एषां, धीस् तु न मार्मिकी, न अन्विष्यति निदान तु, न सा गम्भीरदर्शिनी, हिन्दूना नेक्षते दोषान् परेषामेव पश्यति; अत्याचाराक्राक्रान्तिवान् एव दृष्ट्वा प्रकुप्यति, प्राकृता नीति रेवास्या—"क्षेप कोपेन पूरयेत्"। आत्मीयाना रक्षण च, रक्षण चासमसत्यया, अवश्यमेव कर्तव्य सर्वोपायैस्तु नियत, "आततायिनमायान्त हन्यादेवाविचारयन्", "शठ प्रति शठ कुर्यात्, सादर प्रति सादर"। कार्यसिद्धिस्तु हिन्दूनां किन्तु नैतावतैव हि, (१६०), एतेन तु सहैवान्यत् कृत्य गुरुतर किल। आक्रम प्रतिकाराय नून शक्तिरपेक्षिता, न सा विना 'सघस्न', "सघे शक्ति-

कलौ युगे"; नैव 'संग्रहणं' शक्यं, 'संघः', 'संहननं' मिथः, 'संघातो', नैव हिन्दूनां, यावत् स्यात् 'जन्म-वर्णता'; इत्येतद् विस्तरात् पूर्वं अस्मिन् ग्रन्थे प्रदर्शितं। परेषां तु विरोधाय 'संधिः', 'संघः', क्रियेत यः,न स्थिरो बद्धमूलोऽसौ; गलत्येव अचिरात्तु सः। "परैः परिभवे प्राप्ते वयं पंचोत्तरं शतं" (म० भा०), इति क्षणिकः एवऽभवीत् संधिः अन्योन्यवैरिणां पांडवानां कौरवाणां, गंधर्वैः सह संयुगे। ईसाविंशशताब्धादौ विश्वयुद्धे तथाऽभवत्; यानि राष्ट्राणि युद्धऽादौ संहितानि अभवन् दृढं, विजयानन्तरं तानि एव अक्रुहन् वै परस्परं। भीमस्य तु नैवाऽसीन् मतिः कौरववैरिणी, "अस्माभिर्यदनुष्ठेयं गंधर्वैस्तदनुष्ठितं, किमर्थं मोषयिष्यामः शत्रून् यद्वान् परैः"—इति (म० भा०); "परस्परविरोधे तु वयं पंच, शतं च ते"—इत्येव नीतिस्तत्राभूत् शाश्वती पंडवाश्रिता। (१७०) शतानामेकताऽपि, पंचानामेकतस्तथा, संधिर्योऽभूद् दृढः, सोऽयं आमृत्योस्तु व्यघर्धत, यतो नैसर्गिकी प्रीतिरभवत् तत्र कारणं, परस्परहितायैव, परस्परविभूतये, आत्मनां मंडनायैव, नान्येषां खंडनाय तु। हिन्दूनां ननु जातीनां भीमस्येवाऽस्ति वै मतिः; एकस्यां पीड्यमानायां जात्यां अन्या तु मन्यते 'अस्माभिर्यदनुष्ठेयं अपरैस्तदनुष्ठितं'। वदंति केचिदिमास्तु—'कृषेः प्रावरणं, यथा, पशुभ्यो रक्षणायैव, क्रियते कंटकादिभिः, तथा द्विजानां प्राकारो भवंति अद्विज-जातयः'। ईदृशा कापुरुषी नीतिः, रक्षकाः यत्र भक्षकाः, पोषकाः शोषकाश्चैव,शिक्षकाश्चापि तक्षकाः,"यस्यांके शिरः आधाय जनः स्वपिति निर्भयः, स एव तच्छिरश्छिन्द्याद्", एवं विश्वासघातिनी (म० भा०), न इयं नीतिः फलत्यत्र फलमाशासितं किल। कंटकानि तु भक्ष्यंते उष्ट्राक्रमकारिणां,कृषयश्चापि चर्व्यंते तद्रोहैः सुरेन हि। 'संमन्थन' भवस्थायां शल्या, मरुमरीचिका। जेष्यंति संग्रहेणैव, विग्रहेण न हिन्दवः।(१८०)। उपायः एक एवात्र जगद्विस्तारकारकः, न केवलं तु हिन्दूनां, अपि वै सर्वधर्मिणां सर्वेषां मानवानां तु, येऽद्य द्रोहैस्सद्भुताः। "कृणुध्वं विश्वमार्यं" हि, वेदाज्ञा एषा एव पाल्यतां, सर्वेषामपि धर्माणां मेलनं क्रियतां मिथः। प्रकारस्त्वस्य चैवैकः, न द्वितीयः प्रतीयते; चतुर्वर्णांन्तरं पूर्वं आनीयेरन् समन्ततः, सर्वेषामेव धर्माणां मनस्याः अनुयायिनः; धर्मसन्याश्च सर्वेषां, पुन्याश्च गुरुणास्तथा, वेदांशाः एव मन्यंतां, अवतारास्तथैव च। "यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा, तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवं" (गी०)। ये केऽपि संति महन्याः "वेद एव

तु सर्वत्र " ( म० भा० ) । 'ज्ञानिनः' सर्वदेशेषु सर्वजातिषु सन्ति वै, तथा साह-सिका'श्चापि, शूरा ये रणकर्मणि, एवं वार्त्तासु 'दक्षा'श्च, तथैव 'भृत'-जीविनः , 'ब्राह्मणाः', 'क्षत्रियाः' 'वैश्याः', 'शूद्राः' चेति तथा, अर्थतः , संज्ञयाऽपि कुतो न स्युः तेऽपि, यद्वत्तु हिन्दवः ? हिंदुजातिसहस्राणां चतूराशिषु भाजनं यथा, तथैव सर्वेषां मानवानां भविष्यति । (१९०) । ये ज्ञानवृद्धाः यत्रैव भवेयुर्धर्मचिन्तकाः , तप'सत्यदयायुक्ताः ,'ब्राह्मणो वितनुश्चय ,प्राप्नुयुर् नहि कस्मात् ते उचिता 'ब्राह्मण'-ऽभिधां ? देशवेशोक्तिभिर्भिन्ना , दृष्टोपास्तिभिरेव च, ब्राह्मणानां तु हिन्दूनां शतधा सन्ति जातयः, भेदास्त्वन्येऽपि सन्ति एवं, सर्वां ब्राह्मणसंज्ञकाः , कस्य दोषाय सत्या सा स्याद् दश द्वादशाधिका ? न स्यात्सुमां विवाहाश्च्यां ह्रंते ननु परस्परं, एव वर्णानुरूपं चेत् संज्ञा कस्मान् निवार्यते ? ( १ ) 'पादरी हर्जिमस् प्रीस्ट डिवैन'-इत्यादयः , तथा ( २ ) 'मौलवी मुल्लाहिद्-मफ्ती मुल्ला-पीर् मुर्शिद्' आदयः , तथा ( ३ ) 'मोबद्' च 'दस्तूर', ( ४ ) 'भिक्षवो' ( ५ ) 'यतय'स्तथा, एवमन्येऽपि बहवः , तत्तत्संज्ञाभिर् द्योतिताः , (१) ख्रीस्तीया ब्राह्मणाः सन्ति, (२) मुस्लिमा ब्राह्मणास्तथा, ( ३ ) पारस्या ब्राह्मणाश्चापि, (४) बौद्धाः , (५) जैनाश्च ब्राह्मणाः , एवं क्षत्रिय विद् शूद्राः सर्वधर्मेषु सन्ति वै, सर्वत्र्वपि च देशेषु, सर्वमानवजातिषु । देवता भारतीयानां शतशश्च सहस्रशः सन्त्येव , तत्र स्वल्पसंख्या दश चाऽप्यथ विंशतिः । (२००) । 'तिरुभाण्डेश्वर'श्चास्ति, तथा वै 'कर्दमेश्वर', 'वटेश्वर'स्तथैवास्ति, तथा वै 'पर्वतेश्वर', 'नागेश्वर'स्तथा चास्ति, तथा वै 'नर्मदेश्वर', अपि 'नारीश्वर आस्ति, 'नरसिंहेश्वर'स्तथा, 'श्रीगिरीश्वर' एवापि, 'वृष नन्दीश्वर'स्तथा, 'शृङ्गेश्वर'श्चापि, 'दण्डपाणीश्वर'स्तथा, 'चतुर्मुखेश्वर'श्चास्ति, तथा 'पञ्चमुखेश्वर', 'दुग्धनाथेश्वर'श्चास्ति, 'वैद्यनाथेश्वर'स्तथा, 'सिंहाचलेश्वरो'प्यस्ति, तथा वै 'जम्बुकेश्वर', 'गृध्राचलेश्वर'श्चास्ति, तथा 'वेदाचलेश्वर' ; अन्येऽपि सन्ति ग्रन्थेया तीर्थेषु 'एनाद्वेश्वरा' , 'वराहो', 'वामन' 'कूर्म', 'सुग्रीवो', 'हनुमाँस्' तथा, 'गरुड'श्च, 'एकदन्त' च, 'लम्बोदर-गजाननौ','अष्टबाहु','चतुर्बाहु', 'अष्टादशभुजेश्वरी', यत् किंचिदश्मपिंडं च, मृन्मयी मूर्तिरेव वा, तथा दारुमयी वाऽपि, कृत्रिमा,ऽकृत्रिमाऽपि वा,ताम्रादि निर्मिता वाऽपि, चरित्रा वाऽपि कीदृशी, वटादि वृक्षाश्चैवापि,तथा गो सर्प वानरा , पूज्यन्ते सर्वं एवैते हिन्दुभिर्दीनबुद्धिभिः, श्रद्धया च, उपदेशाच् च स्वेषां 'धर्माधिकारिणां' । (२१०) । वेदान्ते च प्रसिद्ध

यद् "अचैतन्यं न विद्यते", अतो यावन्ति वस्तूनि तावन्त सन्ति च 'ईश्वरा'। का हानिर्यदि मान्येत तत 'काबा ईश्वरो'पि स, 'मक्का ईश्वर'स्तथैवापि मान्येत 'मदिना ईश्वर', 'मरद् ईश्वर' स्तथा चापि, तथा 'करबला ईश्वर', 'दरगाह-ईश्वर'-श्चापि, तथा च 'तकिया ईश्वर', 'वज्र ईश्वर' स्तथैवापि, तथा 'मकबरा ईश्वर'? मुस्लिमानामीदृशानि देवतीर्थानि सति हि, 'अल्ले'श्वरस्तु सर्वत्र भिन्नैर्नामभिरी ड्यते। 'परमात्मा' ईश्वरो यद्वद् हिन्दुभि सर्वैर्नामभि। फिलिप्पीन प्रदेशस्य तथा 'येल्लहमेश्वर', 'यल्लम्मीनेश्वर'श्चापि, तथा 'कलवरीश्वर', 'रोमेश्वर'स्तथा चापि, क्रिस्चनैर्ये समर्चिता —को दोषो यदि मान्येरन् एते,ऽन्ये चापि तादृशा? एको 'गॉड्' ईश्वरो होव सर्वस्थानेषु पूज्यते। 'अल्ला'-'गॉड्'-'परमात्मा' श्चान्ये यार्थो पद ते त्रय। (२२०)। समुद्रस्यापरे पारे, द्वारकायास्तु पश्चिमे, 'अर्ब'-नाम्ना मस्जिदोऽस्ति देशो जनपदो महान्, 'अर्बाणा' श्चभि तत्रैश 'मक्का' नाम महापुरी,यत्र 'काबेश्वरो' देव 'अल्ला' नाम्ना समर्च्यते, 'हज्रुल् अस्वद्' इति ख्यात ज्योतिष्लिङ्गमपौरुष, इब्राहीमर्षिणा, पूर्व, 'काबा नामक-मादिर निर्माय, स्थापित तत्र, पूजार्थ, लोकभूतये, ज्वलदुल्कास्वरूपेणापतद्, अश्ममय, हि तद्, नभ-स्तस्तु पुराकाले, न नरेण च टंकितं, ज्योतिर्लिङ्गमव स्यात्तं, अकृत्रिम, अपौरुष। प्रत्यब्द 'हज' यात्रायै, तत्र गच्छन्ति मुस्लिमा, 'जिल्हिज्ज' नाम्नि मासे तु,शत-शश्च सहस्रश, पृथिव्या सर्वभागेभ्यो, यत्र यत्र वसति ते, नार्याऽपिनरा च, मरणा, मद्यानिरुद्धमागता, मसिग्याऽसीचिते वस्त्रे, त्यक्त्वा उष्णीष पदत्राणान्, पद्भ्यामेव च गच्छन्त द्विजलोकान्, ततस्तु ते, काबामन्दिरमासाद्य, विशालि अस्य प्राङ्गणं महत्, प्रक्षाल्य 'ज़म् ज़मे' कुण्डे, कुर्वन्ति ■ परिक्रमा, काबानामं गृह स्यैते, प्रणमन्ति च दृश्यत; प्रविश्य तद्गृह पश्चात्, चुम्बन्ति अश्मान 'अस्वद्', ध्यायन्ति परमात्मान क्षणाय 'अल्ला'-अभिध तत। (२२०)। हिन्दूनामिव सा पूजा, किन्तु द्रव्यैर्विना हि सा, न पुष्प धूप-नैवेद्य जल मिष्टान्न कर्दमा, न अक्ष तानि, न पत्राणि, रङ्गोली न लेपन, न ताम्र रौप्य स्वर्णाना आह्वान देपर्णैरपि, न भिक्षु भ्रमोरा-सवाधौ, न समर्द परस्परम्। 'माह्व' मार्गे स्थितो धर्मे, 'इब्राहीमे' ति च स्मृत, मान्य' प्रजापतिर् धर्मत्रयस्यापि अनुयायिनां, यहूदानां, क्रिस्चनानां, मुस्लिमानां तथैव च, चतुर्वर्षसहस्राणि तस्य कालाद् गतानि हि, तस्याऽन्ववाये च महापुरुषोऽभून् मुहम्मद, ईसाकालात् शताब्दे तु षष्ठे गच्छति

पूर्णता, मुस्लिमाना प्रधानपि विशेषण मुहम्मद , सम्प्रदायास्तु सर्वेऽपि तेषा, त पूजयति हि, 'क़ुरान'–नामक तेषा प्रधान धर्म पुस्तक , मुहम्मदेन 'द्रष्टा 'ते मन्त्रा-स्तत्र स्थितास्तु ये। ईसा तथा क्रिस्चनाना प्रधानपिश्च, पुस्तक, 'न्यू टेस्टामेंट', यद् भाषा सहस्रेऽपि अस्ति अनूदित , कोण कोण पृथिव्याश्च, जाति जाति च मानवीं, ख्रीस्तार्यधर्मोह्मणैस्तत्र प्रापित लोक-सवकै । ( २४० )। सर्वेषामेव धर्माणां श्रयय पुस्तकानि च, तीर्थस्थानानि चैवापि पवित्राणि, भवति हि , प्रत्येक-सम्प्र दायस्य, यथा सन्ति च हिन्दुषु—अद्वैतिना शाङ्कराणा, विशिष्टाद्वैतिनामपि तथा रामानुजीयाना, माध्वाना द्वैतिनामपि, निम्बार्क प्रभुचैतन्य वल्लभ आद्यनु यायिना । किंतु समाइको धर्म सर्वेषामपि मानव ', अनन्ताश्चापि वै वेदा ' सर्व ग्रन्थ पथायका , सर्वेऽपि धर्मग्रन्थास्ते "वेद एव हि सर्वश " । "देशधर्मान् , जातिधर्मान् , कुलधर्मांश्च शाश्वतान्, पाखण्डगणधर्मांश्च, शास्त्रेऽस्मिन्नुक्तवान्मनु ' ( म० )। मूल न लभ्य आद्य तु सर्व प्रवचन मनो , लभ्ये ग्रन्थे स्मृते , सर्वे उक्ता धर्मा न सन्ति ते । भृगुणा संस्कृता चेव लभ्यमाना मनुस्मृति —इति तु स्पष्टमेवोक्त तस्यामेव पुन पुन , "एतद्वोऽय भृगु शास्त्र श्रावयिष्यत्यशेषत , एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिल मुनि , ततस्तथा स तेनोक्तो महर्षिर्मनुना भृगु , तानब्रवीद् ऋषीन् सर्वान्, प्रीतात्मा, श्रूयतामिति , × ( २५० ), स तानुवाच धर्मात्मा महर्षीन् मानवो भृगु , श्रूयता येन दोषेण मृत्युर्विप्रान् जिघासति , अनभ्यासेन वेदानां, आचारस्य च वर्जनात् , प्रमादाद्, अन्नदोषाच्च, मृत्युर्विप्रान् जिघासति" ( म० ) , ( प्रमादो, मदनो, मद्य, उन्मादो, मादक, मद , प्रमाद भेदा सर्वे ते, "सुरा मोहनमात्मन विद्धालस्यप्रमादोत्थं, तत्ताम समुदाहृत –गी० ) , "इत्येव मानव शास्त्र भृगुप्रोक्त पठन् द्विज , भवत्या चारवान् नित्य, यथेष्टा प्राप्नुयाद् गति" (म०) । प्रसंगप्राप्तमेतत्त्व अवधार्य सुवि चारकै—क्षत्रियश्च आदिराजश्च पत्ति स्वायम्भुवो मनु , ' पतीन् प्रजानां असृजं महर्षीन् आदितो दश' ; तथोक्त पुनरेवात्र यथाऽय ' मानवो भृगु ' , क्षत्रियस्य मनो पुत्रा ब्राह्मणास्तु महर्षय ; एतेन स्पष्टमेवोक्त प्राक्काले किल भारते, वर्णता कर्मणैवासीत् ; न कथंचन जन्मना । भारतीयान् भृगुद्वारा यथा मनुरशिक्षयत्, तथाऽन्या स्वप्रजाभूता जाती अन्य अशिक्षयत् , शिक्षयिष्यति चैवापि यथा योग्य पुन पुन , स्वसृष्टैश्च विसृष्टैश्च पुत्रभूतैर्महर्षिभि , ऋषिभिश्च तथैवान्यैर्वि

विधैरधिकारिभिः। (२६०)। सर्वदेवो चतुर्वर्णाः, सर्वदेशे च 'मानवाः'; द्विलप्याता च सर्वेषां वत्सलो भगवान् मनुः। बृहत्त्वाद् बृंहणाद् 'ब्रह्मा'; मननात् 'मनु' रुच्यते; महत्तत्त्वे मनोऽशो यः, स यस्मिन् संभृतोऽधिकं, सर्वदर्शी, महायोगसिद्धिभिश्चापि संयुतः, संयुक्तश्च तथा सर्वैः महापुरुषलक्षणैः, विशिष्टोत्कृष्टजीवोऽयं 'मनु' रित्यभिधीयते, प्रवर्त्तकोऽयं वंशस्य मानवानां, प्रजापतिः; "वात्सल्ये मनुप्रभृणां"—पुराणेपूपमा स्मृता। इतिहासे पदं, चैतद् अधिकारस्य वाचकं; उदाहरणाश्च 'मनवो' बहवस्तत्र वर्णिताः। कस्याः अपि महाजातेः आद्यः आरम्भकस्तु यः, 'मनुः' इत्युच्यते सोऽपि। सर्वेश्वरस्तु प्रजापतिः, सर्वेषां मानवानां च, मनुः 'स्वायम्भुवो'ऽभवत्। सप्तमः तु आर्यजातीनां मनुर् 'वैवस्वतो' ऽस्ति वै; "सावर्णिः सूर्यतनयो, ऽसौ मनुः कथ्यतेऽष्टमः" (दु० सप्त०); अवान्तराश्च 'मनवः' सन्ति प्रति 'महामनु'। सुरथश्च समाधिश्च, यौ तौ 'स्वारोचिषे' ऽन्तरे, खिन्नौ, विरक्तौ, आपन्नौ, मेपतुस्तपः उत्तमं, तावेव हि पुनर्जातौ, "कलापग्राममास्थितौ", मरुश्च सूर्यवंशीयः, देवापिश्चन्द्रवंशजः; (२७०); महद् तपम् तपन्तौ च, "महायोगबलान्वितौ", काले काले मनुष्येषु चातुर्वर्ण्यव्यवस्थितिं, जीर्णोद्धारं च, कुरुतः, आदेशात्तु महामनोः; सावर्णि-व्यासौ तौ एव भाविनौ अष्टमेऽन्तरे। मनोः सप्तर्षयः संति, प्रत्येकस्य, चभासवः; ज्ञानानां व्यास-कर्ता यः तेषां, व्यासः स कीर्तितः; अन्येषां अन्यकृत्यानि, राष्ट्रे वै मंत्रिणां यथा। स्वायम्भुवेन मनुनाऽदौ धर्मा ये प्रवर्तिताः, अवरैः 'मनुभिः' तेषु क्रियते परिवर्त्तनं, संकोचः, परिवृद्धिर्वा, देशकालानुसारतः; तत्रदैशीयऋषिभि'श्च धर्मस्तु व्यवसीयते। एवमेव प्रवृत्तास्तु धर्माश्च, स्मृतयो, बहुः; स्वायम्भुव-कृतं किंतु सर्वानुस्यूतमस्ति वै; चातुर्वर्ण्यं, प्रकृत्यैव, सर्वसंग्राहकं, यतः। अनेन विधिना, सर्वे धर्माः, सर्वाश्च जातयः, 'मानवानां' समानेयाः धर्मे नित्ये तु 'मानवे'। यदि न क्रियते त्वेवं, मिथ्या-पार्थक्य-दर्शनाद्, विनाशः एव भविता हिन्दू-धर्मस्य, निश्चितं। 'भेदात्' क्षयः, चयो'ऽभेदात्'; एतत् प्रत्यक्षमेव वै; तथाऽप्यविद्या-प्राबल्याद्, 'भेदः' एव प्रसार्यते। (२८०)। 'अभेद-भावो' वेदान्तैः मौनमस्याय घोषितो यत्र, तत्र 'भेद-भावो' विकरालो विजृम्भते, वेदान्त-घोषं आरावं, घोरं नर्दति नर्दति, प्रसिष्यन् वृत्रवद्, धर्मं, 'इन्द्रो' (राजा, शासको) यदि न रक्षति,'दधीचि-आत्म-चलेद्' जातेन अनिवार्येण

द्वेतिना, तपो विद्या-मयेन-र्पि तेजसा समृतेन च। (२८३, आदित ३८१२श्लोका)।

---

ॐ

## १५ अध्याय

### उच्छास्त्रवर्तिनां राज्ञां नियमनं कथं ?

(२२) प्र० "क्षत्रस्याति प्रवृद्धस्य", राज्ञोऽप्युच्छास्त्रवर्तिनः, "ब्रह्मैव सन्नियन्तृ स्यात्, क्षत्रं हि ब्रह्मसंभवं" (म०), इति यन्मनुना प्रोक्तं, अत्र तत्सम्भवेत् कथं, कथं नु ब्रह्मजं क्षत्रं, कथं वा तन्नियन्त्रणं ?

उ० ज्ञानेनोपदिष्टं शास्त्रं, ब्रह्म च विविधं तथा, ज्ञानेनैवान्यशास्त्रार्थैर् विद्वत्सुमपि शक्यते, ज्ञानं ब्रह्म, तथा क्षत्रं शस्त्रं, इत्यत्र रूपकं। ऐतिहासिक एवापि तथाऽर्थोऽन्योऽत्र विद्यते, 'ब्रह्मा'ऽदेशात् प्रजाभिस्तु 'मनुर्' आद्यो वृतो नृपः, निदर्शनत्वेन ऐतिह्येन इत्याख्यानं तु कीर्त्यते (म० भा०शा० ६६), प्रत्येकजातौ वृद्धानां श्रद्धेयानां कदम्बकं 'ब्रह्मा'-इति बहुमान्यत्वाद् इहद्यापि वक्ष्यते, एकोऽथवा वृद्धतमः सर्वमान्यः 'पितामह', तस्यादेशात् नरो योग्य राज्ये विनियुज्यते, तथैव अस्याज्ञयाऽयोग्य राजत्वाद् अपकृष्यते, ज्ञानिनो 'राजकर्तारो' ह्यत्र क्षत्रोद्भव कारणं। अथ च,'ब्रह्म' तेजो वै, सुसम्भूय, 'महाजन', क्षत्र उत्पथगं राज्याद् बलेनैवापरोपयेत्। "स्ववीर्याद् राजवीर्याच्च स्ववीर्यं बलवत्तरं, × सर्वं तु तपसा साध्यं,तपो हि दुरतिक्रमं"(म०) (१०), यदि वा एकस्य विप्रस्य महर्षेः, तपसाऽर्जिता, योगसिद्धा भवेद् शक्तिः तादृशी ऐश्वर्यमयी अपि, उच्छास्त्रवर्तिनं भूपं शापेनैव स निर्दहेत्। इतिहासपुराणेषु, दग्धाना शापवह्निना ऋषिभिः शतशो राज्ञां सन्ति उदाहरणानि हि। कृष्णस्यापि समुद्धद् अविधवद् यादवं कुलं, अतिवीर्यमदोन्मत्तं, ऋषिशापेन शोषितं। 'ऋषते' 'ऋच्छते' प्राप्त्या सत्त्वस्य परमात्मनः, 'ऋणोते' हननात् शापैः, 'ऋषि'शब्दो निरुच्यते। "प्रजानां तु नृपः स्वामी, राज्ञः स्वामी, पुरोहितः" (म० भा०), एवं हि मानवे धर्मे राजा सृष्टोऽभिरक्षिता, ज्ञानी च यन्ता तस्यापि, विधाता, चानुशासिता। "विधाता, शासिता, वक्ता, मैत्रो 'ब्राह्मण' उच्यते", × सज्ज्ञानवान् प्रकृत्यैव "देवानामपि दैवतं; प्रमाणं चैव लोकस्य, ब्रह्म एव अत्र तु कारणं" (म०), यस्मिन् 'ज्ञानं', 'ब्रह्म', 'वेद' भाति, न 'ब्राह्मणो'ऽस्त्यसौ; यस्मिन् क्षत्रनिय

मूल्यं नास्ति, न 'ब्राह्मणो'ऽस्त्यसौ । टीकायां च प्रमाणत्वे, मूलं, ज्ञानं, हि कारणं ।

### 'हिन्द'-'हिन्दू' शब्दोत्पत्ति

(२४) प्र० सनातनस्य, चआर्यस्य, वैदिकस्यानुयायिनः, धर्मस्य मानवस्य, अभिधीयते 'हिन्दव' कथं ? (२०) ग्रन्थेषु तु पुराणेषु शब्दोऽयं न उपलभ्यते ।

उ० इतो नदीनां पञ्चानां, प्रान्तः पञ्चनद स्मृतः, तेषां तु पाश्चात्यतम 'सिन्धुर' नाम महानद, वर्षासु अस्ति स विस्तीर्णो महान् 'सिन्धु' समुद्रवत्, 'सैन्धवा' इति नाम्ना च ज्ञातास्तत्रत्यवासिनः, समस्त स प्रदेशश्च 'सिन्धु'-'सिन्ध' इति कीर्तितः, तस्यास्ति पश्चिमे, देश, 'पर्शिया' योऽभिधीयते, 'फ़ारस्' इत्यपि स ज्ञात, तद्भाषा चापि 'फ़ारसी', मुस्लिमआक्रमणात् अथाद्, धर्मस्य परिवर्तनात्, भाषायां च तथैव 'अर्ब' शब्दानां परिमिश्रणात् । 'पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना" (रघुवंश), इत्येव कालिदासेन तद्देशीयास्तु वर्णिता । द्वौ प्रान्तौ तस्य, 'पर्सिस्' च, 'पार्थिया' चेति, कीर्तितौ, अभूताम् पुरा काले, इत्यैतिह्यस्य कोविदाः । 'पार्थाः' आसन्, द्वितीयस्य, सुप्रसिद्धा धनुर्धराः, सर्वे ते प्रायतोऽभूवन् सुबाहा सव्यसाचिन, सम्मुखस्थांश्च, पृष्ठस्थान् चतुर्दिक्षु स्थितानपि, बाणैरविध्यन् शत्रूस्ते, पटिता रणकर्मणि । सर्वस्य तस्य देशस्य नाम 'आर्याना'ऽपि चाभवत्, परिवर्तैश्च भाषया कालेन 'ईरान्' इति, क्रमात्, 'आर्या' एव हि ते ऽभूवन् 'आर्याना'-देशवासिन, (३०), आथर्वणस्तु वेदोऽभूद् अमीषां, इति केचन, 'ज़िन्द आविस्ता'-इति नाम्ना यत् प्रसिद्धमस्ति साम्प्रतं । यद्देऽङ्गिरसा चापि भृगुभिस् तु समुर्थिते, भारताद् भार्गवा केचिद् 'आर्याना' ('ईरान') जग्मुरञ्जसा, (इतीदृशा कथा सन्ति, निश्चयस्तत्र दुर्लभः); कंठनिमित्ति भेदाश्च, 'सकार', तै, 'हकार' यद् उच्चार्यते, अत तै शब्दा संस्कृता विकृता बहु, 'सिन्धुर्' 'हिन्धु', 'सैन्धवा श्च, 'हैन्धवा' इत्यतोऽभवन्, क्रमश, 'हिन्द', 'हिन्दू', च, 'हिन्दुस्थाने ति चैव हि, 'हिन्दी' च, 'हिन्दोस्ताने ति, चाभूत् शब्द परम्परा, 'ग्योनिया' चाति नाम 'ग्रीस'-देशस्य यत् पुरा ऽभवत्, तद् 'यवनै'रेव वासितत्वाद् अभूद् इति ; उक्तं च मनुना प्रोक्ते च यवना क्षत्रजातय ; "शनकैस्तु क्रियालोपाद्, इमा क्षत्रियजातय, वृषलत्वं गता लोके, ब्राह्मणादर्शनेन च, पौण्ड्रकाश्चोड्रद्रविडा, काम्बोजा, दरदा, खशा, पारदा, पह्लवा, चीना, किराता, यवना शका" (म०) । ( 'ब्राह्मणादर्शनेन'

इति शब्दार्थोऽन्यत्र वर्णितः )। एवमेव 'असुरा'अपि देशे 'आसुरिया'-ऽभिधे 'आसीरिये'ति चऽख्याते वासयाचक्रिरे पुरा, 'देवाना' भारतीयाना 'भ्रातृव्या' एव ते ऽभवन्। (४०) प्रसिद्धं हि पुराणे यद्, 'असुर'-परनामका दैत्या सर्वेव देवाश्च, भ्रातरो हि विमातृजा। 'द्वन्द्वानि' देव दैत्याना प्रकृत्या शाश्वतानि च। पुराण'रूपक'स्यास्य बहवोऽर्थो भवति वै, आध्यात्मिक, सर्वथाऽधिदैविक, च ऐतिहासिक। 'सिन्धु' देश, 'हिन्द' इति पारसीकैरम्यधायत, भारतस्य समग्रस्य सा तु जाताऽभिधा प्रमाद्, 'ग्रीका'दि 'यवनै' पश्चाद् 'इंडिया' इत्येव सा कृता, यूरोपीयैः तत सर्वैरद्यावधि तथोच्यते। 'हिन्दू' शब्दो न 'धर्मस्य', देशस्यैवास्ति, सूचक, 'हिन्दू' 'हिन्दी'ति वा नाम्ना सर्वे भारतवासिन पारस्यादिभिरुच्यन्ते, 'हिन्दवो', 'मुस्लिमा' अपि। 'हिन्दू' नाम्ना तु यो धर्मः साम्प्रत मुच्यते जनै, तस्य स च नाम रूप 'मानवो धर्मः' एव हि, यत स 'मनुना'ऽऽदिष्ट, धर्मवर्णाश्रमात्मक, मानवाना तु सर्वेषा इहामुत्र हिताय वै। हिन्द हिन्दू शब्दयोस्तु प्रयोगे, विविध मत। 'हिन्द देशोद्भव धर्मं य क अपि अनुयाति च, स एव हिन्दू नाम्ना स्याद् व्यवहार्यो, न चापर', एतन्मत तु केषाचित्। चिन्तनीय तदस्ति वै, (५०), 'सनातनस्य' धर्मस्य, 'वैदिकस्य', 'आर्ये' रूपिण, 'बौद्धस्य' सद्बुद्धिमत, 'मानवस्य' विशेषत, सामान्यतो मनुष्याणा सर्वेषा च प्रधानत, भूखण्डैकपरिच्छित्ति किं स्याल्लोकोपकारिणी ? मन्वाशयानुकूला वा ? किं वा स्याद् बुद्धिसंगता ? "प्रकृति पार्वती माता, पिता च पुरुष शिव, भ्रातरो मनुजा सर्वे, स्वदेशो भुवनत्रय"–इत्युदारमतीना तु प्राग् मुनीना हि समत, अर्वाग्भिश्च तथैवोक्त विशालहृदयैर् मुदा–"अय निज परो वेति गणना लघुचेतसा, उदारहृदयाना तु वसुधा एव कुटुम्बक"। 'हिन्द'-देशोद्भवा धर्मा के,इत्यत्रापि सशय ; 'हिन्द'देशस्य सीमान च, सदिग्धमिद्र तथा, विशेषणोत्तरे, वारवार ते पर्यवर्सयन्, बौद्धकाले तथैवासीत् स्मृत, सर्वासु दिक्षु अपि, पारे चापि समुद्रस्य,यद् बृहत्तरभारत, प्राचीनस्य अस्य देशस्य नाम 'भारत' उच्यते, उत्तरीयो महान् भागोऽस्य 'आर्यावर्त' उदीर्यते, "उत्तर यत् समुद्रस्य, हिमाद्रेश्चैव दक्षिण, वर्ष तद् भारत नाम, भारती यत्र सतति" (भा०), (६०), भाषा तथाऽस्य वर्षस्य, सस्कृता, सुपरिष्कृता, बह्वर्थगर्भ एकैकशब्दो यस्यास्तु, 'भारती'। "दक्षिणापरतो ह्यस्य ( दक्षिणतश्च, अपरातत:

पश्चिमतश्च ), पूर्वेण च महोदधिः, हिमवानुत्तरेणास्य, कार्मुकस्य यथा गुणः, तदेतद् भारतं वर्षं, सर्वबीजं, द्विजोत्तम !" ( मार्कं०पु० ); "गंगे च, यमुने चैव, गोदावरि, सरस्वति, नर्मदे, सिन्धु, कावेरि, जलेऽस्मिन् सन्निधिं कुरु"; "इमाः आपः शिवतमाः, इमाः राष्ट्रस्य भेषजीः, इमाः राष्ट्रस्य वर्धनीः, इमाः राष्ट्रभृतो-यमाः" (वे०);पुण्यकार्येषु एवं अत्र आवाह्यन्ते सप्तसिन्धवः,इमं देशं चतुर्दिक्षु पोषयन्ति हि याः सदा ; ( अन्याश्च सरितः वेदे पठ्यन्ते यत्र तत्र तु )। "माहेन्द्रो, मलयः, सह्यः, शुक्तिमान्, ऋक्षवान् अपि, विन्ध्यश्च, पारियात्रश्च, सप्तात्र कुलपर्वताः", (मात्स्य०अ०९५); (अन्यनामानि चाप्यन्ये पठन्ति अत्र तु केचन )। "अयोध्या, मथुरा, माया, काशी, कांची, अवन्तिका, पुरी द्वारावती चैव, सप्तैताः मोक्षदाः"। एवं पुराणेतिहासे देशस्यास्य तु वर्णनं, कृतं यद्वै प्रदेशानां, प्रान्तानां चापि, भूरिशः, तीर्थयात्राप्रसंगे, वा वनवासादिवर्णने, अस्माद् देशाद् बहिष्ठानां देशानां चापि वर्णने,(७०),(सीताऽन्वेषे यथा पृथ्वी-परिक्रान्तेस् तु वानरैः),यद् कृतं, तेन सर्वेण सीमा निश्चीयते हि सा, भारतस्य तु, या प्रोक्ता मार्कंडेयपुराणादिभिः।

बाळ-गंगाधरो 'लोकमान्यः' श्री तिलकाभिधः, पूर्वपश्चिमविद्यासु निष्णातो-ऽद्भुतपंडितः, भारतोद्धरणे व्यग्रः, कारागृहे बहु पीडितः, 'हिन्दु'-धर्मस्य सः तु एवं लक्षणं पर्यभाषत—"प्रामाण्यबुद्धिर्वेदेषु, साधनानां अनेकता, उपास्यानां अनि-यमः, एतद् धर्मस्य लक्षणं"। श्रीमान् सावर्करो नाम्ना दामोदर-विनायकः, हिन्दूनां साहसी नेता वीरः स्वाराज्य-पूजकः,तदर्थं यतमानश्च कारागारे पातितो बहु, विविनक्ति सः हिंदुं तु लक्षणैरीदृशैः, यथा—"आ-सिंधु, सिंधुपर्यन्ता, यस्य भारत-भूमिका पितृभूः पुण्यभूश्चैव, स वै हिन्दुरिति स्मृतः"। एवमिच्छंति विद्वांसः केचित्; चिन्त्यं तु तद् मत। 'वेदे प्रामाण्यबुद्धि'श्चेद् हिन्दुत्वस्य विशेषणं, हिन्दु-त्वं बहुकोटीनां सद्यः एव विहन्यते, ईसा-मुहम्मदादीनां धर्मेषु च निमज्यते। (८०)। श्रुतेर् मंत्रे निपतिते, अकस्माद् अपि तु श्रोत्रयोः, शूद्रस्य कर्णौ पूर्येतां त्रपुणा जतुनाऽथवा—एव यदाज्ञा 'विप्राणां', 'वेदे प्रामाण्यबुद्धिता' 'सच्छू-द्राणां' अपि कथं ? 'असत् शूद्र'-कथैव का ! 'अस्पृश्य'जातयः सर्वाः हिन्दुत्वात् स्युर्निषेधिताः, यथाशः एव ; एवमन्येऽपि बहवो गणच्छिन्नाः। 'निर्ग्रन्थ'जैन-लक्षाणि स्युर् हिन्दुत्वाद् बहिष्कृताः; बौद्धानां कोटयश्चापि, यद्वेदः 'पिटक-ग्रन्थः'; सिक्खानां अर्धकोटिश्च तथा स्याद् विमुखीकृता, येषां प्रामाण्यबुद्धिस्तु 'ग्रन्थ-

साहय'-नामके,ग्रन्थे,संकलितो माम्यैर् 'गुरुभि'र्दशभिस्तु यः। तथा च सन्ति बहवो, येऽपि वै ब्राह्मणयुवाः, सर्वांशानां च वेदानां आदरं नैव कुर्वते; आचरणं तथा यैर् अन्यग्रन्थविदस्तथा वदति, अशुचिमेनाहो !; स्वयं कृष्णमपीव च, गीतायां कर्मकांडं च वेदप्रोक्तं धिगायति। "सामवेदः स्मृतः पैत्र्यः तस्मात् तस्याशुचिर्ध्वनिः" (म०)। बहूनां वेदवाक्यानां अर्थश्चापि न बुध्यते, प्रामाण्यबुद्धिः तेषु स्यात् कथं एतादृशेषु च; ईदृशानि तु वाक्यानि हठाद् ये स्थापयंति वै, तत्र कस्यापि संतोषो न भवत्येव कश्चन; पृथैव तद्गरुकृचापत्यं, यथैव नटकूर्दितं। (९०)। अतो नूनं व्यवस्थाऽत्र कार्या, या समयोचिता, नेतृभिस्तु समाजस्य विद्वद्भिर् दूरदर्शिभिः। यो वर्णयितुं आम्नायमिच्छेन् 'मानव'-धर्मिणं, वर्णाश्रमव्यवस्थान्तर् वस्तुं यः स्वीकरोति च, यो वा वदति चऽात्मानं 'हिन्दुं', स्याद् 'हिन्दुर्' एव सः; यथा हि मनुनाऽप्रोक्तं "यश्चात्मानं निवेदयेत्" (म०)। यथैव 'वैष्णवो' हिन्दुः, 'शैवो' हिन्दुर्यथैव च; तथैव 'जैनो' हिन्दुश्च,'सिक्खो' हिन्दुस्तथैव च, 'बौद्ध'श्च सर्वथा हिन्दुः, 'क्रिस्चनो' 'मुस्लिमो' पि च; हिन्दूनां एव भेदास्ते सर्वे 'हिन्द'निवासिनः। शूद्रस्य मंत्रश्रवणे त्रपुणा जतुनाऽथवा कर्णयोः पूरणस्यास्ति त्वाशयो ह्यन्यदेव वै; चौर्येण, रुपटायन्, यस्तु गोप्यं मंत्रं, कथचन, दुष्टभावेन, हरति, महाघोरेयन्त्रा यथा शस्त्रास्त्राणां तु, शत्रुभ्यो दातुं, लोकक्षयाय हि, दुष्प्रयोगाय—सोऽत्र तु दंड्यो भवति सर्वथा। प्रत्यक्षमेव ननु एतद् अद्यापि खलु दृश्यते; सर्वदेशेषु, राष्ट्रेषु, विपक्षस्य स्पशाः सदा युद्धकाले निगृह्यते, वध्यंते चापि निर्दयं, विदेशीयाः, स्वदेशीयाः, भवेयुस्ते, स्त्रियोऽपि वा।(१००)। नवीना सुव्यवस्था चेन् न क्रियेत ईदृशी सदा, न जैनाः, नापि बौद्धाः वा, न सिक्खाः, नान्यपथिनः, लिंगायताः, तांत्रिका वा, भविष्यंति तु हिन्दवः, न चापि अस्पृश्यजातीनां कोटयः। यैस्तु न श्रुतं, वेदस्य जातु नामापि, कुतः प्रामाण्यबुद्धिता, तेषां, अस्मिन् भवेद् ? किंतु गण्यास्ते चापि हिन्दवः। चातुर्वर्ण्यव्यवस्थानं यत्र यत्रैव वर्तते, आर्यावर्तस्तु तत्रास्ति यत्राऽऽर्याः निवसंति च; यत्र नैतद् व्यवस्थानं म्लेच्छऽावासः स एव हि, भारतस्य भवेद् भागः सो, ऽन्यदेशस्य चैव वा; "कृण्वंतो विश्वमार्यं" चेति आदेशो विश्रुतः श्रुतेः, संकोचितेऽर्थे तु, कथं चरितार्थो भविष्यति ? यस्य भारतभूर् एव पितृभूः पुण्यभूरपि, स कथं पृथिवीमग्र्यां, समग्रां अर्हयिष्यति ? कथं च पठितुं श्लोकं शक्ष्यति—"समुद्रवसने, मातः !, पर्वतस्तनमंडिते, विष्णुपत्नि !, नमस्तुभ्यं,

पादस्पर्शं क्षमस्व मे" ? इत्यया विमुचन् प्रातः क्षमा 'हिन्दु ' एव तु वन्दते। "सर्वसहा,क्षमामूर्त्ति ,क्षमा,धरित्री वसुन्धरा,विश्वम्भरा,रसमयी,रसा, सर्वस्य पोषिणी—उदारचरितानां तु 'वसुधा' एव कुटुम्बक '। (११०)। वेदप्रामाण्यबुद्धौ वा रौक्ष मान्यस्य चऽाग्रह कस्माद्, यदा स वेदांस्तु, पौरुषेयान् हि मन्यते, उत्तरध्रुवभागे च, पृथिव्या ,सहितान् अपि ? वेदान् अपौरुषयांस्तु पुरुषो यो न मन्यते, तस्य नून मयुक्त स्याद्, वेदप्रामाण्ये आग्रह । 'वेदश्च किं' इति प्रश्नस्योत्तर कथित पुरा, स्वय व्यासेन, भीष्मस्य वदनात्, शान्तिपर्वणि, अन्येऽखिलस्य सकल पूर्वमेवास्ति उदाहृत , 'सत्ज्ञान अखिलं वेद ', निष्कर्षो हि अवसीयते। गृह्यते चाप अर्थश्चेद्, वेदप्रामाण्यबुद्धिता,लक्षण सर्वहिन्दूना सदा भवितुमर्हति ; ' उपास्याना अनियम , साधनानामनेकता", द्वे चापि लक्षणे हीमे निर्दोष भवतस्तदा , तथाऽप्युपास्य परम परमात्मा इति यत्स्मृत,उपास्याना उपास्य यत्, तत्तु सार्वत्र्य एव हि। "पितृभू पुण्यभू "शब्दौ व्याख्यायेतेऽपि विस्तराद् यदि, तौ च घटेतां, तद्(तर्हि, तदा), हिन्दुत्वस्य तु लक्षणे , सर्वेषा हि मनुष्याणा मनुर्ब्रह्माऽऽदिम पिता' , पुण्य च कर्तुं सर्वत्र शक्यते सात्त्विकाऽऽत्मना, भुवो वै सर्वदेशेषु , भारत चापि भू गत। एव सर्वं समाधेय प्राक्तन नूतन मत। ( १२० )।

रूपकाणा व्याख्यान।

(२५) प्र० 'रूपकाणि' पुराणाना उद्दिष्टानि पुन पुन , केषाचिदत्र व्याख्यान कस्मान्न क्रियतेऽधुना ?

उ० ग्रन्थेष्वन्येषु हिन्दी भाषक भाषाभ्या निर्मितेषु तु व्याख्यान यतित , पूर्व मयाप्येव तु संकुल, केषाचिद्, अन्येषा चाऽत्र यथामति उपकल्प्यते,निश्चयेन तु केनापि वक्तु तथाऽपि शक्यते आभाणक प्रसिद्धोऽय, 'वेदा वै कामधेनव ', तथैव च पुराणानि, 'यो यदिच्छति तस्य तत्' तेभ्य प्राप्य अतो ह्यत्र, यथामति विचार्य च ज्ञानविज्ञानसम्पन्न, युक्तियुक्त तथैव च, उपयोगेनमेवार्थ उपालिप्या महे वय।(१) 'समुद्रो वरुण आकाशौ' वेदे पर्यायवाचका , आश्चर्याणा समप्राणा आकाशो 'ऽद्भुतसागर ' , "भद्राणि वरुणस्य व्रतानि" ( वे० ) , "समुद्र इव दुर्बोधो, × गुप्तार्थो वरुणो यथा" (भा०); शून्य , सर्वार्थसम्पूर्णो, ऽव्यक्तो व्यक्त निधिस्तथा , खं, ब्रह्म, अण्डै असंख्येयैर् आचित चित्रितैर्बुभि , सूर्य , चन्द्रै , धरित्रीभि , ग्रह नक्षत्र तारकै, विविधाभिर् विभिन्नाभि सृष्टिभि पूरितैरपि ,

जगत्सु, असङ्ख्या अणव, प्रत्यञ्चो च जगन्ति, अपि (शो० शा०)। मूलप्रकृतिरे च अस्य 'शेषो', य शिष्यते सदा, (१०), नाम्नो परयास्ति 'अनन्तो ऽसौ,प्रलयेषु महत्स्वपि, सर्वा यस्मिन् प्रधीयन्ते विकृति व्यक्तयो पृथक्, 'प्रधान' तत्; समुद्रेऽस्मिन् प्लवते व्यापक सद्, फणासहस्रसहस्रैश्च सर्पवत् सर्पतीति च, स देव च जगत्सर्वं तस्योपरि अवलम्बित, फणे फणे च ब्रह्माण्ड, भ्रमण, गगने विसर्पण, देवपथो( मिल्की वे', स्वर्गंगा)महाअभोगो, असंख्यतारागणा फणा, 'विष्णु'-र्विसि-र्वनाद्, 'ब्रह्मा' बृंहणात्', 'शयनात्' शिव, शेते सर्वशरीरेषु गुहोऽव्यक्त सनातन, बृंहयन् जगता प्रात, विसिन्वश्च परस्पर, महत्तत्त्वस्य रूपाणि, प्रयोऽशश्च गुणात्मक, विष्णु' शेते तु 'शेषे अस्मिन् विश्व रचयन् 'बृंहयन्'। 'विष्णो' 'सूत्रात्मनो' 'नाभे' 'नालानि' च समन्तत प्रसृतानि, यथा विद्युत् नाड्यो देहे तु मानवे, सम्प्रदाये यथा सौरे विलताश्चार्करश्मय, तथैव 'विष्णो' 'सूत्राणि विद्युत् प्राण मयानि च,ब्रह्माण्डान्यपि अनन्तानि, विश्वानि च, जगन्ति च, एकीकृत्य अपि अनेकानि,सम्यग बन्ध्वा परस्परं,'धारयति',प्रवृत्याश्च 'धर्मं' व्यापारयति च (२०)। ब्रह्माण्डान्येव हि 'पद्मानि, यथोक्त शान्तिपर्वणि—"मानसस्येह या मूर्तिर्ब्रह्मत्वं समुपागता, तस्यासन विधानार्थं पृथिवी पद्ममुच्यते' (म० भा० शा० अ०१८०)। आदिदैत्यौ तु यत्, तत्र, विख्यातौ "मधु कैटभौ, विष्णुकर्णमलोद्-भूतौ, ब्रह्माण हन्तुमुद्यतौ" (दुर्गा०)—ओजस्य सात्त्वमाकाश, मल अस्य राजसम, ''तामसस्तु मधुर्जात कैटभश्चापि राजस" (शां०अ०३५७), कामाधिको मधुर्ज्ञेय, क्रोधभूयाश्च कैटभ, तौ 'ब्रह्माण' च, 'वेद' च, सर्वदा हन्तुमिच्छत, 'विष्णु', सत्त्वमय ज्ञान, सदा तौ च निगच्छति। "मधु कैटभौ, दुरात्मानौ" विधि अनु अधावता, "समुत्थाय ततस्ताभ्यां युयुधे भगवान् हरि, पंचवर्षसहस्राणि बाहु प्रहरणो विभु, तावप्यतिबलोन्मत्तौ महामाया विमोहितौ, उक्तवन्तौ 'वरोऽस्मत्तो व्रियतां', इति केशव, 'भवेतां अद्य मे तुष्टौ मम वध्यौ उभौ अपि', वञ्चिताभ्या इति तदा, सर्वं आपोमय जगद् विलोक्य, ताभ्या गदितो भगवान् कमलेक्षण, 'आवां जहि न यत्र उर्वी सलिलेन परिप्लुता', 'तथा', इत्युक्त्वा, भगवता शङ्खचक्र गदाभृता,कृत्वा, चक्रेण वै छिन्ने, जघने, शिरसी तयो "(दु०)।(२०)। स्वाधिकार चरित्वा एव बहून् वर्षान्,विजेयता, ज्ञानेन, कामक्रोधौ तु याति, आख्यानप्रशमो ह्यय।

*''ऋणानि त्रीणि अपाकृत्य, मनो मोक्षे निवेशयेत्'' (म०)। ब्रह्मपर्यंस्य च क्षेत्रं

जघन द्वेष मुच्यते, तत्साक्षात्कारेनेन दमन, ब्रह्मचर्यबलेन हि, अविप्लुतेन च, 'अनार्द्रे' तत्रैव क्रियते तयो। आन्तरौ च रिपू, कामक्रोधौ, धातुविनिर्मिते शस्त्राद्यैर्न विजीयेते, आन्तराभ्यां ततस्तु तौ सद्विचार विवेकाभ्यां बाहुभ्यां एव धारितौ, प्राप्ते युगोचिते काले, काल 'चक्रेण' निश्चिते, 'शिरसी' च तयोश्छिन्ने तेन, 'चक्रेण', विष्णुना। शिरो हि मूलस्थान स्याद् वेगानां, काम क्रोधयो वेगे हते, शरीराङ्ग भ्यस्त् खलु अवशिष्यता, न आत्यन्तिको विनाशो हि, सार्विको वा, भवेत् तयो, तन्त्रयोस्तु मायाया, अथ किं, त स्वरूपिणो। "आपो नारा इति प्रोक्ता, आपो वै नरसूनव" (म०), अपां अभावे, शुष्के तु, कामक्रोधौ न जीवत, तस्मात्साभ्यां उच्यते यद् 'अनार्द्रे नौ हनिष्यसि'। "विष्णु कर्ण मलोद्भूतौ" आदिदैत्यौ हि तौ कुत ? (७०)। श्रोत्रस्य विषय शब्द, आकाशस्य गुणश्च स, आकाशश्चापि भूत म पञ्चोपाधिर् आत्मन, उपाधिमलरूपे हि ते रजस्तमसी स्मृते, कामक्रोधौ, ययोरेव रूपौ तु मधुकैटभौ। उपाधेस्तु प्रसादांशो, सत्त्वम प्रतियोगि यत्, सत्त्व, तत्तु बुद्धिशक्ति, बाहुद्वय निरूपिता, पक्षं च प्रतिपक्ष चापेक्ष्य निर्णय कारिणी। (२) "देवासुरा प्रकृतय वासना या शुभाशुभा; दीव्यतेर्, द्योतनार्थस्य, 'देवा' इन्द्रियशक्तय, ज्ञानेनोद्भासिता यास्तु, विपरीता तमोमया, विषयेष्वैशविवेकेन रमणाद् 'असुरास्तु ता, ('असून् रान्ति', 'रमन्त च, असुषु, तस्माद् असुरा स्मृता')। सर्वेषु प्राणिदेहेषु शाश्वतोऽयं प्रवर्तते 'देवासुरो' हि संग्राम — इत्यभिप्राय बोधने, रूपेणाऽऽख्यायिकायास्तु, यथा ह्युपनिषच्छ्रुति" (छा० उ०, शा० भा०, १ २ १)। भरस्याश्च अप्रमेयाश्च द्वन्द्वीभूताश्च शक्तय, सच्चिदानन्दरूपस्य परस्य परमात्मन, विरुद्धगतय सर्वा, भ्रमद्भ्रमकारिका, विरोधेन विकर्षन्ति 'वासु' प्राण इतस्तत, शरीरं 'मन्दर' गिरि, प्रति 'ब्रह्माण्ड' एव च समुद्रमंथन ह्येतद् सदैवास्ति प्रवर्तित सर्वत्रापि च संसारे, प्रत्येके हृदये तथा। (५०)। 'वासुके', देवदैत्यैश्च, पर्यायेण विकर्षणाद्, उत्पद्यते 'अग्नि' घोरा, सद्यघात सर्वजीवने, क्रोधात्मक कराल विषं, दाहि, 'हलाहल'; 'शिवै' र्वृद्धै: प्रपीतेऽस्मिन्, धीरया, मन्थने पुन, जीवनस्योपयोगीनि 'रत्नानि' आविर्भवन्ति यै; तेषामर्थे पुन स्पर्धा पक्षपात, युद्धमेव च, सार्वत्रिकं, सार्वदिकं, एतज्जीवन चित्रण। वृद्धा कुटुम्ब सद्गु०ध, स्वशान्त्या शमयति हि।(२)'राहो' आख्यायिका स्पष्ट 'ग्रहण' स्यैव रूपक। सूर्याचन्द्रमसोर्मध्ये भू पृथ्वी यदाऽऽव्रजेत्, तस्याश्छाया तदा चन्द्र आच्छादयति च भशत, पूर्णतो?

घा, किपरकाण ; चन्द्रग्रहणमेव तत् । सूर्यभूम्योर्मध्ये, स्थित्वा , आयाति चन्द्रमा , सूर्यं विधीयते मावस्यैतेभ्यो भू नियामिनो, छाया चन्द्रमसमपि पतत्येव धरोपरि, अंशतः , पूर्णतो, वापि ; तत् सूर्यग्रहणं मतं । ( ५ ) वृत्रासुरकथा नूनं वर्षान्तरमेव हि, निरुक्त-नामके ग्रन्थे उक्त यास्कर्षिणैव तत् । विस्तारासु गूढ्यते पुराणैर्गुह्यभाषया ; तयां कथा च नैकत्र, स्थलान्तु स्थले-स्थले, किञ्चिदपि पुराणेषु कथ्यते स्वल्पभेदतः । (६०)। आसीत् 'सत्य'युग स्यान्ते वद्दिपूतो स एव ; सिंहासनस्य 'इन्द्रो' (राजा)ऽभूद् त्री अपि अभि'मान वान्, बृहस्पति उपाध्यायान्न नाम्युपसत्यो , स 'दौर'-स्यात्र प्रसिद्ध भयात् ; असुरा ( आसुरा माया ) तत् गुरुत्वात् पराऽभवन् । 'विश्वरूपं', 'विश्वकर्म'-सुत इन्द्रोऽवृणोत् तदा, पुरोहितं मार्षिकं तु याचक, विजयाय हि ; (प्रज्ञानं, ज्ञानं अध्यात्मं, विज्ञानं तु, आधिभौतिकं, यज्ज्ञानितो 'विश्वरूप'; 'गुरु' प्रज्ञानितः पुनः , 'विश्वकर्मा हि, विरचतां क्रियाणां मध्यमः, अनितः", निरपेक्षया , सुतस्तस्य, तेनैव भागिनो हि च , तिसृभिः शीर्षैः सस्वरागतान्, त्रिगुणानां तु सूचका ) । स तु सयाचयत् शक्र, असुरानपि अपाययत्, मातुः स्नेहात्, पक्षमागः "मातृस्नेहवशानुग", 'मोहन' वै, 'परोक्ष' ॥ । तद् "आलक्ष्य, सुरेश्वर , धर्म लीकं हि, देवानां (इन्द्रियाणां) तु हेलनं, (दुर्योग, विपरीतमुख्य), स्वच्छिरांसि अच्छिनद् रुषा" (भा०)। आदितेयाश्च दैतेया आदिकाले न भेदिता , सम्बन्धा यद्वत्स्तेषां बभूवुश्च परस्पर, यतस्तौ भ्रात्रयोर्भेद उभयोस्तु स्यवर्धत , त्वष्टु पत्नी, विश्वकर्म-माता, तु दितिजाऽभवत् । ब्रह्महत्या मनुग्यस्ता वधेनानेन तापिनी । (७०) । 'ब्रह्म हत्यां अञ्जलिना जग्राहापि सुरेश्वर , संवत्सरान्ते, तदर्थं, भूतानां स विशुद्धये, भूमि अम्बु द्रुम योषिद्भ्यः , चतुर्धा व्यभजद्धरि "(भा०)। 'ब्रह्म हत्या','सत्य' युग-शोषनासु समुत्थिता, प्रवर्तनाय-च त्रेतायाः , यस्यां वर्षा प्रवर्तते , इन्द्रेण हतन पक्षाश्च 'धूम मेघा' पतति च भूमौ, भाग् दीयमाना ये, गिरी भूता क्रमात् तथा । वृत्रासुरवधो नूनं यथार्था एव वर्णनं, अन्येषां च रहस्यानां, गूढयैव तु भाषया, यानि वै 'देव गुह्यानि' विज्ञातु न वय क्षमा । एकाग्रान्वेषणेनैव पाश्चात्यास्तान् विदन्ति हि । इरा आप , इरावास्तु वारिधि वारिद्स्तथा , एकप्रकारको मेघ 'ऐरावत'-महागज , देवोऽन्तरिक्षस्थानी च, निरुक्ते, तु,इन्द्र उच्यते, 'पर्जन्य'-'वायु'-'सोमा'दि नाम-

भिश्चापि सूच्यते, 'सोमो', 'अमृत', 'देव वारि', चन्द्रश्चापि 'सुधा' कर, पुत्रा सन्तो दितेरेव, मरुतस्तु इन्द्रसैनिका, 'प्रवहा'द्या, वहन्त्येते 'पर्जन्या'दि बलाहकान्। "ऐरंमदीयं हि सर" स्वर्गे, छान्दोग्य सूचितं, नाम इन्द्रधनुष श्चापि, 'मेघज्योतिर् इरम्मद' (८०)। 'विश्व रूपस्य' विज्ञानं उभयोर् उपकारक, 'देवानां' 'असुराणां' च, ज्ञानं, 'ब्रह्म' एव चाखिलं, अतो हत्याऽस्य भवति हि उभयोर्भयकारिणी, हृद्याम्मिविश्वरक्षार्थं ततस्तां व्यभजद् हरि "भूमिस्तुरीयं जग्राह, खात पूर यरेण वै, ईरिणं ब्रह्महत्यायाः रूपं भूमौ प्रदृश्यते, तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः, तेषां नियामरूपेण ब्रह्महत्या प्रदृश्यते, सदाकामवरेण अद्र तुरीयं जगृहु स्त्रियः, रजोरूपेण तासु अहो मासि मासि प्रदृश्यते, द्रव्य भूयोवरेणाऽप तुरीयं जगृहुर्मळं, तासु बुद्बुदफेनाभ्यां दृष्टं तद् हरिकिल्बिषं। हतपुत्रस्तत-स्त्वष्टा (विश्वरूपस्य च पिता, विश्वकर्मेतिनामा च) हुहावेन्द्राय शत्रवे, अथान्वाहार्यपचनाद् उत्थितो घोरदर्शनं, कृतान्त इव लोकानां युगान्त समये यथा" (भा०)। तं चापीन्द्रोऽवधीद्, दध्यङ्ङस्थेरस्थिमयेन च वज्रेण। केवलं अनेन, सारोऽस्थ्नो च, स एव हि मज्जेति आहितश्च, ज्योतिष्कृत् ('फास्फोरस्'–सार सूचितं ?)। अन्यत्रापि इत्यतेऽनेन, येतावी घनता गता मनुष्याणां तु देहा, ये भूमवद् हि अभवन् कृते। (९०)। 'वर्षणाद्', 'वृत्रनाद्', एव, 'वर्तनाद्' 'वरणाद्' अपि, आकाशमावृणोत्येष, वाष्पभूतं, भुव स्तवर, "येनाऽऽवृता इमे लोका तमसा त्वाष्ट्रमूर्तिना, कृताऽऽधरा इतु भूमौ, दैत्येन, दिवि चोत्तरा", शक्र ऐरावतारूढ तारसा पूर्व तु 'वृत्रति', 'विद्युर्वर्ष आकाशे', 'दीप्यन्त' 'शुलन्' तथा, 'वृकुणो' विद्युन्मयेनाथ वज्रेण तु, पुनः पुनः घोरं नदन् पतत्युर्व्यां, वर्षन्, पिशालितो, जलं। वृष् धातु सेचने, हिंसा क्लेशयो, शक्ति वधने, तथा प्रजन सामर्थ्ये। सर्वं वर्षेऽनुभूयते, खात पूर्तिश्च, भेदश्चापि ईरिणे उर्वरयोस्तथा, शाखाछेदे विरोहश्च, निर्यासा विविधा अपि, जलानां द्रव्यभूयस्त्वं, आविरूप्यं च फेनिलं, नारीणां आर्तवं, कामो नित्यं स्त्रीपुंसयोस्तथा। अमैथुना कृते सृष्टि, मानसी केवलेच्छया, स्त्री तु भेदस्तदा नासीत्, निर्लिङ्ग हि शरीरिण; न चाप्येतादृशा वृक्षा, न मेघा, न च वर्षणं, अन्यथैव तथाऽऽहार, सूर्यश्चापि दिने दिने। महाहत्याविभजनाद् 'ब्रह्म', ज्ञानं, विवर्धते, अवस्थानां परावृत्त्या विज्ञानानि नवानि हि, उत्पद्यते ऽथ गार्हस्थ्य-कृषि आदि विषयाणि हि। वृत्राख्यानेन रूप्यन्ते

वार्ताः भूयस्यः ईदृशाः। (१००)। मिताः वाक्याः महर्षीणां अभिशापाः भवन्ति हि; अर्थाश्च वाक्प्रभावरूपं, अर्थस्यानुरूपमेव वै। (५) गुरुपत्नी, तारानाम्नी, स्वपत्याः पुरा, अभवत् संकुल-प्रसङ्गं भूरि सत्योक्तानां, च धर्मं; मित्रार्थं दुर्विनीतानां बालानां इव, यावता, अन्योन्यं मृदुनता अपि, प्रायशस्त्वगुरुपदेशनात्। यथा भूमेरिदानीं तु चन्द्रः एकोऽस्त्युपग्रहः, तथा बृहस्पतेः सन्ति नव चन्द्राः उपग्रहाः; तत्प्रभूयते यत्, प्राक्काले, तेषां अश्विनुपग्रहः, बुधश्चन्द्रमसाऽहृतः, तेन सम्मर्दमाप च, भ्रमाम्भो च तदृतासध्यां 'बुधो' जातो नवो ग्रहः एवमेव हि ज्ञायते, भूमेर्मर्दनि कल्पते, 'वराह'-विष्णोः भूमेश्च, जन्म भौम ग्रहस्य वै। (६) पूर्वं 'अश्वस्य'-शब्दस्य अत्र निर्वचनं कृतं, तद्वदेव निरुक्तिः स्याद् 'अश्विनी'-ति पदस्य च; 'नासत्यौ' 'नासिका'-जातौ, श्वासः प्रश्वास एव च, प्राणापानौ, 'देव'-वैद्यौ, 'अश्विन्या'स्तु 'कु-मारकौ', आवानां चापि रोगाणां कुत्सितानां विनाशकौ; (११०); इन्द्रियाणि तु देवाः वै; "प्राणायामः परं बलं; × "प्राणायामैर्दहेद्दोषान्, धारणाभिश्च किल्बिषान्, प्रत्याहारेण संसर्गान्, ध्यानेनानीश्वरान् गुणान्" (म०)। सूर्यस्य भार्या 'संज्ञा' च, तस्या 'छाया' तथैव च; वैवस्वतो मनुः, संज्ञाऽपत्यानि, च यमी-यमौ; छायायाश्चापि सावर्णिः, तपती च, शनैश्चरः; संज्ञायाः अश्विनीरूपधारणं च, कुमारयोः जननं चाश्वरूपात्तु सूर्यात्; सूर्यस्य चैव हि रश्मीनां अतितिग्मानां धर्षणं विश्वकर्मणा, चक्रे, भ्रमति वेगेन तीव्रेण, भ्रमेण चाक्रमता, तेजसोऽस्याधिपत्यस्य सह्यत्व-कारणाय हि, यतो सूर्यस्य नामाभूत् नवं अन्यद् 'विकर्तनः'; इतीयं बहु-वृत्तान्ता बह्वर्था विपुला कथा। (हिन्दी भाषा 'रहस्यायां' वर्तितास्ते 'प्रयोजने'; अन्ये ग्रन्थे च विस्तीर्णे लिखिते चाङ्गलभाषया)। (७) "करपदः, पदपद, मूर्धः" (निरुक्तं); भूः, द्विसिक्थ-त्रिनिम्नथा, तथाऽन्यानि रूपाणि यानि उक्तानि त्रयोदश भाष्यांशेन अस्य; तज्जाताः मुख्याः सर्वाश्च 'जातयः', सर्वेषां जीवजन्तूनां भूमेः, याः स्युः त्रयोदश। (१२०)। (८) विन्ध्यो व्यवर्धत उच्छ्राये, हिमवत्स्पर्धया, तथा यत् सूर्यस्यरोधोऽभूद्; देवाः ईयु पितामहं; अगस्त्याय अदिदेश एनान्, विन्ध्यस्याऽयं गुरुर्यतः; देवप्रार्थनया, अगस्त्यः, चिकीर्षुस्तत्सहायतां, उत्तरस्थात् स्वधाम्नस्तु दक्षिणाय चचाल ह; यदा विन्ध्यान्तिकं प्राप्तः, पर्वतः प्रणनाम तं, दण्डवत् पतितो भूमौ; अगस्त्यस्तु शशास तं, प्रत्यावर्तेऽहं न यावत्, शयानः तावद् आस्स्व वै! आख्यानस्याक्षरार्थोऽस्य बस्य प्राज्ञस्य तोषकः? अगस्त्य-तारकं ह्यासीत् ध्रुव-

स्थाने पुरा युगे; भूमेर् अक्षस्य सरणाद्, अगस्त्यो दक्षिणां दिशं अदृश्यत प्रस्थित-वद्, भूकम्पश्च महान् अभूत्, विन्ध्यपर्वत-पातश्च, तथा एकाब्धेश्च शोषणं ; पुन-र्जलैर्महासागरसंपूर्तिश्चाभूत् क्रमाद्, इति । पुनः सोऽच् चेद् अक्षोऽयं, अगस्त्यश्चोत्तरं व्रजेत्, पुनर्भवेद् महाकम्पः, जलस्थल-विवर्त्तनं, विन्ध्यस्य पुन'रुत्थानं', हिमाद्रेः 'पतनं' तथा । ज्योतिष्-भूगर्भ-शास्त्रोक्ततथ्यानां तु सहायतः, आख्यानस्यास्यमर्थो हि कथंचिद् अनुमीयते । "यचेदं दृश्यते किञ्चित् जगत् स्थावरजंगमं, तत् सर्वं अस्थिरं, ब्रह्मन्, स्वप्नसंगमसंनिभं ; (१३०) ; शुष्कसागरसंकाशो निम्नातो योऽद्य दृश्यते, स प्रातर् अभ्रसंवीतो नगः सम्पद्यते,मुने !; यो धनव्यूहविस्तीर्णो विलोड-गगनो महान्, दिनैरेव स याति उर्वीसमतां कूपतां च वा ; यदंगं अद्य संवीतं कौशेयस्रग्विलेपनैः, दिगम्बरं तदेव श्वो दूरे विसरिताऽवटे; ध्रुवोऽप्यध्रुवजीवोऽस्ति, कैवआस्था मादृशे जने ; सोमोऽपि व्योमतां याति, मार्त्तण्डोऽप्येति खंडतां, धराऽपि याति वैधुर्यं, कैवआस्था मादृशे जने!!" (यो० वा०) । (९) मेरुः पर्वतराजोऽस्ति, भू-मध्ये चापि संस्थितः, देवानां आलयश्चापि ; त्रयस्त्रिंशाश्च देवताः ; महा-ईशश्च उ-मया सार्धं शिखरे रमतेऽस्य च ; गंगा त्रि-पथ-गा चापि शिरसि अस्य विराजते;—योगिनां तु, शरीरस्य मर्वं एतद्धि रूपकं । 'पर्वभि'र्निर्मितो यस्मात् तस्मान्मेरुस्तु 'पर्वतः' ; 'मेरुदंडः', पृष्ठ-वंशः शरीरे मानवे च सः ; तत्र संचारिणी देवी शक्तिराद्या तु 'पार्वती' ; (१४०) 'उ'-कारस्य निषेधेन, मा-इति-'उमा'ऽपि स्मृताऽस्ति सा; चाहिम्पाः त्रिविधाः नाड्यः, ज्ञान-इच्छा-कर्मणां अपि; मुख्य-नाडीत्रयं तत्र 'त्रिपथं' च 'नदी-त्रयं' एकीभूतं, 'सुर'-सरिद्, 'गंगा' वा 'गमनात्' सदा ; मेरोर् मूर्धि स्थितो देवो ब्रह्मरन्ध्रे महेश्वरः ; अनन्तानां च 'केलीनां' तयोः 'कैलासः' 'आसनं' ; मानस्यः केलयः ताश्च, सरम् तस्मात् 'मानसं' ; 'दीव्यंति', यत्तु क्रीडंति, विषयैरिन्द्रियैरपि, तस्माद् 'देवाः' इति प्रोक्ताः ताश्चाः प्रकृतिशक्तयः; अक्षाभिमानिनो देवाः, पंचभूताभिमानिनः, महेश्वरस्य-'आत्मन'स्तु सर्वे ते वशवर्तिनः ; 'इदम्' द्रावयंति , अस्माद् आत्मा 'इदंद'स्तु कथ्यते ; "इदंद्रं सन्तमात्मानं इन्द्रं आचक्षते बुधाः" (ऐत० उ०); 'देवानां ईश्वरश्च इन्द्रः', इति पौराणिकी प्रथा ; त्रयस्त्रिंशाश्च पर्वाणि, 'गुटिकाः', वलयानि वा, 'मेरो' भवंति यानि इह, 'देवा'न्नावन्ति तानि च; प्रत्येकगुटिकायाश्च नाड्योऽ-

क्षान् प्रति निर्गता, 'ब्रह्मनाल' सुपुर्णैव, तथा च 'मणिकर्णिका', 'हिमालय'श्च, 'काशी' च, 'कैलासो', 'मानस' सर —एतस्सर्वं ▮ मस्तिष्क भागा नान्योऽथवा मता, 'चक्राणि', 'कन्दा', 'पीठा' वा, उन्नीयन्ता योगरीतिभि । (१५०) । "ऋचो अक्षरे परमे व्योमन्, यस्मिन् देवा अधि विश्वे निषेदु, यस्त न वेद किं ऋचा करिष्यति ? य इद् विदुस् तत् त इमे समासते" (वे०) । उदाहृति अर्थमेवात्र कृत व्याख्यानमीदृश, अधिको विस्तरो दृश्यो हिन्दी ग्रन्थे 'प्रयोगनने', स्मर्तव्यमेतच् चैतापि, व्याख्याने नास्ति निश्चिति, तथोम पूर्वमेवापि, तर्क ऊहा एव केवल । (१०) एतद्ग्रन्थमूलभूत वैदिक यत्तु रूपक, विशद किल तस्यार्थ, न इयत् तत्रास्ति सशय । "सहस्रशीर्षा पुरुष, सहस्राक्ष, सहस्रपात्" (वे०), मानवाना महाजातेर्वेतत् वर्णन स्फुट । "ब्राह्मणोऽस्य मुखमासीद्, बाहू राजन्य कृत, ऊरू तदस्य यद् वैश्य, पद्भ्या शूद्रोऽजायत" (वे०), 'ब्रह्म वक्त्र, भुजौ क्षत्र, कृत्स्नमूरूदर विश, पादौ यस्याश्रिता शूद्रा, तस्मै वर्णात्मने नम" (म० भा०, शा०, भीष्मस्तवराज) । यथा मानवदेहस्य शिरो ज्ञानाङ्गमस्ति वै, तथा समाजदेहस्य ज्ञानि वृन्द भवेच्छिर, बाहू च रक्षि सदोह, पोषि स्तोम तथोदर, पादौ सर्वधरौ चापि निकर श्रमिणामिति । 'पद्भ्यां' इति चतुर्थ्यन्त ऋचाया अस्ति वै पद, 'समाजपादौ भवितु', 'पादत्वाय', इति योजना, अपरैस्तु त्रिभिर्वर्णैर् अत्यापि ननु साम्यत, (१६०), न अपादानार्थक ह्यत्र 'पद्भ्या' इति पद भवेत्, मान्यवर्णाय कस्मैचित् प्रयुक्ता पञ्चमी, यत, ब्रह्मणोऽङ्गेभ्य उत्पत्ति अपादानेन वादिनी । रूपकाणा पुराणाना व्याख्यान क्रियते, यदि, युक्ति युक्त, तथा, तेन जनानां बुद्धिवर्धन, (नाममात्रार्थेन मूढाना ब्राह्मणानामेव पोषण), भारतीयसमाजे च सज्ज्ञानाना प्रचारण, तथैव मूढब्राह्मणा, श्रद्धाऽन्धस्य च, नाशन, स्वावलम्बिरतनेश्चापि, धैर्यस्य, अभ्यसन तथा—सत्य 'स्व राज्य' प्राप्येत अचिरादेव, तदा, स्थिर । (११) कर्मठाना महामान्य प्रामाणिकतम, स्वयं कुमारिलो-महाविद्वान्, स्वग्रन्थे तन्त्रवार्तिके, पौराण वेदोपाख्यानान् विवृणोत्येव युक्तित, नऽगृह्णाति तु शब्देषु, बुद्धियुक्तार्थतत्पर । "प्रजानाथं, नाथ !, प्रसभ अभिक स्वां दुहितर गत, रोहिद्भूता रिरमयिषु, ऋष्यस्य वपुषा, धनुष्पाणे, यात दिव अपि, सपत्राकृत अमु त्रसत, तेऽद्यापि त्यजति न मृगव्याधरभस" (महिम स्तुति)—इत्याख्यानस्य तेन इय व्याख्या तत्र प्रदर्शिता—(१७०)

उद्गच्छतो हि सूर्यस्य या उषा धावति चाग्रत , प्रात कालस्य दृश्यस्य तस्य एव एतत् तु रूपक । अपरे ज्योतिषा आहु —धनूराशेस्तु रूपक नक्षत्रमृगशीर्षस्य चाप्येतद्, यत, शाश्वत । अन्ये तु, अन्यप्रकारेण बुध्यतेऽस्य तु रूपकम्— "वाच दुहितरं तन्वी, स्वयम्भूर् हरते मन ", दुष्कार्ये कर्षणाद् वाच , ब्रह्मण छिद्यते शिर एचमो,य पुराऽभूच् च (अकाशतत्त्वेन निमित , च वारि वान्यतत्त्वाना दीपितानि तत पर),'रुद्रेण' तच्छिरश्छिन्न,वाग्देव्या दुष्प्रयोगत , विप्रलम्भनजातेन, जनता 'कोप'रूपिणा , महाजनाग्रणीर्मुख्य रुद्रो ह्यत्राऽभिधीयते,"यदि कार्यविपत्ति स्यात् मुख्यस्तु तत्र हन्यते" छिन्न नेतृत्व अस्य, न्येऽधिकारास्तु भवतंपिता । रूपकाणा पुराणाना,अर्थास्तु बहुरूपका , भवति एव , प्रतिपद नवीना वध्यते कथा । महिम्नस्तवटीकाया,सन्ध्यासो मधुसूदन विद्वान्, "रूपकमेवैतद्", इति स्पष्ट प्रवक्ति च ।(१२) एव कालिय नागस्य शीर्ष्णां उपरि नर्तनं, मर्दन, दमन चापि, ज्योतिषामेव रूपक, तत्तद्रूपेण हि स्थूला , दृश्यते खे तु तारका । (१८०)। "यद् यद् शिरो न नमतेऽस्य शतैकशीर्ष्णस्, तत्तन्ममर्द, खरदण्डधरो, ऽङ्घ्रिपातै , तन्मूर्धरत्ननिकर स्पर्शातिताम्रपादाम्बुजोऽखिलकलाऽऽदिगुरुर्ननर्त"(भा०)। आयुर्वेदस्य दृष्ट्या एतत् नाडीव्यूहस्य रूपक,यस्योपरि च नर्तिष्यन् जीवो नृत्यति सन्ततौ, "शत चैका च हृद यस्य नाड्य",तासा मूर्धानम् अभिनिस्सृता, एका,यया ऊर्ध्व आयन्, अमृतत्व एति, विष्वङ् अन्या अभिनिष्क्रमणे भवति"(उ०),ब्रह्मनाडी सुषुम्ना एका,मुक्ति मच्छति ससते ।(१३)'ऋते ज्ञानान् न मुक्ति स्याद्', 'मुक्ति काश्या मृते'इति, वाक्ये तु अस्ति विभिन्नार्थे,कथयेते सम् अनु इत ? काशीखण्डे रहस्य तद् विवृत स्फुटाक्षरै , आत्म प्रकाशिनी' बुद्धि 'काशी' खलु अभिधीयते, असी च वरणा चापि तत्र इडा पिंगला तथा, गंगा स्वय त्रिपथगा सुषुम्ना ब्रह्मनाडिका, यया निर्यन् शरीरात्तु जीवो ब्रह्मत्वमाप्नुते , काश्या प्रज्ञानिना वासात्,सुलभ आत्मदर्शन–सात्त्विकेन विरक्तेन, (न तु राजस तामसै ),ज्ञानिनामेव सत्सङ्गाद्—एवमस्ति समन्वय ,"उपदेक्ष्यन्ति ते ज्ञान ज्ञानिनस्तत्त्वदर्शिन "(गी०) । (१४) नृणां समूहो 'नार' स्याद् , 'अयन' चातिमा गति , सच्चाऽतिगानां 'नाराणा' यद् अस्ति उद् अयन स्थल, तथा प्रलयन स्थान, तन् 'नारायण ' उच्यते , जीवात्मानो 'नरा ' प्रोक्ता ,परमात्मा परायण नारायणो हि सर्वेषां जीवानामिति निश्चित ; (१९०), "सर्वेषां अवताराणा निधान बीज अव्यय" ( भा० ); तपस्वी चाप्यभिन्नौ तौ, नर नारायणौ सदा,

देहवृक्षे परिष्वक्तौ समाने चैव निरपदा, एकः स्वादूम् तयोरत्ति, परोऽनश्नन् चरा स्ति वै ; एको युध्यति शस्त्राग्रे , पर 'सारथिर्' एव हि, रथे समाने आरूढ , 'सरथो', बोधयन्,नयन् । (१५) स्पष्टैरेव, कुत , शब्दैर् अर्था सर्वेऽपि न शंदिता , यथाऽधकाले पाश्चात्यैर् धिजैर् विज्ञानशास्त्रिभि ? प्रीतये बालबुद्धीनां, लाघवाय स्मृतेरपि, स्वल्पै शब्दैस्तथाऽर्थानां बहूनां सूचनाय च, पुराणै ऋषिभि प्राय प्रकारोऽसौ चलपित । अर्थविस्तारका ग्रन्था , बृहन्तो, बहवोऽपि च, आसन् पूर्वं, पुराणाना भाष्यरूपा , सुबुद्धिभि निज्ञासुभि सुचरितै लम्पाइचापि अधिकारिभि , जिज्ञासुना तु, ते, ह्रासात्, देशे दुर्बुद्धिवर्धनात्, लोपिता , कालवेगेन, विदेशि आक्रमणैस्तथा , निधिर्पं ऋषिभिश्चापि गुप्तस्थानेषु गोपिता , एवं ऊहा च,तर्कश्च,अनुमान च प्रकारांते, परम्पराया उच्छेदान्,निश्चेषु तु न शक्यते । विविधाना तु शास्त्राणा, अनेकाभिश्च दृष्टिभि ,दृष्टेभ्यो रूपकेभ्यस्तु, नानाऽर्थां निस्सरति ये , सभिन्नाश्चापि ते सर्वे, ह्यविरुद्धा , समन्विता , मार्मिका नियमा , परस्मान्, महावाक्यनिरूपिता , प्रकृतेर् अखिलांशेषु, ते एव प्रभवन्ति वै, यान् वै 'समन्ततो' दृष्ट्वा, भवति 'समदर्शिन '। ( २०३, आदित ४०१५ श्लोका )

---



## १५ अध्याय

### स्व राज्य-निरूपण ।

(२६) प्र० 'स्वराज्य' शब्दस्तु अति एव देशेऽस्मिन् प्रचलितोऽधुना , कोलाहलो महान् अथा न स्पष्टत्वाद् उच्यते , किं तत् ? कथ तत् साध्य ? को भेदोऽस्ति स्व सु-राज्ययो ? 'स्व-राज्यस्य' स्वरूप किं , 'पर राज्यस्य' किं तथा ? धर्मार्थमाणा धर्मस्य सम्बन्ध कीदृशस्तयो ? किं 'सम्यग् दर्शन', किं चापि असम्यग्दर्शन' भवेत् ? 'प्रयोग ' तु कु 'दृष्टीना' स्व-राज्य-स्थापने च क ?

उ० 'दर्शन', नयन, नेत्र, नेता, नीतिर् , नयस्तथा, 'दृष्टिर्', मतिर् , मत, प्रज्ञा,बुद्धिर्,धीर् ,धिषणाऽऽदय , शब्दा ह्येते समानार्था , प्रायशो,(न तु सर्वथा)। यथा 'दृष्टि ', यथा नीति , यथा बुद्धिस्तथा 'मति ', यथा मति , यथा प्रज्ञा, यथा धीश्च तथा 'कृति ' , यथा 'नय स्तथा 'चार ' , तथा 'कार्यं' यथा 'मत' , 'दर्शन'स्यानुसारी एव 'प्रयोग ' सर्वकर्मसु । किं [illegible] 'दर्शन' शब्दस्य विशेषार्थोपि

विद्यते। आत्मनोऽनात्मनश्चापि, सम्बन्धस्य तयोस्तथा, दर्शयेत् तात्त्विकं रूपं यत्, तद् 'दर्शनं' दृश्यते। को ऽहं, कथमिहायातः, कुतः, कस्मात्, किमर्थं, किं 'इदं' दृश्यम् अखिलं, जीवनं मरणं च किं, रागो, द्वेषः, सुखं, दुःखं, स्मृतिः, आशाऽऽदयश्च किं, वस्तूनां सङ्ग्रहेच्छा किं किमियं मैथुनैषणा, भूतं भवद् भविष्यं किं, 'पृष्ठे अग्रं अग्र'ऽपि किं तथा, किं कालः, किं च देशो वा, गमनं आगमनं च किं, किं चित्तं, किं शरीरं, किं इन्द्रियाणि, कुतस्तथा, किं भोज्यं भोजनं भोक्ता, ज्ञानं इच्छा क्रिया च किं, किं द्रव्य गुण-कर्माणि, भेदः किं चित्त-देहयोः, द्वन्द्वानि किं, जगत्सर्वं अपि द्वन्द्वमयं कुतः, जीवानां किं कथं भेदो, ऽभेदश्चाप्यस्ति किं, कथं, सम्बन्धश्च किं अन्योऽन्यं, 'अहं-स्व स' च किं, कुतः? मर्त्य एव मनुष्योऽस्ति, नित्यो ऽमर्त्यो ऽथवा पुनः, लोको ऽयमेव अन्यो वापि, पुनर्जन्मास्ति वा न वा? स्वं किं, परं किं, राज्यं किं, प्राणि भेदाश्च किं, कुतः, किं धर्मः, किमधर्मश्च, पुण्यं किं, पापं एव च? इन्द्रियैः सह सम्बद्धं नश्वरं हि एव किं सुखं, यत् आभ्युदयिकं चेति स्मृतिकारा वदन्ति हि, इन्द्रिय अतीतमपि वा शाश्वतं भास्वरं शुभं, यत् नैःश्रेयसिकं ते हि कथयन्ति, परं सुखं? यद्युभौ सत्यमेव स्तः, प्राप्यौ तौ कथं नरैः, को मार्गस्ते उभे लब्धुं भवेत् विघ्नो बहुलः?—(२०)—प्रश्नानां ईदृशानां तु, चित्तमन्थनकारिणां, विचार शीलशीलानां तात्त्विकानां विवेकिनां, संशयोच्छेदकं, मन्युमोचकं, तोषकारकं, सर्वाङ्गीणं, सर्वशङ्कासमाधानं, प्रसादकं, उत्तरं मार्मिकं यत्तु दर्शयेत्, तद् हि दर्शनं, वेदान्तोपनिषत्सु एतत् 'सम्यग् दर्शनं' आख्यातम्। नैतादृशं भवेद् यत्, तद् 'असम्यग्दर्शनं' मतं। नास्त्येव गुणवत् किञ्चित्, नास्त्यन्तं दोषवत् तथा, सर्वं कर्म गुणि वा, दोषि वा, व्यवस्थया भवेत्, अवस्थाया गुः कस्याः, किं, कर्म भावि गुणाधिकं, दोषन्यूनं—यद् एतत्तु दर्शयेत्, तद्धि दर्शनं। दुष्टनिग्राहिणी बुद्धिः, शिष्टानुग्रहकारिणी, वर्धिनी लोकमङ्गलस्य, लोकसंग्रहकाङ्क्षिणी, अल्पस्वार्था भवेद् येन, तत् सम्यग्दर्शनं स्मृतं। आयत्यां च, तदात्वे च, यत्र अल्पं, सुखं बहु, भवेत्, तथा च मध्यादं पक्षयोः उभयोरपि, विवादानां च शान्तिः स्यात्, मध्यमावृत्तिपालनात्। एवं पश्यति या बुद्धिः सा सम्यग्दर्शिनी मता। प्रत्येक विषये, प्रश्ने, पक्षौ द्वौ भवतः सदा, द्वन्द्वत्वाज् जगतो, बाह्य बुद्धेर् एकाक्षपात्, तथा, (२०), ऐकपाक्षिकयोरेव स्युर्वादिप्रतिवादिनोः विवादा नित्यदा, तेषां

शासन धाम्नि अभीप्सित, परिपक्वा, अनुभविनी, ज्ञातज्ञा, स्थविरा, स्थिरा, सर्वेषा उभयदर्शित्वात् सर्वसंवादसाधिनी, 'अतद्' अत्यागिनी, द्विपक्षयो समवायिनी, "देश-काल निमित्ताना भेदैर्धर्मो विभिद्यते", इति न्यायेन पक्षाणा यथावद्विवेचिनी, यावदुत्तम सर्वकाले मध्यमार्गानुसारिणी, शास्त्रसार ज्ञ मेधा, सा सम्यग्दर्शनदर्शिनी। एभिरेव सर्वसदस्यदेषु यदर्था शुभो, कल्याणवाहिनी, ऋज्वी, यत्, तत् सद्दर्शनं मत, यथाऽर्जुनाय कृष्णस्य उपदेशेन सु दर्शिता। "आद्य यत् त्रि अक्षर ब्रह्म, त्रयी यस्मिन् प्रतिष्ठिता, स गुह्योऽन्यस्त्रिवृद् वेद, यस्त वेद स वेदवित्" (म०), 'सम्यग् दर्शन' सम्पन्न, 'वेदवित्', 'प्रणवार्थवित्', आत्मवित् च स एवेह "क्रियारम्भमुपाददते" (म०), निश्चयेन यतो वेत्ति स एव खलु तावत, किं कार्य, किमकार्य च, कथं स्यात् सम्यक् भुव। "प्रवृत्ति च, निवृत्ति च, कार्याकार्ये, भयाभये, बन्ध मोक्ष च यो वेत्ति", मोक्षोपायान्यथाऽभिविज्ञान्, (१०), मानवीं प्रकृति सूक्ष्मा समग्रा अपि वेत्ति य, "सैनापत्य च, राज्य च, दण्डनेतृत्वं एव च" (म०), 'पुरोहितत्व', 'आचार्य-कार्यं', साक्षित्वमेव च, तथैव 'सार्थवाहत्व', 'धर्माध्यक्षत्व' एव वा, नवीनायो अवस्थाया नूतनैश्चापि हेतुभि, नवधर्म व्यवस्थासस्य-अधिकारं तथैव च, राज मन्त्रिवत् शास्तृत्व नियोक्तृत्वानि चैव हि, "सर्वलोकाधिपत्य वा, एवाऽऽत्मविद् अर्हति" (म०)। 'रक्षा व्यूह' प्रकरणे, वनस्थाश्रमि वर्णने, कार्यं सर्वजनीन तेषामुक्त विशेषत, कल्याणार्थं प्रजाना यद् 'यज्ञ' शब्देन सूच्यते, द्विजत्रयाणा धर्मश्च "दान, अध्ययन, यजि" (म०)।, 'उत्तम-स्व'-स्वरूपस्य, तादृशस्यऽऽत्मवेदिन, लोके सर्वै: श्रद्-'धित'स्य, 'पुर' (अग्रे) सर्वै 'हितस्य' (संहितस्य) च, तथा 'प्रति नि धी'-कृत्य 'नि हित'स्य 'प्रति'-इति च, सर्वकृत्ये "दधति एन पुर" तस्मात् "पुरो हित" (निरुक्त), लोकाना हितकर्तृणा धर्माणा निर्णयाय च, धर्मऽग्रणीषु 'पर्षत्सु' सऽादर 'प्रहित' स्य च, शासन स्व-राजपदस्थान्, स स्वेच्छऽनात्मवेदिन। "न सा सभा यत्र न सति 'वृद्धा', वृद्धा न ते ये न वदन्ति धर्मं, धर्मो नासौ यत्र न सत्यमस्ति, सत्य न तद् यच्छलमभ्युपैति" (म० भा०)। "पचाना, त्रिषु वर्णेषु, भूयांसि, गुणवन्ति च, यत्र स्यु सोऽत्र मानार्ह", शूद्रश्च दशमीं गत" (म०)। विद्या कर्म वयो वृद्धे सद्भि 'सम्यग् वि भाति' या, सदस्युवृद्धै सद्धित्तवृद्धै चापि, 'स भा' तु सा। एवं उक्त तु-सम्मान अधिक ब्राह्मणोऽर्हति,

तथाधिकार, आज्ञाया शक्ति,तु क्षत्रियोऽर्हति,सञ्चय धनधान्यानां प्राप्तुं वैश्यस्तथा-एव च, साधारणोऽयं नियम , तत्र एतत्तु विशेषण , शस्त्रपूण्याऽर्जयन् वृत्ति,क्षत्रि-यश्चापि अतो भवन्, विद्यावृद्धो हि अतितरां भवेच्चेद् यस्तु, भीष्मवद्, ब्राह्मणे-भ्योऽल्पविद्येभ्यो, जीवद्भ्यो विप्रवृत्तिभि , ऋषिभ्योऽपि यवीयेभ्यो,ऽधिक सम्मान माप्नुयात । शूद्रोऽपि नवतिं कृत्वा, दशम दशक गत , वयसा तु, यवीयोभ्यो, द्विजेभ्यो मानमर्हति । एव वैश्यद्विजे चापि योजनीय मनोर्वच । (६०)। एके ब्रुवति, श्लोकोऽयं स्थापनीयोऽन्यथैव हि—'प्रत्येकवर्णे पञ्चानां गणन तूत्तरोत्तर' । न सा व्याख्या समीचीना , स्याच्चेद् एव मनोर्मत, कस्मात्स्पष्टमसन्दिग्ध न ब्रूयाद् भगवान् ? यथा—'प्रत्येकवर्णे पञ्चानां भूयांसि गुणवन्ति च' । 'गुणवन्ति' इति शब्देन 'धर्मतोऽर्जितता' उच्यते । चौर्येविध, कुल चाऽसद्, दुष्कर्म निरत सदा, महद्, यदपि, विख्यात, वृथा वीत वयोऽधिक, महत् कर्मापि, यत् किंतु दारुण लोकरावण, विद्या च कल्पाऽधर्मेण, दुष्टभावैश्च दूषिता, वर्धिनी त्वभि-मानस्य, कलहानां च कारिणी, प्रचारिणी च पापानां, अनुचानां च दम्भिनी—एते गुणा दुर्गुणा वै, मान नार्हन्ति कथन, किन्त्वाक्षेप,अवमान च, धर्षण, दहन तथा, प्रत्युत,अर्हन्ति नित्य ते, राजतश्च, समाजत । "वित्त, बन्धु , वय , कर्म, विद्या भवति पञ्चमी, एतानि मानस्थानानि, गरीयो यद् यद् उत्तर", "द्वा सुपर्णा सयुजा सखाया, समान वृक्ष परिषस्वजाते, तयोरेक पिप्पल स्वाद्वत्ति, अन श्नन् अन्योऽभिचाकशीति । × मनस्तु द्विविध प्रोक्त,शुद्ध चाशुद्धमेव च, × वासना द्विविधा ज्ञाता, शुभा चैवाऽशुभा तथा" (उ०) । '(७०) । सर्वे स्वानुभवेनैव बुध्यते तत् प्रतिक्षण , प्रत्येकहृदये द्वौ 'स्वौ', उत्तमश्च, अधमोऽपर ; मनो हि, अशुद्ध, यत् स्वार्थसाधक परपीडया, पापवासनया पूर्ण, तदेव 'स्व अधम' स्मृत , शुद्ध, यत् स्वार्थहानेन परार्थं तु निषेवते , शुभवासनया पूर्ण, 'उत्तम स्वो' ऽस्ति तत् मन , साध्नोति यत् शुभान् कामान् परेषा 'साधु'रित्यत । सर्वेऽस्मै कल्पधीर्यस्मिन् उदिता मनसि,स्फुटा, अव्यक्ता एवापि अथवा, तद्धि मन शुद्ध भविष्यति , 'अभेदबुद्धेर् वृद्ध्या एव मन शुद्धिर्विवर्धते । समाजस्य ईदृशा जीवा , 'उत्तम स्व' स्वरूपिण , शुभवासनया पूर्णा , सर्वभूत हिते रता , 'सम्यग्दर्शन' सम्पन्ना , सर्वत्र सम दर्शिन , शास्त्रकार्ये नियुक्ता चेत् , 'स्व राज्य' सिद्धमेव हि । मानवी प्रकृति चापि, मानव जीवन तथा , सर्वांगतु न यो वेत्ति,

पुरुषार्थांस्तथैव च , तथा तत्साधनोपायान् , जगतस्तत्त्वमेव च, मर्मं संसरणस्यापि, स कथं शासको भवेत् ? सर्वजीवनकार्येषु, मानवानां निदेशकः , मानवव्यवहाराणां कथं वा परिशोधकः ? ( ८० )। कारणानां च कार्याणां फलानां तु परम्परां, चतुर्दिग्व्यापिनीं चापि, संततां, दूरगामिनीं ; न वेत्ति अदूरदर्शित्वात् त्वरया एव ईरितस्तु यः—'ईदृशे नियमे जाते, फलं किं, यस्य कस्य च, सुखं वा यदि वा दुःखं ?'—न चिन्तयति यद्यसः , धर्मचक्रप्रसनं नासौ अनात्मज्ञोऽर्हति कश्चित् । "गुणवद् अगुणवद् वा कुर्वता कार्यजातं , परिणतिरवधार्या यत्नतः पण्डितेन, अतिरभसकृतानां कर्मणां, आविपत्तेर् , भवति हृदयदाही शल्यतुल्यो विपाकः" (भर्तृ०); "सहसा विदधीत न क्रियां, अविवेकः परमापदां पदं ; वृणते हि विमृश्य कारिणं,गुणलुब्धाः, स्वयमेव सम्पदः" (किरात०)। मनुजानां सर्वधर्मान् प्रवक्तुमर्हति यो मनुः, यतः "स एव सर्वस्य विधानस्य स्वयम्भुवः अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित् प्रभुः" (म०), सम्यग्दर्शी, सर्वदर्शी, सर्वज्ञानी, दयानिधिः । विधानकार्यतत्त्वं यो न विजानाति मानुषः, कथं धर्मविधानं सः मानुषार्थं करिष्यति ? अनात्मवेदिनां, राग-द्वेष विप्लुत-चेतसां , अहंकाराभिभूतानां, स्वार्थान्धानां च, लोभिनां , (९०), अल्पश्रुतानां, क्षुद्राणां, कामिनां, अल्पदर्शिनां , राज्यं यत् तु, तदेवास्ति 'पर-राज्यं' हि दारुणं । बभ्रुवर्णाः, श्वेतवर्णाः, रक्त-पीत-असिताश्च वा, प्रकृत्या यदि ते दुष्टाः, भवेयुश्चाधिकारिणः , सहोदराश्चेत् स्युः तेऽपि, 'पर-राज्यं' हि तत् ननु । "सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ,× समं पश्यन्नात्मयाजी, 'स्वा राज्यं' अधिगच्छति ; सर्वं परवशं दुःखं, सर्वमात्मवशं सुखं , एतद् विद्यात् समासेन लक्षणं सुख-दुःखयोः" (म०); मानवस्य तु देहोऽयं 'स्वार्थी' एव परस्तः 'परः', अशुभाभिर्वासनाभिः पूरितः प्रेरितो यदा ; वस्तुतोऽसौ 'परवशो', 'दुःखी', देहवशस्तु यः । यः पुनर्संसमाप्तः 'शुद्धस्य मनसः' किल, 'निष्कामस्य', 'दया-मैत्री-मुदिता'दिमयस्य च, 'विद्यां' च स्पष्टान् यस्तु, समीपाद्, दूरतोऽपि वा, सर्वलोकहितैषुश्च, स ह्येव 'आत्मवशो' ध्रुवं। ईदृ 'आत्मवशानां' तु राज्यं 'स्वा-राज्यं' अस्ति वै । "अभयं, सत्त्वसंशुद्धिः, ज्ञानयोगव्यवस्थितिः, दानं, दमश्च, यज्ञश्च, स्वाध्यायः, तपः, आर्जवं, अहिंसा, सत्यं, अक्रोधः, त्यागः, शान्तिर, अपैशुनं,(१००), तेजः, क्षमा, धृतिः, शौचं, अद्रोहो, नातिमानिता, भवंति संपदं दैवीं अभिजातस्य

मर्वन्द्र'' (गी०) , ईदृशाना हि यद् राज्य, 'स्व राज्य' तु तदेव हि । 'अविद्याया' निमग्ना. ये, षड्शत्रुवशवर्तिन , कामक्रोधाभिभूता ये, देहेन्द्रियपरायणा , "मोघाशा , मोघकर्माणो, मोघज्ञाना , विचेतस , राक्षसीं आसुरीं चैव प्रकृतिं मोहिनीं श्रिता ,× असत्यमप्रतिष्ठ ये जगदाहुरनीश्वर, अपरस्परसम्भूत, किम न्यत्, कामहैतुक, एतां 'दृष्टि'मवष्टभ्य नष्टात्मानोऽल्पबुद्धय , प्रभवन्त्युग्रकर्माण क्षयाय जगतो हि ये ,× कामोपभोगपरमा , एतावदिति निश्चिता , आशापाश शतैर्बद्धा , मत्सर ईर्ष्या परायणा , ईहन्ते कामभोगार्थं अन्यायेनार्थसञ्चयान् , 'इदमद्य मया लब्ध, इम प्राप्स्ये मनोरथ, इदमस्तीदमपि मे भविष्यति पुनर्धन, असौ मया हत शत्रु , हनिष्ये चापरान् अपि, ईश्वरोऽह, अह भोगी, सिद्धोऽह, बलवान्, सुखी, आढ्यो, अभिजनवान् अस्मि, कोऽन्योऽस्ति सदृशो मया' ,× आत्मसम्भाविता एव, स्तब्धा , मानमदान्विता , (११०), यजन्ते 'नामयज्ञै' ये दम्भेनाविधिपूर्वकं, पारक्य धन हिंसया चल क्रोधाँश्च संश्रिता , 'आत्मान' 'पर' देहेषु प्रद्विषन्तो, ऽभ्यसूयका " (गी०) , ईदृशा 'अभिजाता'स्तु जीवा सम्पद आसुरीं । "दम्भो, दर्पो, ऽभिमानश्च, क्रोध , पारुष्य एव च अज्ञान च, अभिजा तस्य पार्थ ', सम्पद् आसुरीं" (गी०) । यद् राज्य ईदृशा तत्, 'पर-राज्य' मपद्धर । 'स्वदेशीया ', 'विदेशीया '; मुस्लिमा ', 'क्रिश्चना'श्च वा, 'शूद्र विट् क्षत्र ब्रह्मा'दि नाम धारक 'हिन्दव ', 'चर्मणा' शुक्लवर्णा वा, श्याम गोधूमि क र्गुणा , 'कर्मणा' यदि 'कृष्णा'स्ते, 'वर्ण' हीना , अनार्यका , 'पर-राज्य' हि तद्राज्य , न स्व राज्य कथञ्चन । एव च, कर्मणा शुक्लो य कश्चिद्, अपि चर्मणा यत्किञ्चिद्वर्णवान्, यस्मिन् कस्मिन् देशे जन्मना च, यदि प्रजाना श्रद्धाया आदरस्य च भाजन 'आत्मीयत्वेन', 'स्व-स्वेन', प्रजाभि 'स्वीकृतो' यदि, 'स्व राज्य' 'सु राज्य' च नूनं तस्यैव शासन । शुक्ल, कृष्ण च, मिश्र च, कर्म त्रिविध उच्यते , कर्माशुक्लाकृष्णं यत्, ।तत्तु 'निष्कर्म' योगिना ( यो० सू० भा० ) । मानवस्य 'स्वदेशो ऽसौ यत्र यत्रास्ति मानव ; अन्यथा, 'जन्मभूमि'स्तु मातृसदृशमिता एव भू । ( १२० ) । "उदारचरितानां तु वसुधा एव कुटुम्बक, अय निज , परो वा, इति गणना लघुचेतसा" ( हितो० ) । "पृथिवी मे माता, पुत्रस्या ऽह पुत्र " (अथर्ववेद) । 'स्वदेशो', यत्र मित्राण्यपि , 'विदेशो', यत्र नो तथा । 'स्वदेश ऽय, विदेशोऽय—इति भावे तु कारण एतदेव, यद् एकत्र लभ्यते

हि सहायका , वैदिन स्वस्य भाषाया , वेदाद्याचारसमा अपि, मलायो बान्धवा-श्चापि ; नान्यत्र द्राक् तथा पुन । ये अहिता , ते 'विदेशीया' , स्वदेशीया ' तु, ये हिता , स बन्धु य शुभ कुर्यात् ; 'मातृभू', या तु वृत्तिदा । "न तेन वृद्धो भवति येनास्य पलित शिर , यो वै युवाऽपि अधीयान , त देवा स्थविर विदु , न हायनै ,'न पलितै , न वित्तेन, न बन्धुभि , ऋषय चक्रिरे धर्मं , यो ऽनूचान स न महान्" (म०) । ' उत्सवे, व्यसने (आपत्तौ) चैव, दुर्भिक्षे, राष्ट्रविप्लवे, राजद्वारे ('कचहरी' ), श्मशाने च, यस् तिष्ठति स बान्धव " ( हितो० ) । राज्ये, सहोदरस्यापि रावणस्य, भयङ्करे, विभीषणस्य, न्यूना वा, 'पूर्णा' वा, न 'स्वतन्त्रता' । 'डिक्टेटरा'दि राज्येषु साम्प्रत चेदृशी दशा , 'पूर्ण स्वतन्त्रता' नून पाश्चात्येषु 'विराजते', 'प्रजा सत्र' तथा शब्दो जिह्वासु परिनृत्यति । ( १३० ) । 'डिक्टेटरस्य' तु इच्छाया विरुद्ध न मनाग् अपि कोऽपि 'वक्तु' समर्थोऽस्ति , 'कर्तु' इत्यस्य का कथा । नून पाश्चात्यदेशेषु, पूर्वीयेष्वपि केष्वपि, सत्यां आसुर-सम्पत्तौ अपि, सति गुणा बहु , तान् गुणान् अनु-कर्तु च, हिन्दून् , केचन हिन्दव , आदिशन्ति, परन्त्वेते न स्वकु 'जन्मवर्णता' इच्छन्ति , न च पश्यन्ति, यत् तेषा नास्ति सम्भव गुणाना, एतया सार्धं, सपत्नस्य विपक्षया । 'कर्म वर्ण'-तयैवैषां गुणानामस्ति संगति । महाभारतकारेण राजोत्पत्तिकथा यथा वर्णिता, सत् स्व-राज्यस्य लक्षणं सूच्यते तथा । श्रद्धेयाना समाजस्य वृद्धानामुपदेशत , महापुरुष अग्र्य तु प्रजा राज्याय वव्रिरे , धीरवीराग्रणीर् , योग्यतमो रक्षण-कर्मणि, श्रेष्ठो, वरिष्ठो यश्चाभूत् प्रजापालनकर्मसु ; स्थापितायां , पुरा काले, ऋषिभि , पारदृश्वभि , वृद्धै , परिणतप्रज्ञै , मर्यादा सर्वतस्तथा, वर्णाश्रमव्यव-स्थाया च भाणी प्रतिपालक । "ब्राह्म प्राप्तेन संस्कार क्षत्रियेण यथाविधि, सर्व-स्यास्य यथान्याय कर्तव्य परिरक्षण " (म०) , ( १४० ) ; अर्थात् यो ब्रह्म चर्येण विद्याभिश्च सुसंस्कृत , क्षतात् त्रातुं समर्थश्च, राजा कार्य. स एव हि । वृद्धा ते 'राजकर्तार' श्रूयन्तेऽनेकश. श्रुतौ ; प्रजाभिर्वरणे सिद्धे, तेऽभ्यषिञ्चन् नृपं तत , प्रतिज्ञा कारयित्वा च, प्रजानां रक्षणाय वै , प्रजाभि अद्दितानां च तेषां केचन मंत्रिण अभूवन, अपरेऽमात्या , सुमन्त्रा , सचिवास्तथा दूताश्च, प्राड्विवाकाश्च, प्रधानाश्च, पुरोधस , धर्माम्नानसभायाश्च सदस्या अपरेऽभवन् , प्राज्ञाश्च साधव: सर्वे, प्रजाभिश्चाऽऽदृता कृता ; महोदये राज्य'यज्ञे', ऋषयो, ऋत्विजो, यथा ।

"सैवमाचार्यः पुरोधा यः शापानुग्रहयोः क्षमः, × यत्कोपभीत्या राजाऽपि धर्मनीतिरतो भवेत्, × न बिभेति नृपो येभ्यः तैः स्यात् किं राज्यवर्धनं ? × राज्यं प्रजाः, बलं, कोषः, सुनृपत्वं न वर्धितं, न अरिनाशः कृतः, यैस्तैः मन्त्रिभिः किं प्रयोजनं ?" (शुक्र०)। यथा राज्ञो ह्यमात्यास्ते नियन्तारश्च बोधकाः, तथा तस्य च, तेषां च, सदस्याः धर्मपरिषद्, प्रजाः प्रतिनिधयो भूताः, "सर्वभूतहिते रताः"। इदं रूपं समग्रं तु 'सु स्व राज्यस्य' चित्रितं, पुराणैरितिहासैश्चाप्यन्याख्यानैर्विविधैरपि। (१५०)। "अग्निं अनु स्वराज्यं अग्निं उक्थानि वावृधुः, विश्वा अधिश्रियो दधे। अस्य हि स्वयशस्तरं, सवितुः कच्चन प्रियं, न मिनन्ति स्वराज्यं" (ऋ०५०)। 'स्वराज्यं, अग्नस्य भर्तारं, अग्नयश्च सुपूरितं, अग्निवत् प्रज्वलन्तं चातुर्भाव्यं अग्ध्नन्ति वै शस्त्राणि उक्थानि वर्धते, दधति अपि अधिकां श्रियं, सूर्यस्य यशस्यन्तः सर्वेषां सुप्रियं तथा, न मिनन्ति, न हिंसन्ति, तमोरूपास्तु शत्रवः'। स्वाधीनास्तु जनाः सत्ये स्व राज्ये, स्वावलम्बिनः, उत्कर्षन्ति नितान्तं तु विशिष्टान् स्वान् गुणानिति, पराज्ये पुनः सर्वेऽपकृष्यन्ते गुणाः, अपि वर्धन्ते च तथा दोषाः दासबुद्धिमहोदराः। "वर्णानां आश्रमाणां च राजा सृष्टोऽभिरक्षिता" (म०), नान्यद् राज्ञोऽस्ति कर्तव्यं ह्येकस्मात् रक्षणात् भवे। "परिनिष्ठितकार्यस्तु नृपतिः परिपालनात्, कुर्यादन्यन्न वा कुर्याद्, ऐन्द्रो राजन्य उच्यते, × परिनिष्ठितकार्यस्तु स्वाध्यायेनैव वै द्विजः, कुर्यादन्यन्न वा कुर्यात्, मैत्रो ब्राह्मण उच्यते" (म० भा० शां०), कृतकामस्तथा वैश्यो धनधान्याभिवर्धनात्, कुर्यादन्यन्न वा कुर्यात्, पार्जन्यो (मारुतो, कौबेरो) वैश्य उच्यते, (१६०), परिनिष्ठितकार्यश्च शूद्रोऽन्येषां सुसेवनात्, कुर्यादन्यन्न वा कुर्याद्, गान्धर्वः शूद्र उच्यते (पद्मपु०; वायु पु०)। चातुर्वर्ण्ये प्रजा यत्र, जीवने चाश्रमेषु च, सर्वाणि धर्मकर्माणि, कृष्य-तोषणकानि च सुविभक्तानि रक्ष्यते, समाजे सुव्यवस्थिते, व्यूहे चापि चतुर्व्यूहे परस्परं अनुमते, कर्मणा वर्णता' यत्र, 'वयसा आश्रमिता' तथा, 'सु-राज्यं' च, 'स्व-राज्यं' च, स्वा राज्यं' चापि तत्र वै। आत्मदर्शनसिद्धान्तप्रयोगेण विना, नहि चतुर्भिराश्रमैर्वर्णैः समाजस्य व्यवस्थितिः, "चातुर्वर्ण्यं, त्रयो लोकाः, चत्वारश्चाश्रमाः पृथक्, भूतं भव्यं भविष्यं च, सर्वं वेदात् प्रसिध्यति" (म०), मनुष्याणां स्वभावानां, योग्यतानां च कर्मणां, चतुर्णां च पुमर्थानां, शास्त्राणां तदुपायिनां, धर्माणां च वयोभेदाद् आश्रमाणां च, तत्त्वतः भेदाः, सर्वेऽपि सिद्ध्यति

सम्यग्दर्शनत त्रिल । वेदो हि वेदन, ज्ञान, सम्यग्दर्शनमेव हि, विज्ञानगर्भ प्रज्ञान, सर्वंबुद्ध्यवदात यत् । यत्र नैव मनुष्याणा जीवन सुव्यवस्थित, सम्यग् दर्शन निष्णात महापुरुष शासित, ( १७० ), स्वार्थान्धा यत्र 'नेतार ', स्वयं 'नीता ' 'दृष्टि'भि , अ सम्यग्दर्शिनो, धूर्त्ता , मूर्त्ता एव कर्ष्टेणुंणा , शक्तिमत् कुरु जाता धा मूर्खा , प्राक्तनकर्मणा, कुमार्गषु, उत्पथं क्षिप्त 'नयति' जनतामपि, यथा विकृत 'नेत्रेण' 'नीयेता' अन्धो अटे, तथा, 'पर राज्य', 'कु-राज्य' च, 'नारक राज्य' एव तत् । "यौवन, धनसम्पत्ति , प्रभुत्व, अविवेकिता, एकैकमप्यनर्थाय, किमु यत्र चतुष्टय" , "अविद्याया अन्तरे वर्तमाना , स्वयधीरा , पण्डित स्मन्यमाना , जघन्यमाना ,परियति मूढा ,अन्धेनैव नीयमाना यथाऽन्धा "(उ०) । स्व स्व उचिताना धर्माणा, निर्दिष्टाना विवेकत , पालनायैव वर्त्तेत यत्र 'पूर्णं स्व तन्त्रता', 'पूर्णं स्व ाधीनता', नित्य 'स्वा राज्य तत्र वर्तते । परेषा पीडनार्थंम, हत्यार्थे, लुठनाय वा, बलात्काराय वा स्त्रीषु, पापाय विविधाय च, 'पूर्णं स्व तन्त्रता' यत्र, 'पूर्णं स्व ाधीनता' तथा, भवेद् यत्र तु, तत्रैव 'रौरव राज्य' ऊर्जति । शब्द प्रिये अर्थशून्ये या उक्ता 'पूर्णं स्व-तन्त्रता', अध्यात्मदृष्ट्या सा नून पूर्णा मरु मरीचिका ( १८० ), जनन यस्य देहस्य, पालन, जीवन तथा, पितृ तन्त्र, मातृ तन्त्र, वायु अधीन प्रतिक्षण, अन्न तन्त्र, पान-तन्त्र—तस्य 'पूर्णं स्व तन्त्रता ऽकाक्षा' यापि अथवाऽशसा 'सपूर्णा भ्रान्ति तन्त्रता' । जात समाज, निवसन् समाजे, कृपा ाधिकारैश्च सदैव बद्ध सार्धं परैर्, भौतिकपिण्ड एव , पूर्ण स्व-तन्त्रो भविता कथ नु ? य केवली, सर्वंगतश्च, सर्व , नाऽन्यद् यत किंचन कुत्रचिद् च, सर्व तु य स्व-मयं पश्यतीह, स्वस्मिश्च सर्वं, च तथा अस्मिन् , स एक एवास्ति सदा स्व तन्त्र , सोऽन्यस्त्व यँ तन्त्रयिताऽधिपस्य । "प्रशासितार सर्वेषा अणीयासमणो रपि, रुक्मआभ, स्वप्न धी गम्य, त विद्यात्पुरुषपर ' (म०) । "आर्षं धर्मोपदेश च वेदशास्त्राविरोधिना, यस्तर्केणानुसंधत्ते स धर्म वेद, नेतर ,× पितृदेवमनुष्याणा वेदश्चक्षु सनातनं, अशक्य अप्रमेय च वेदशास्त्रमिति स्थिति " (म०) , अनायासेन न प्राप्तु शक्यं तद्दर्शनं, ननु, यद्वेद शास्त्रे, वेदान्ते, निहितं वै महर्षिभि , जिज्ञासुना एकाग्रेण प्रयतेन न दुर्लभ । वेदाना स्थित अन्तेषु, यद् 'औपनिषद्' स्मृत, वेदस्य शास्त्र तद् हि एव, 'रहस्य' चोच्यपि, इति दिक् । ( १९० ) यथोक्त यमराजेन वाराय नचिकेतस, "न सुविज्ञेयं एतस्यात्, धर्म सूक्ष्मोऽणुरेष हि"

( उ० ) । "छन्दः पादौ तु वेदस्य, हस्तः कल्पोऽथ पठ्यते, मुखं व्याकरणं प्रोक्तं, शिक्षा घ्राणं तथोच्यते, ज्योतिषामयनं चक्षुः, निरुक्तं श्रोत्रमीर्यते", आयुर्वेदोऽस्य नाभिस्तु, गांधर्वः कंठः ईर्यते, ऊरू च शिल्पवेदोऽस्ति, धनुर्वेदो महाभुजौ, कामशास्त्रं तु जघनं, अर्थशास्त्रमथोदरं, हृदयं मानवो धर्मः, मूर्धा वेदान्तः इष्यते ; मूर्तिमान् भगवान् वेदः एवमंगैः सुसंहतैः, विराजते; सदा उपास्यः सर्व-कल्याणं ईप्सुभिः । "याः वेदबाह्याः स्मृतयः, याश्च काश्च कु-'दृष्टयः', सर्वास्तास्तु तमोनिष्ठाः, प्रेत्य चेह च निष्फलाः ; अप्यर्वाक्कालिकतया, अनित्याः, अनृताः अपि, उत्पद्यन्ते च्यवंते ताः", वर्षर्तौ इव छत्रकाः ( म० ) । राग-द्वेषौ तमो, मोहः ; 'तमोनिष्ठा'स्तु तन्मयाः ; 'सनातनस्य' सत्यस्य 'धर्मे' तु परमात्मनः, न निष्ठिताः, यतः, तस्माद् अनित्याः, अनृताः, अपि ; व्याहन्यमानाश्चान्योन्यं मंदवादं, बहुसंख्यकाः, जंघन्यमानाः, दंदह्यमाणाः, तास्तु परस्परं, क्षुद्राल्पबुद्धिजनिताः, भवंति क्षणभंगुराः; न स्थातुं चिरकालाय शक्नुवंति च कुत्रचित् । ( २०० ) । परस्परं विरुद्धानां, अन्योऽन्यघातिनां, तथा, कोलाहलोऽस्ति वादानां असंख्यानां तु साम्प्रतं, समाज राजनीति-अर्थ-इतिहास-विषयेष्वपि, तथाऽन्येषु च, शास्त्रेषु, दुर्दभ्युन्मादकरो, यथा । आत्मदर्शनजा यत्र सु-'दृष्टि'-'नीति'-कारिणी, 'नेत्री', 'नयति'सिद्धान्तैः, शाश्वतैः, सुप्रतिष्ठितैः तस्मिन् सनातने नित्ये 'स्व-भावे' परमात्मनः ; उत्पत्तिच्युतयस्तत्र, विप्लवोपद्रवास्तथा, संघर्षश्चापि वर्णानां ईर्ष्यया स्पर्धनेन च, प्रत्यहं नानुभूयन्ते ; न नित्यं चानवस्थितिः । स्थापिता यत्र मर्यादा चतुर्वर्णाश्रमात्मिका, तत्रैव सुप्रयोगोऽस्ति विद्यानां दर्शनस्य च ; शास्त्राणां व्यवहाराणां सुसम्बन्धश्च तत्र हि ; प्रयत्नार्थस्य सर्वस्य तत्रैव चरितार्थता ; चतुर्वर्गफलप्राप्तिः सर्वैस्तत्रैव चाश्रमैः ; स्वप्रकृत्यनुसारेण तत्र जीवोऽप्यवाप्नुयात्, सर्वोऽपि, स्व-स्वशक्तीनां, समाजस्य च भूतये, धर्म्यं विकासं, क्रमशः अपि, आश्रमाद् आश्रमं व्रजन् ; समाजश्चाखिलो भूयात् सदा सर्वसमृद्धिमान्, 'क्षय'-रोगेण निर्मुक्तः, बलवान्, 'वृद्धि'मान्, सुखी, उत्सवानां च दैवीनां आस्पदं सर्वसम्पदां ( २१०, आदित० ४२२५ ) ।

---

ॐ

१६ अध्याय

'हिन्दू' समाजस्य पुनः संस्करणं कथं ?

(२७) प्र० समाजस्यास्य 'हिन्दूनां' पुनः संस्करणं, कथं व्यवहार्येण रूपेण सम्भवेत क्रियेत च ?

उ० पुनः पुनः पूर्वमुक्त—सिद्धान्तानां प्रचारणं, आवश्यकं नितान्तं तु, तस्मात् प्रथमः क्रमः । सत्सिद्धान्तप्रचारेण सज्ज्ञानं तु विवर्धते, ततो भावाश्च शुध्यन्ति, सदिच्छा जायते ततः, महाजने समग्रेऽपि ; द्वितीयोऽयं भवेत् क्रमः । साम्प्रतं, सत्प्रयतनं, सच्चेष्टा, सत्क्रिया ततः, तृतीयोऽयं क्रमो हि, एव सततः स्यात् 'त्रिविक्रम' । शब्दो ऽयं आंग्लभाषायां 'थियरी' 'प्रैक्टिस्' इत्यपि, मतिर्-गति, नयश् चार, शास्त्र व्यवहृतिस्तथा, ज्ञान-कर्म, नीति रीती, दर्शनं चरणं सत्, दृष्टि सृष्टि, इति द्वन्द्व पर्याया, संस्कृते तयो, ब्रह्म धर्म, पुं प्रकृति, द्वंद्व तत्रापि चादिमः । पूर्वं मति शोधनीया, गति शोत्स्यति हि स्वयं । प्रचारश्चापि कार्यः स्यात्, न शब्दैरेव केवलं, किंतु स्वआचरणेनाऽपि, प्रचारणमथुच्यते । आचारेण हि या शिक्षा, सा एव साध्वी, दृढा, ध्रुवा, "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" (गी०), 'आचार्य' संज्ञां आप्नोति सदाचारेण शिक्षणात् । (१०) । मिताः अपि भवेयुश्चेत् सत्यया ते प्रचारकाः, यदि स्युः 'सौहृसवता', 'सत्य निष्ठाः', दृढ व्रतः, सैनायां [redacted] यथा योधाः तत्कार्याय समर्पिताः, वरात्मनश्च, आदि मनो, ऋषीणां मैत्रिकास्तथा, फारसी आंग्ल आदि भाषाणां ज्ञानेनापि च संयुताः, तत्तद्भाषाऽभिभाषिभ्यो व्याख्यातुं भाषया तया, मुस्लिमेभ्यो ऽन्यधर्मिभ्य, क्रिश्चनेभ्यस्तथैव च, भावान् 'मानव' धर्मस्य सर्वसंग्रहकारकान्, सन्न्यासिनो, वनस्था वा, 'ऽप्ये कामाः', 'सुसमाहिताः', नाम्यर्थितामिरद्विशा, न 'विक्षिप्ताः' इतस्ततः, कुर्युः प्रचारकार्यं च 'सत्कारेण', 'निरन्तरं' (यो० सू०), 'परिव्राजक-सदासा', गन्तारः सर्वदिक्ष्वपि, 'मानवस्य समाजस्य' विष्वक् संस्थापनैषिणः, ध्रुवं स्युः 'सत्य संकल्पाः', [redacted] स्यस्यैव स्वकर्मणि ।

प्रचारणीया सिद्धान्ता विस्तरात्मनु वर्णिता ग्रन्थेनैतावता, भूयः संक्षेपस्त्वत्र कथ्यते । ( १ ) आप्नुयुर्ब्रह्मचर्येण यौवनं तु नरा, स्त्रियः, "ज्ञानं, शौर्यं, मह, सर्वं, ब्रह्मचर्ये प्रतिष्ठितं" । ब्रह्मचर्यस्य सारोऽयं इन्द्रियाणां विनिग्रहः, दशानां च, स-मनसा, तानि जित्वा तु सर्वजित् । (२०) । 'स्वस्य'

उपरि तु 'राज्यं' यत्, 'स्व-राज्यं' मूलं अस्ति तत्। "ब्रह्मचर्येण तपसा देवाः मृत्युं उपाघ्नत" (वे०) ; मूलं प्राण-द्रुमस्यैतद् 'ब्रह्मचर्यं' यदुच्यते ; यत्रास्य नऽादरः तत्र नि-कर्षः, पतनं, ध्रुवं। (२) न-प्राप्तयौवनानां च विवाहः स्यात् कथंचन ; वाग्दानं मिथः प्रीत्या सम्भवेत् पूर्वमपि अतः। (३) सात्त्विकं कामशास्त्रं च शिक्षेरन् प्राक् तु संगमात्, तथा प्रसूतितंत्रं च, बालोपचरणं तथा। (४) 'धर्मजं' सुतमिच्छेयुः, नेतरान् 'कामजान्' बहून् ; द्वाभ्यां त्रिभिर्वाऽपत्यानां तुष्येतामेव दम्पती ; यदा तु ब्रह्मचर्यं यत्नवन्तौ न रक्षितुं, कुर्यातां गर्भरोध-स्योपायान् वैज्ञानिकानपि ; तीव्रं दण्ड्यो भवेत् तांस्तु प्रयुञ्जन् अविवाहितः, पुरुषश्च, अपि, योषा च प्रयुञ्जन्ती अविवाहिता। (५) 'गर्भाधानस्य' संस्कारं कुर्यातां च विवाहितौ, यथा उत्कृष्टं अपत्यं हि जनयेतां ; न चेतरं। (६) प्रति पंचशतं चास्तु कुलानां, सूतिकागृहं एकं, सुसज्जं सर्वोपकरणैः प्रसवस्य च ; कुल-प्रतिनिधीभूतसमित्या सुनिरीक्षितं। (७) क्रियतां 'नाम संस्कारः', पुरतः प्रति-वेशिनां। (१०)। (८) 'अक्षराक्षर-संस्कारे' भवेद् 'वृत्ति'-परीक्षणं ; शिक्षके-भ्यः सूचनाय ; न तु निर्णयनं तदा। (९) लालयेत् पंचवर्षाणि ; जननी शिक्ष-येद् अपि, शौचादीन्, बालसाध्यांश्चऽाचारान्, गीतीन्यपि च ; बालास्ततः पाठ-शालां गच्छेयुर् लब्धुमक्षरं, अध्येतुं च तथा विद्याः, स्वप्रकृत्यनुरूपतः। द्वे पाठ-शाले च स्यातां, कुलपंचशतं प्रति ; एका कुमारीशिक्षार्थं, कुमाराणां तथाऽपरा। (१०) कन्या अष्ट, नव, वर्षान् वा, स्त्रीभ्यः शिक्षामवाप्नुयात्, वसन्ती स्वगृहे, शालां गच्छन्ती च दिने दिने ; आचार्याणां, 'गुरु-कुलं' भवेत् चेत्, तत्र कन्यकाः, वसेयुः, कुलवृद्धैः स्वैः काले काले निरीक्षिताः ; बालः दश, एकादश वा, पुंभ्यः स्त्रीभ्योऽपि वा, समाः, कुमारपाठशालायां, वसन्, स्वे, वा गुरोः, गृहे, एवमेव-अप्नुयाद्विद्याः स्वप्रकृत्यनुकूलतः। पितरौ नयतो बालं गुरोर् 'उप' ; गुरुश्च तं 'पत्र'-सूत्रेण 'उप नाय', 'ब्रह्मण'श्च 'नयेद् उप', इति ; अतो हि मुख्य-'संस्कारं' तं तु 'उपनयनं' विदुः। अनेनैव 'द्वि-ज'त्वं यत्, तस्मान् मुख्योऽयमुच्यते। (४०)। स्त्रीणां च उपनयः कार्यः स्त्रीभिः यादृक् पुरा युगे। "उपनीय गुरुः शिष्यं, शिक्षयेत् (१) शौचं आदितः, (२) आचारं, (३) अग्निकार्यं च, (४) संध्योपासन-मेव च" (म०)। (१) धिषणा चापि, (२) शीलं च, (३) शरीरं चेति, तत् त्रयं, (१) ज्ञानं, (२) इच्छा, तथा (३) कर्म, शोधनं स्यात्, दृढं तथा, (१) सत्यं,

(२) तमो, (३) रजो ऽशाश्च भवेयु परिमार्जिता, यया, सा एव उचिता शिक्षा; अथ साध्य गुरो कुले। (१) ऋतु (२) अहो (३) रात्रि चर्याश्च शिक्षणाया प्रयत्नत, विद्या 'सस्कारिणी' ग्राह्या, तथैव 'अर्थकरी' च या, "अर्थागमो नित्य अरोगिता च, प्रिया च भार्या, प्रियवादिनी च, वश्यश्च पुत्रो, अर्थकरी च विद्या, षड् भागधेयस्य सुखानि, राजन्!" (विदुर०)। शस्त्रास्त्राणा प्रयोगश्च शिक्षणीयो गुरो कुले, मर्दे, सुभिक्ष, क्षेमिक्ष, स्वरक्षायै तु सकटे, 'रक्षके' च विशेषेण; सामान्येनैव चेतरे। सर्वेषामेव "वर्णानां" सकरे 'कालकारिते", क्षत्रियाणा रक्षकाणा अभावे चाप्युपस्थिते, "शस्त्र" तु सर्वै स्याद् "ब्राह्म, धर्मो यत्रोपरुध्यते", आत्मीयानां "परित्राणे", स्वरक्षार्थं "चापि सगरे, स्त्री बालाभ्युपपत्तौ च", मोक्षस्य तु विशेषात, सर्वे, द्विजैश्च एकजैश्च, प्रहर्तव्य अचिन्तयन्। (५०), "नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन, प्रकाश वाऽप्रकाश वा, मन्युस्तन्मन्यु-मृच्छति" (म०)। 'क्षत्रियैर्धार्यते चापो नाऽऽर्तशब्दो भवेद् इति" (वाल्मी० रामा०)। "द्वावेव पुरुषौ ख्यातौ सूर्यमण्डलभेदिनौ, योगी योगसमारूढ, शूरश्च समरे हत।× अधर्म क्षत्रियस्यैव यत् शय्या मरण गृहे, विसृजन् कफपित्तानि कृपण परिदेवयन्, अरण्ये वा विमुच्येत, सग्रामे वा तनु त्यजेत्"(म०भा०शा०)। गुरो कुले तु द्रोणस्य सर्वे वर्णा शिशिक्षिरे। कैकेयी, सत्यभामा च, सुभद्रा चापि दर्शिता, इतिहासेषु, गच्छन्त्य. समरान् पतिभि सह। 'राजा' दुर्गावती चापि, चाद 'राजा' तथैव च, झाँसी 'राज्ञ' तथा लक्ष्मी, शत्रैर्युयुधिरे स्वय। सर्वाग्रगण्या चैवास्ति प्रवीरेषु तु चण्डिका, दुर्गा, गौरी, महादेवी, याऽन्नपूर्णाऽपि चाम्बिका। "महाविद्या, महाऽविद्या, महामेधा, महास्मृति, महामाया च भवती महादेवी, महेश्वरी। किं वर्णयाम तव रूप अचिन्त्य एतत्, किं चातिवीर्य असुरक्षयकारि भूरि, किं चाऽऽहवेषु चरितानि तवाति यानि, सर्वेषु, देवि!, असुरदेवगणादिकेषु"(दु०स०)। (६०)। स्वापत्यरक्षणार्थं तु मातु शूरतरो नहि, गाव स्व शाव-रक्षार्थे वने सिंही भवन्ति वै, व्याघ्रान् तरक्षून् श्च गावो क्षिपन्ति च निहन्ति च। (११) कन्या पञ्चदशादूर्ध्व, विशेषे कारणे ऽसति, विवाह चिंतयेत्, शास्त्र अन्य-थ्येद् उत वाऽधिक। (१२) युवा तावद् अधीयीत, वसन् स्वे, वा गुरो, कुले, विद्यां विद्यालये यावद् गृह्णीयाज् जीविकाकरीं। तत 'स्नातक'-सस्कार प्राप्नुयात च, यथाविधि, 'कुल देश-समाजानां सेवां पञ्चविधां सह करिष्यामि, तथा श्रीणि

शोधयिष्ये ऋणानि च'—इति प्रतिज्ञा कुर्याच्च गुरूणां सविधे तदा, समक्षं च कुलीनानां, पौराणां च समागमे, स्वचित 'यज्ञ'-सूत्रेण' धारयन्" व्रतमुत्तम। आचार्यो निर्णयेच्चास्य 'वर्ण,' 'वृत्ति' तथोचिता, श्रावयेत् निर्णयं चापि तस्मिन् जनसमागमे। (१३) चतुर्व्यूह सहायेन, वृत्ति वर्णानुरूपिणीं ससाध्य, स्नातको जीवेत् तया जीविकया एकया। (१४) ततो मिथ परिचयात्, कन्यां प्रीतां प्रियामपि, सवादिशीलव्यसना, स्पृशात् 'संस्कार'-कर्मणा, 'सह धर्म चरौ भावा भूयास्व' इति च निश्चयात्। (७०)। (१५) अघोन्य विधिवद् विद्या, प्रजाश्चो त्पाद्य धर्मतः, कुलं समाजं ससेव्य, मनो मोक्षे निवेशयेत्, ऋणानि त्रीण्यपाकुर्वन् आश्रमाद् आश्रम व्रजेत्। (१६) चतुर्व्यूहेषु च एकस्य, सर्वोऽप्यवयवो भवेत्, स्वस्य स्वस्य च वर्णस्याप्याश्रमस्यानुसारत। (१७) समान शील-व्यसने भोजनं च विवाहन। "सम्प्रीति भोज्यान्यन्नानि, आपद् भोज्यानि वा पुन न च त्व प्रीयसे राजन्, न चैवापद्गता' वय" (म० भा०), दुर्योधनमिदं प्रोच्य, कृष्णो विदुरमाययौ। (१८) भवेयु नव संस्कारा स्त्रीणां पुंसां तथैव च। गर्भाधानं, नामकर्म, तथाऽन्न प्राशन शिशो, अथ उपनयन स्नानं, विवाहस्तदनन्तरं, वानप्रस्थ प्रवेशश्च, सर्व-सन्न्यसनं तथा, अन्त्येष्टि-कर्म चेवापि, संस्कारा स्यु नव एव हि। कल्प्याश्च विधयोऽपि नवा पुन, सम्यग् विमृश्य च, वेदमंत्रै उदात्ताश्च, हेतु मन्त्रिश्च कर्मभि, कालोचिताना येश्चित्ते सद्भावाना भवेत् स्थिति गभीरा, सत्क्रियेगात्ता चित्तदेही च वस्तुत'। (१९) वर्णाश्रम व्यवस्था च, कर्मणा, वयसा, तथा, चतुर्धा व्यूहन चापि समाजस्य, विवेकत —उत्तम मूलमेवैतद् भद्रोपायाश्च संस्कृते, पञ्चीकरण चार्य-सन्ततेस्तु समन्तत। (८०)। आहारस्य, विहारस्य, परिग्रहस्य च शुद्धता, परस्पर च सौहार्दं कुलस्य प्राणिना अपि, जायापत्योर्मिथ प्रेमाऽनुरागं, सहचारिता, मितं च सततेश्चापि, जीविकायाश्च निश्चिते, परमात्मनि निष्ठा च, समाजे शान्ति हेतव। (२०) सत्र प्रसवितु, सूर्ये बिम्बितस्य, परात्मन प्रत्यक्षस्यापि अदृश्यस्य देवस्य, जगदात्मन, सवितुपासनं हि एक, सन्ध्यावन्दनं एव च, ध्येयो जप्यश्च गायत्री मन्त्र एकस्तथैव हि, उपासना इयं आर्येभ्य पर्याप्ता ऽन्य-अनपेक्षिणी। 'नोपतिष्ठति य पूर्वा, नोपास्ते यश्च पश्चिमा", आर्यत्वाद् भ्रश्यते नूनं द्विजत्वं नास्य सिध्यति। "समानो मन्त्र, सह वो अन्न भाग, समान योक्त्रे सह वो युनज्मि, समानो मन्त्र, समिति समानी, समान मन, सह

चित्तमस्तु च । समान मन्त्र अभिमन्त्रये च ,समानेन वो हविषा जुहोमि"(वे०) । (९०) । बहूना किंतु "अनाधारा धारणा नोपपद्यते", "आत्मस्थ ये न पश्यति देव, मार्गति ते बहि", "द्वे वाव ब्रह्मणो रूपे, मूर्त्त चामूर्त्तमेव च , यन्मूर्त्त तदसत्य, यद् अमूर्त्त सत्यमेव तत्' (बृ० उ०) । स्वप्रकृत्यनुरूप च सर्वाऽर्थाप्तिम-पेक्षन्ते, "ये यथा मा प्रपद्यते, तास्तथैव भजाम्यह" (गी०), "भक्ताना अनुकम्पार्थं देवो विग्रहवान् भवेत्", मूर्त्ताद् अमूर्त्त नयन अभीष्ट परम खलु,न मूर्त्तिशा-क्रीडनकेषु आमृत्योनिरतो भवेद्—इत्यादिहेतुभि ,स्थाप्या मिता काश्चन मूर्त्तय , अवान्तरतया, अमूर्त्तस्य प्रतीका इवात्मन । उपासना मन्दिराणि विशालानि, मितानि च, सुन्दराणि, पवित्राणि, सर्वदा निर्मलानि च, सुदृष्टानि, प्रशस्तानि, पुर शोभा कराणि च, तथा सर्वजनीनानि, न बहूनि, भवतु च , वाटिकाभिर्-यथाशक्य परितो मण्डितानि च । सदृष्टानि गृहैरन्यैर्न स्युस्तानि कथचन । मूर्त्तिर मुख्या च तत्रैका सूर्यस्य जगदात्मन , वस्तुंल च अक्ष ( चक्षुर्मुखादि ) रहिता दीप्यन्ती किरणआवृता , विम्बेनैश्च, अशुभिर्नाना, ब्रह्म जीव तुल्यपिणी , शुभ्रा, रौप्यमयी वापि, निर्मिता स्फटिकेन वा । (१००) । गिरा ब्रह्मा शिक्ष-काणा , लक्ष्मीर् विष्णुस्तथा विशा , दुर्गा शिव रक्षकाणा, अश्विनौ सेविना अपि—इता विशिष्टेष्टानां च देवाना सन्तु मूर्त्तय । स्वे स्वे गृहे यथेष्ट तु सन्त्वन्या अपि मूर्त्तय , न तु देवालये काश्चिद् अन्या स्यु सार्वलौकिके । उपासना गृहे सर्व जनीने मूर्त्तयश्चिमा —प्रकाशात्म, रवेर्बिम्ब, भ्राजिष्णु, किरणान्वित, ( न अतिदीप्त तथा यस्याच् चक्षुषा क्षोभकारक, किंतु प्रसादन, कान्त, नेत्राणां प्रीतिवर्धन ), संस्थाप्य पूर्वभित्तेस्तु मध्ये महति मन्दिरे ; तस्य चापि चतुर्दिक्षु यथास्थान नवग्रहा , भ्रमन्त इव वृत्तेषु, दर्शनीया समन्तत । उत्कीर्येतापि 'गायत्री' मन्त्रो बिम्बादधस्तथा । अन्यानि आदित्य सूक्तानि श्रुत्युक्तानि स्मृतानि च "सूर्य आत्मा जगतस्तस्थुषश्च नमस्ते, आदित्य !, त्वमेव प्रत्यक्ष ब्रह्मासि, विष्णुरसि, रुद्रोसि ' (सूर्य०उ०), "एक एव हि लोकाना सूर्य आत्मा आदिकृद् हरि " (मा०), "नम सवित्रे, जगदेकचक्षुषे, जगत्प्रसूतिस्थितिनाश हेतवे, त्रयीमयाय, त्रिगुणात्मधारिणे, विरिञ्चि नारायण शकरात्मने" । (११०) । यानि नामानि चान्येषु धर्मेषु परमात्मन , तत्तल्लिपिभिरेवापि, लिप्या सस्कृतया तथा, उत्कीर्येरश्च तत्र च , सर्व धर्म समन्वयात्, स्थाप्येरन् मूर्त्तयस्त्वन्या , अन्य

भित्तिश्रये, यथा—एकस्यां महायाश्चापि, सरस्वत्यास्तथाऽश्विनोः चतुः-सनत्कुमाराणां बालानां वेदरूपिणां; विष्णु-लक्ष्म्योस्तथाऽन्यस्यां, अपत्यत्रिकयोरपि, रुक्मिणी-रति-सीतानां, कृष्णस्य-नन्द-रामयोः ; तृतीयस्यां शङ्करस्य पार्वत्याः, स्कन्द-सेनयोः, गणेश-सिद्धि-ऋद्धीनां, सुन्दराकृतयोऽखिलाः, सर्वाः मनुष्यवद्विभ्यः मूर्तयः स्युः; न भीषणाः; न मुखानि तु चत्वारि, न चत्वारोऽपि बाहवः, न षड्-शिरांसि, नो पंच, न गजस्य शिरोऽथवा, नाष्टौ भुजाः, न कपाल-माला-सर्पादि-भूषणं। एतादृशाऽऽकृतीनां तु देवानां वर्णनं हि,यत् पुराणेषु कृतं,तत्तु रूपकं ह्येव केवलं; व्याख्याकारैः पंडितैश्च विद्वद्भिर् 'व्यास'-नामकैः, महाजनाय व्याख्येयं 'कथा'-काले च रूपकं; न मूर्तयः तदाकाराः स्थाप्याः देवालयेषु; यत् तासु एव रमते चित्तं, दृढं गृह्णाति तास्तथा, वास्तवत्वेन, बालानां, सुकुमारधियां अपि; न निराकार-तत्त्वेषु ततोऽभिमुखतां इयात् । (१२०) । एतद्दोषं प्रपश्यद्भिर्, अन्य-धर्मोपलब्धिभिः, मूर्तीर् अशेषतस् त्यक्तुं यतितं; न तु पारितं । एहूदान्, मुस्लिमाः; बुद्ध-जिनयोर्, अनुयायिनः, मूर्तीस्तयोः; तथा 'सिक्खाः', 'ग्रन्थ'-नामक-पुस्तकं; क्रिश्चनाः, 'जीसस'स्य,अपि तन्मातुः, प्रतिमाः, तथा चित्राणि अपि विविधाणि, 'क्रास'-यंत्राणि चैव हि; पूजयन्त्येव सर्वत्र, बहु वा, न्यूनमेव वा । मानवीं प्रकृतिं दृष्ट्वा, मूर्तीनां विषयेऽपि, अतः 'आश्रयेत् मध्यमां वृत्तिं, अति चैवापि वर्जयेत्'; अरुन्धती-दर्शनवद्, अमूर्तं मूर्तितो नयेद्; असत्याद् धर्मतः सत्यं मृदूपायैः कृपेत् जनान् । रामायणं वाल्मीकेर्, व्यासस्यापि च भारतं, मुख्यानि च पुराणानि, ग्रन्थाः सन्तूत्तमोत्तमाः, ( क्षिप्त-श्लोकान् असद्-भावान् विशिष्यापि विरिच्य तु ) । न सन्त्यन्येऽन्य-भाषासु येदृशाः बुद्धिवर्धनाः, एकैकाख्यानकेनैवं विविधार्थ-प्रबोधनाः,बहुश्रुतेन यदि ते व्याख्यायन्ते यथार्थतः । कस्यामपि च भाषायां नेदृशाः बुद्धिनाशकाः, यदि अल्पज्ञेन मूढेन व्याख्यायन्ते अयथार्थतः । (१२०) । मंदिरं, प्रतिसाहस्रं नृणां एकं भवेदपि, न पुनर्बहुसं-ख्यानि,पोष्यां वीथ्यां,पदे पदे,स्वच्छं सुमृष्टं चापि स्यात्, न पुष्पादिक-कर्दमं; अर्चा च दर्शन-ध्यान प्रणामैरेव; नान्यथा, न पुष्पपत्रसलिलैः, न मिष्टैर्, न विलेपनैः, न ताम्र-रौप्य खण्डैः वा ; न नादैर्भैरवैरपि ; उत्तमं शुभ-गानं च, वाद्यं चापि, भवेत्तु, सुप्रबद्धेन रूपेण, निर्दिष्ट-समयेषु च । देवालयेन यद् भाव्यं आधि-व्याधि हरेण, तत् प्रत्येके स्यात् चिकित्सायाः शाला, वैद्यविचिकित्सकः, स्त्री-वैद्या

च तथैवैका, तथोपकरणानि च। इतिहास पुराणाना व्याख्यायै, प्रति मन्दिर शाला एका च प्रशस्ता स्याद्, विद्वान् व्याख्याकरस्तथा, यो रूपकाणि व्याख्यायाद् युक्तियुक्तैश्च हतुभि , नाऽन्धश्रद्धा वर्धयेत, नार्थयेतापि दक्षिणा , प्रोत्साहयेच् च जिज्ञासो, शमयेच्च सदुत्तरै , युक्तियुक्ते हेतुमद्भि , तोषकै , ज्ञानवर्धकै । तस्या व्याख्यानशालाया , चिकित्साया गृहस्य च, चतुर्थ्यूहा एव कुर्यु निवाहस्य प्रबन्धम, यथा पाठस्य शालाया , प्रसवस्यापि वै यथा। स्वागता सन्तु सर्वेषु मन्दिरेषु एवु मानवा सर्वेऽपि , 'हिन्दवो' वा स्यु, स्युस्तथा वाऽन्यधर्मका, नियमानां स्वच्छतायां येऽपि स्यु प्रतिपालका । प्रेम्णा पूत मनो येषा, देह स्नानादिभिस्तथा, ते सर्वे स्वागता सन्तु, सात्त्विकाऽनन्दकाङ्क्षिण । ( १४२, आश्विन ४२६७ )।



१७ अध्याय

'श्रद्धा' विवेचन

(२८) प्र० 'नान्धश्रद्धा वर्धयेत'—गुरुष, उचित हि सत् , विना श्रद्धा न किञ्चिद् क्रियते कार्यमुत्तम , विरोधिवद् इमे वाक्ये, कथ भूयात् समन्वय ?

उ० सात्त्व्या एव हि सा श्रद्धा, या पात्रे स्थाप्यते मुदा, नाऽन्धश्रद्धा पुन , किन्तु उन्मीलिताक्षा, विवेकिनी पात्रापात्र-सदसतोर्, ज्ञान विज्ञान वर्धिता, सात्त्विकी खलु सा , यद्वत् पात्रे दान तु सात्त्विक । मा भूद् अपात्रे श्रद्धा वा, दान, ज्ञान, धन, बल । "त्रिविधा भवति श्रद्धा, देहिनो, सा स्वभावजा, सात्त्विकी, राजसी चैव, तामसी चेति, तां शृणु, सत्त्व (प्रकृति ) अनुरूपा, सर्वस्य, श्रद्धा भवति, भारत !, श्रद्धामयोऽय पुरुष, यो यच्छ्रद्ध स एव स "(गी०)। श्रद्धत्ते सात्त्विको देव (परमात्मन), यक्षरक्षासि राजस , प्रेतान् भूतगणाश्चापि श्रद्धत्ते तामसो जन । यथाऽन्येषां महार्थानां शब्दानां दुर्दशा कृता, स्वोत्तमार्थाद् विपर्ययं 'श्रद्धा' शब्दोऽप्ययं तथा। 'श्रत्, सत्य' इति वेदेषु ; सत्यवेन दधाति या, य कश्चिदुत्तम भाव पदार्थं, पुरुष नु वा, सा बुद्धिरेव सत् 'श्रद्धा' , न अधम लक्ष्य आश्रिता, मूढमाहेण, वा असत्यं पदार्थं, दुर्जन नु वा। "श्रद्धा प्रातर्हवामहे, श्रद्धा मध्यदिन परि, श्रद्धा सूर्यस्य निम्लुचे, श्रद्धे ! श्रद्धापयेह न " (वे०)। (१०)। सवितृपास्तिरेवात्र, समार्या 'श्रद्धया' ननु , 'परमात्मनि वै श्रद्धा, साय प्रातर्ह-

यामहे'। श्रद्धाया महिमा त्वेवं वेदसूक्तेन सूच्यते, तादृश्या विना, या माता महता वीरकर्मणां, तपस्यानां च योगानां, आत्मसाक्षात्कृतेरपि, उच्चलक्ष्यस्य लाभाय 'श्रद्धया' तपन 'तप', "आविवेश यथा 'श्रद्धा', बालकं नचिकेतसं" (कठ० उ०)। असच्छ्रद्धा पुनर्योनि दानानां यज्ञकाय च, कार्याणां च निष्फलानां, नरकाय गतेरपि। 'गुरू' भवितुकामा ये, मुग्ध चित्त पहारिणः—'गुरौ श्रद्धा भृशं कार्या, न दैवत् वाक्य तु तद्वच, नास्तिक्यमेव जिज्ञासा हि, अहमेव गुरुस्तव, यद्ब्रवीमि शास्त्रं तद्धि एव, धनं स्व मह्यमर्पय, प्राप्स्यसि स्वर्गमेव त्व—इत्यादि बहु वादिनः, 'इदं वृन्दावनं विद्धि, मां विद्धि नन्दनन्दनं, आत्मानं गोपिकां विद्धि, विहरस्व यथा सुखं'—एवं चरित्रभ्रष्टा ये, परस्त्रीप्रसाकारिणः, 'सेव्या पथ न कारान, तैरेव मुक्तजीवनं—एवं पापिष्ठभावा ये, पापिष्ठाचरणास्तथा—तेषु श्रद्धा, महन्याय, लोक संग्रह नाशकः। (२०)। तादृशा वञ्चका, दुष्टा, क्रूरा, कपटिनो भृशं, धर्म कर्म विलोप्तारः, लोक विग्रह-कारकाः। चातुर्वर्ण्यव्यवस्थानं, चातुराश्रम्यमेव च, धर्म कर्म विभागेन, लोक संग्रह कारकः। "विरला गुरवः ते, ये शिष्य सन्तापहारकाः, बहवो गुरवस्ते ये शिष्यवित्त पहारकाः" (गुरुगीता), ईदृशेषु तु या श्रद्धा सा वै नरकगामिनी, ईदृशैरेव सर्वोऽयं निरये पातितो जनः। *अन्येऽपि सन्ति ये नूनं नैतावत् पापबुद्धयः, तथापि मोहिता स्वार्थे विपर्यन्ति स्वयं, ततो विपर्यस्यति भावांश्च, शब्दान्, भावान् बुधैश्च च*, जिज्ञासाया वृथा भीता, भक्ताश्च दूरतरे पतत, विवर्तयति प्राचीनान् पाठान् सुविशदान् अपि, मोहनायाल्पबुद्धीनां, विक्षेपाय अपथे तथा। "श्रुतिस्तु वेदो विज्ञेयो, धर्मशास्त्रं तु वै स्मृतिः, ते सर्वार्थेषु अमीमांस्ये, ताभ्यां धर्मो हि निर्बभौ"—इति प्रचलितः पाठः, कः इवार्थोऽस्य वै भवेद्? श्रुति स्मृति अर्थ निर्णये 'मीमांसा' शास्त्रमुत्थितं, "ते सर्वार्थेषु मीमांस्ये"—इत्येवात्र उपपद्यते, (३०), "यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः, × प्रत्यक्षं च, अनुमानं च, शास्त्रं च विविधागमम्, त्रयं सुविदितं कार्यं, धर्मं शुद्धिमभीप्सता"—इत्यप्यग्रे व्यक्तमुक्तं मनुना हेतुपूर्वकं; "हेतुभिर्धर्ममन्विच्छेत्, न लोकं विरसं चरेत्"—एवं व्यासोऽपि वदति, भारते शान्तिपर्वणि। किन्तु जिज्ञासया भीता, पाठं अपश्यन् इत्थम्, प्रकारयन्तो दौर्बल्यं स्वं, प्रक्षिपन्ति पुनः—"योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः, स साधुभिर्बहिष्कार्यो, नास्तिको वेदनिन्दकः" (म०),

'जिज्ञासैवास्ति नास्तिक्यं', 'दोषं कोपेन पूरयेत्'—इति आश्रयन्तो श्रुनीतिं सद्धर्मध्वंसकारिणीं। मा तयोरवमानोऽस्तु; किन्तु संशयिते सति 'शब्दे', ऽनुमानमेव स्यात् प्रमाणं बलवत्तरं; ताभ्यां च, अप्यनुमानाच्च, प्रत्यक्षं बलवत्तमं; "न श्रुतीनां शतमपि, घटं पटयितुं क्षमं" (भामती); श्रुतीनां भवति द्वैधं, इत्यप्युक्तं पुनः पुनः, "श्रुतिद्वैधे, यथेष्टं"चाऽपरैरित्यपि निर्णयः, मीमांसकैर्दुर्तर्कस्तु स्वयमेव कृतः स्फुटः; यावत्तस्माद् "न मीमांस्ये" इति नैवोपपद्यते। (४०)। नैसर्गिकौ गुरू बाल्ये पितरौ, रक्षकौ परं, पालकौ पोषकौ स्निग्धौ, श्रद्धेयौ स्तः स्वभावतः, बालोऽप्यवचनतया बुद्ध्या श्रद्धत्ते तौ निसर्गतः। सुपरीक्ष्य, द्विजं यं, तौ 'नयेयुर्' 'उप',बालकं, सोऽपि प्रकृत्या श्रद्धेयो बालस्यास्य भविष्यति; सद्गुरोर्न विशेषोऽस्ति शिक्षणे पुत्रशिष्ययोः; गृह्णाति येन मंत्रेण गुरुः शिष्यं, किल, आशयः तस्यापि चायमेवास्ति, यत् पुत्रीक्रियते ह्यसौ; "मम व्रते ते हृदयं दधामि, मम चित्तं अनुचित्तं ते अस्तु, मम वाचं एकमनाः जुषस्व, बृहस्पतिस्त्वा नियुनक्तु मह्यं"। 'पुत्रत्व'करणायात्र, आवाह्यते तु 'बृहस्पतिः'; 'जायात्व'करणायास्मिन् मन्त्रे देवः 'प्रजापतिः'। ईदृशो यत्र सम्बन्धः पवित्रो गुरुशिष्ययोः, तत्र श्रद्धा उचिता पूर्णा स्नेहः पूर्णस्तथैव च। "प्रज्ञां ददाति यऽाचार्यः, तस्मात् सः गुरुरुच्यते" (वा० रा० २ का० अ० १११)। "त्रयः पुरुषस्य गुरवः, माता पिता आचार्यश्च" (विष्णुस्मृ०)। "कस्माद् आचार्यः? आचारं ग्राहयति, आचिनोति अर्थान्, आचिनोति बुद्धिं इति वा" (नि० १,२,२)*। यदि प्राप्तवयाः शिष्यः, व्यवहारक्षमः, तदा, तेन श्रद्धा विधातव्या स्वयमेव परीक्ष्य वै। (५०)।

---

*प्राप्तः, शिष्यः, तथाऽऽचार्यः, परीक्ष्यौ. ते त्रयोऽपि च—वाक्यैर् उदारैर् आह एवं, चरको विद्वद्ग्रणी। "शास्त्रमादौ परीक्षेत; विविधानि हि शास्त्राणि प्रचरन्ति लोके; तत्र, सुमहद्यशस्वि, धीरपुरुषासेवितं, अर्थबहुलं, आप्तजनपूजितं, ... हितं, ... आर्षं ... पुष्कलाभिधानं अपष्टशब्दं, क्रमऽगतार्थं, अर्थतत्त्वनिश्चयप्रधानं, संगतार्थं, ... आशुप्रबोधकं, लक्षणवच्चोदाहरणवत्, यत् शास्त्रं तद् अभिप्रपद्येत।... ततोऽनन्तरमाचार्यं परीक्षेत; तद्यथा—पर्यवदातश्रुतं, परिदृष्टकर्माणं, दक्षं, दक्षिणं, शुचिं, ... प्रकृतिज्ञं, प्रतिपत्तिज्ञं; ... अनहंकृतं, अनसूयकं, अकोपनं, ... शिष्यवत्सलं, ज्ञापनसमर्थं, अध्यापकं (आचार्यं शुश्रूषेत)। आचार्यः शिष्यं चऽादितः परीक्षेत; तद्यथा— प्रशान्तं, आर्यप्रकृतिकं, अक्षुद्रकर्माणं, ऋजुचक्षुर्मुखनासावंशं ... धृतिमन्तं, अनहङ्कृतं, मेधाविनं, सुतर्क-

"न विश्वसेद् अविश्वस्तं, विश्वस्तं नाति विश्वसेत्, न चाऽत्यन्तं अविश्वस्तो, भवेदिति बृहस्पतिः" । यथा ऽन्यत्र, तथैवात्रापि, 'अति सर्वत्र वर्जयेत्' ; श्रद्धां कुर्याद् गुणान् दृष्ट्वा, दोषानपि परीक्ष्य च ; 'विद्वाँस्तु गुण-दोषज्ञः' ; न भवेच्छ्रद्धया जडः । 'आत्मनोऽन्यत्र यस्मिन् नु श्रद्धां आत्यन्तिकीं अयं करोति, एनं स मृषाऽन्यः परादत्ते', इति श्रुतिः (बृ० उ०) । "उद्धरेदात्मनात्मानं,नाऽऽत्मानं अवसादयेद् ; आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ; बंधुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जितः ; अनात्मनस्तु शत्रुत्वे वर्तेताऽऽत्मैव शत्रुवत् ; × आत्मन्येवाऽऽत्मना तुष्टः, स्थितप्रज्ञः स उच्यते ; × यस्त्वात्मरतिरेव स्याद्, आत्मतृप्तश्च, मानवः, आत्मन्येव च संतुष्टः, स स्वराड् भवति ध्रुवं ; × यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन् आत्मनि तुष्यति, × स निश्चयेन योक्तव्यो योगो ऽनिर्विण्णचेतसा ; बाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुखं, स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ; × सर्वभूतस्थमात्मानं, सर्वभूतानि चाऽऽत्मनि, ईक्षते योगयुक्ताऽत्मा सर्वत्र समदर्शनः" × (गी०);(म०); "सर्वेषामपि चैतेषां आत्मज्ञानं परं स्मृतं, तद्धि अग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः । × आत्मनैव सहायेन सुखार्थी विचरेद् इह ;

स्मृतिसंपन्नं उदारसत्त्व, तत्त्वाभिनिवेशिनं, निभृतं, अनुद्धतं, अर्थतत्त्वभावकं, अकोपनं, अव्यसनिनं, 'शीलशौचाऽऽचारानुरागदाक्ष्यदाक्षिण्योपपन्नं, अध्ययनाभिकामं, अर्थविज्ञाने कर्मदर्शने चानन्यकार्यं, अलुब्धं, अनलसं, सर्वभूतहितैषिणं, आचार्यऽऽज्ञाकरं'''एवंगुणसमुदितं शिष्यं अध्याप्यं आहुः । (२२) । (अतः परम्, आचार्यः शिष्यं अनुशास्ति–एवं एवं त्वया ब्रह्मचारिणा सता आचरितव्यं ) । (अन्यच्च वदति,) कृत्स्नो हि लोको बुद्धिमतां आचार्यः, शत्रुश्चाबुद्धिमतां, अतः अभिसमीक्ष्य, बुद्धिमता, अमित्रस्यापि धन्यं, यशस्यं, आयुष्यं पौष्टिकं, लौक्यं ( लोकहितं ) उपदिशतः, वचः श्रोतव्यं अनुविधातव्यं चेति" ( चरक०, विमा० अ० ८ ) । आचार्य शिष्ययोर् एवं परस्परपरीक्षणं, शब्दैः परिमितैरेव उपदिष्टं सुश्रुतेन च ; ब्रह्मचारिव्रतप्रचारं विद्यार्थिनं अनुप्रदिशन्, आचार्यो ऽधिकं एतत् प्रतिजानाति सुश्रुतः—""; अतोऽन्यथा ते वर्तमानस्याधर्मो भवति, अफला विद्या, न च प्राकाश्यं प्राप्नोति; अहं वा, त्वयि सम्यग्वर्तमाने, यदि अन्यथादर्शी स्याम्, एनोभाग् भवेयं, अफलविद्यश्च" (सुश्रुत०,सूत्र०,अ० २) । शिष्योऽशक्तो भवेदत्र बाल्याद् गुरु-परीक्षणे, बालस्य पितरौ तत्र तत्कार्यं कर्तुं अर्हतः । (३०) ।
पूर्वं उक्तोऽयं यस्तु अस्ति मन्वादेशः श्रुतेरपि ।

आत्मज्ञाने शमे च स्याद् वेदाभ्यासे च यत्नवान्, × आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः, माऽवमंस्थाः स्वमात्मानं नृणां साक्षिणं उत्तमम्, × × सर्वमात्मनि संपश्येत् सच्चाऽसच्च समाहितः, सर्वं ह्यात्मनि संपश्यन्, नाधर्मे कुरुते मनः × आत्मैव देवताः सर्वाः, सर्वमात्मन्यवस्थितम्, आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्, ×, एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना, स सर्वसमतामेत्य ब्रह्माभ्येति परं पदं। सर्वभूतेषु चात्मानं, सर्वभूतानि चात्मनि, समं पश्यन्, आत्मयाजी, स्वाराज्यं अधिगच्छति"(म०)। "यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति, सर्वभूतेषु चात्मानं, ततो न विजिगुप्सते" (उ०)। "आत्मैव ह्यात्मनो नाथः, को नाथो ह्यपरो भवेद्? आत्मना हि सुदान्तेन नाथं प्राप्नोति दुर्लभं" (बुद्धवचन, धम्मपदे)। (७०)। उद्धरेदात्मनाऽऽत्मानं नात्मानं अवसादयेत्—आत्मनि एव ईदृशी 'श्रद्धा', सुउत्तमा सात्त्विकी मता। "तस्मात्त्वं, जाग्रतःसन्, योत्स्यं सुप्ति कर्मसु, भविष्यतीत्येव मनः कृत्वा, सततं, अव्यर्थं" (म० भा०)। 'स्वपन्ना, सुस्थिरो भूत्वा, चरितुं शक्नुयाद् अपि, बालोऽपि, शीघ्रमेवापि'—पितरौ नित्यं इच्छतः, 'आत्माऽवलम्बी, स्वाधीनो, स्वप्रज्ञो भवेद् अयं, स्ववशो, न परप्रज्ञः' शिष्यो मे उन्नतप्रज्ञः, न सदा सम्मुखापेक्षी'—इत्येव सद्गुरुरेव च। अयं मान्यो गुरुत्वेन, न वा, इति च विनिर्णयं, यतस्त्वमेव कुरुषे, त्वं गुरूणां गुरुः स्वयं, इदं सत्यं, असत्यं वा, निश्चिनोषि त्वमेव यत्, तत् त्वमेवासि सत्यानां अपि सत्यतमो ध्रुवं, ईश्वरोऽस्ति, न वाऽस्ति, एतत् त्वं हि निर्णयसि दृढं यत्, ततः त्वमसि नूनं ईश्वराणामपीश्वरः, परमात्मा, परेशो च, "तत् त्वं असि" एव निश्चितं। न पुनस्ते शरीरं तत्, मृत्पिण्डं क्षणभंगुरं, किं तु सर्वशरीरेषु व्याप्तो, यो 'अहं' तु, चिन्मयः। ईदृशी याऽऽत्मनि श्रद्धा परमा सात्त्विकी तु सा।[1] कामक्रोधादिषट्क" पदं 'रिपूणां'

[1]—वाल्मीकिरूपिणा सीतारामौ यौ तु निरूपितौ, अप्युत्कृष्टतमौ सन्तौ, मानवौ तु तथापि तौ, आदर्शौ च नृनारीणां, 'प्रतिमाने महीभुजाम्', तथापि वर्जितौ नैव स्खलनात् तु क्वचित् क्वचित् मनुष्यसुलभाद्, एवं वदन्तौ स्वमनुष्यतां, अनुकार्यौ च यत्नेन यावच्छक्यं जनैः सदा, "न रावणवद् आचर्यं, आचर्यं रामवत् तथा"—इतीतिहाससमर्थेशः, काव्यनिर्माणहेतवे। तुलसीदासकविना, यथा तौ अत्र चित्रितौ, विषयौ 'भक्ति' भक्तेस्तु देवीदेवौ हि केवलं जप्यौ भज्यौ नमस्यौ च 'श्रद्धया' तु

मस्ति च आन्तर 'शमादिषट्क' तस्यास्ति प्रतिपक्ष , प्रमाद्, किल, 'शत्रो शत्रु ', 'महामित्र' मनुष्याणा अथ आन्तर ; तत्र 'श्रद्धा' च गणिता मित्रषट्के तु पचमी, षष्ठस्यञ्च 'समाधान' स्यास्ति या नान्तरीयका, 'शमो, दम , तितिक्षा, उपरम , श्रद्धा समाहिति ' । (८०) आत्मन्येव हि सा श्रद्धा भवेदात्मप्रदर्शिनी, सर्वेभ्यश्चापि बंधेभ्य सर्वथा मोक्षदायिनी । यदा बाह्यान् पदार्थांश्च द्रष्टु शक्नोति मानव स्व चक्षुषैव, नान्यस्य, तदात्मान कथ श्यामी परस्य चक्षुषा पश्येद् ? आत्मा एव आत्मान ईक्षते । आत्मन्येव परा श्रद्धा कार्या सर्वार्थदर्शिनी ; स्वा राज्य च, स्व राज्य च,स्व श्रद्धालुभिर् आप्यते । 'आत्मदर्शन' जाताना सिद्धान्ताना प्रयोगत वर्णाश्रमव्यवस्थाम 'स्व राज्य' सिद्ध्यति इह सत् ।

हिंसा अहिंसा' विवचन

(२१) प्र० केचिद् वदति अहिंसव सर्वत्र जय-साधन, स्वराज्य पुनरासाद भारतीयैस्तथैव च ; अन्ये विप्रतिपद्यन्ते , कथमत्र विनिश्चय ?

उ० योगभाष्ये परामर्श —'वचनीय विभज्य , वे (४ ३३) , एकान्त ।यन्त वचन अतथ्य प्रायशो ननु , यतो द्वन्द्व-मयी सृष्टि , अन्योऽन्यापेक्षिणौ उभौ, सापेक्ष चापि नैकान्त,नात्यन्त,भवितु क्षम। एकान्तात्यन्ततो अहिंसा',या'महाव्रत रूपिणी,नावच्छिन्ना जाति देश कालैश्च समयैरपि (यो० सू० २ ३१), यथा विदक्ष' वरणी सा, ऽत्यन्त खलु भाविनी , यतो हिंसा विना शक्य नान्यथ प्राणधारण । (९०) । जीवाणवस्तु आचाम्यन्ते प्रति श्वास च कोटिश , सचेतनानि शाकानि भुज्यन्ते, अपि मुनिव्रतै । "चराणा अन्न अचरा , दंष्ट्रिणा अप्यदंष्ट्रिण , अहस्ताना सहस्ताश्च", हिंस्राणा चाप्यहिंसका (भा०),निरपमा उदासिनर दुर्बल बलिना मपि, मृदवश्च कठोराणा, विश्वस्ताश्छलिनामपि, प्रमत्ता सावधानाना अलसाश्च तरस्विना, "क्षुधानो अनुधावैव, शूराणा चैव भीरव , फल्गूनि चापि महता, जीवो जीवस्य जीवन" (भा०) । चार्य साधन-सम्बन्धे,'सर्वत्र' इति पद तत्र ,समाचीन न भाति इव , "वचनीय विभज्य" वै । "अहिंसा परमो धर्म ' इति वाक्ये

---

'श्रुति' मानया, स्मर्यौ, अर्च्यौ श्रद्ध भक्त्यौ, गेयौ, कीर्त्यौ मुहुर्मुहु , शरण्यै 'पात तातौ' च नियमुद्धारकारिणौ , स्वप्नेऽपि नानुकर्तु तौ शक्यौ केनच-मानुषै , अपि चाऽन्येन देवेन देव्या वापि कथचन । (८) ।

विमोहिता, केचिद् 'हिंसा' च 'दण्ड' च सङ्किरन्ति अविवेकत[1]। 'हिंसा' या स-
पराधाना, 'दण्ड' एव हि सा स्मृता; 'दण्डो' निरपराधाना, 'हिंसा' घोरा इति
निश्चय, "अदण्ड्यान् दण्डयन् राजा, दण्ड्यांश्चैवाप्यदण्डयन्, अयशो महद् आप्नोति

---

[1] "ग्रामार्थं, भर्तृपिण्डार्थं, दीनानुग्रहकारणात्, वधबन्धपरिक्लेशान् कुर्वन्, पापात् प्रमुच्यते, हिंसार्थं तु लभ्यैषा कृत्वा, सुखमवाप्नुयात्, (सुवैद्यो गण्डरुग्णानां यथा वै शल्यकर्मणा); दण्ड्यांस्तु भर्त्सयन्, राजा, जनान्, पुण्यमवाप्नुयात्, गुरु सतर्जयन् शिष्यान्, भर्त्ता भृत्यजनान् स्वकान्, उन्मार्गप्रतिपन्नानां शास्ता, धर्मफलं लभेत्, चिकित्सकश्च दुःखानि जनयन्, हितमाप्नुयात्, . एवमन्ये सुमनसो 'हिंसया' स्वर्गमाप्नुयु । रक्षणार्थाय भूतानां हन्याद् हिंस्रान् मृगान् पुन ।. (म० भा० अनु० अ० २१७, २११ - १७८) "शठं प्रति शठं कुर्यात्, सादरं प्रति सादरं, जिघांसन्तं जिघांसीयाद्, एष धर्म सनातन", "आततायिनम् आयान्तं, अपि वेदान्तपारगम्, जिघांसन्तं जिघांसीयात्, न तेन भ्रूणहा भवेत्", एता नीतिमपहत्य, पाण्डवैर्गुरवो हता (शान्ति० अ० १४)। "ये न हिंसन्ति जीवान् वै, लोकेऽस्मिन्, द्विजसत्तम! सुष्ठु सञ्चिन्त्यताम्, अत्र नास्ति कश्चिद् अहिंसक, अहिंसायास्तु विरता यतयो, द्विजसत्तम!, कुर्वन्त्येव हि ते हिंसां, यत्नात्, साऽल्पतरा भवेत्। (१०)। कृषि साध्विति मन्यन्ते, तत्र हिंसा परा स्मृता, कर्षन्तो लाङ्गलैस्तौ घ्नन्ति भूमिशयान् बहून्, जीवान् अन्यांश्च बहुश, तत्र किं प्रतिभाति ते? धान्यबीजानि यान्याहु, व्रीह्यादीनि, द्विजोत्तम!, सर्वाण्येतानि जीवा हि, तत्र किं प्रतिभाति ते? जीवा हि बहवश्चापि वृक्षेषु च फलेषु च, उदके बहवश्चापि, तत्र किं प्रतिभाति ते? ये निमेषनिपातेन हिंस्यन्ते, सन्ति तादृशा जीवा सुसूक्ष्मा बहव, तत्र किं प्रतिभाति ते? सर्वं व्याप्तम् इदं, ब्रह्मन्!, प्राणिभि प्राणिजीवनै, मत्स्यै ग्रसन्ति मत्स्यानि जीवन्ति बहुधा, द्विजसत्तम!, प्राणिनो येऽन्यभक्षाश्च, तत्र किं प्रतिभाति ते?" (वनपर्व अ० २१२)। नूनं साधारणो धर्म, यथोक्तं शान्तिपर्वणि, "सर्वे वेदा न तत् कुर्यु, सर्वं यज्ञाश्च, भारत!, सर्वतीर्थाभिषेकाश्च यत् कुर्यात् प्राणिनां दया, अहिंसालक्षणो धर्मो, ह्यधर्म प्राणिनां वध, तस्माद्धर्मार्थिभिर्लोके कर्त्तव्या प्राणिनां दया"। अवस्थासु विशेषासु पुनर्धर्मो विशिष्यते, धर्म्या नितान्तमेवैषा हिंसा या दण्डरूपिणी, तां विना जगतां क्षेमं न स्यादेकं क्षणं खलु, एष बहुविचारान्ते अनन्यत्र विनिर्णय। (२०)।

नरकं चाधिगच्छति"। (म०) अबुद्धिपूर्वकं 'हिंसा' या अनिवार्या भवेदपि, बुद्धि-पूर्वं च सद्‌हेतोः, 'अहिंसा' एव तु तेऽपि उभे। (१००)। "गृहे, गुरौ, अरण्ये वा, निवसन्, आत्मवान् द्विजः, न-अवेदविहितां हिंसां, आपदि अपि समाचरेत्; या वेदविहिता हिंसा नियता, अस्मिंश्चराचरे, अहिंसामेव तां विद्यात्; वेदाद् धर्मो हि निर्बभौ। × आततायिनं आयान्तं हन्यादेवाविचारयन्; × नाततायिवधे दोषो; मन्युस्तन्मन्युमृच्छति" (म०)। समर्थ्यमन्यचाप्यत्र, 'धर्मभेदोऽधिकारतः'; सन्यासी सर्वभूतेभ्यः दद्यात्त्वभयदक्षिणां (म०); अहिंसाऽऽत्यन्तिकी तस्य उचिता तस्माद्; ऋते तु तां, याऽबुद्धिपूर्विका च, अनिवार्या चापि, यथोदितं। आत्मत्राणायापि नायं कुर्याद् 'हिंसां' तु कस्यचित्; मैत्री,अनु-अनुतृप्तश्चापि, स्वस्तर्षो हि असौ स्मृतः। गृहस्थस्य तु धर्मोऽयं,रक्षेद् एवऽऽश्रितान् भयात्, तेषां-संरक्षणार्थं हन्यादेवाततायिनः। क्षत्रियस्य च राज्ञश्च धर्मोऽयं परमः स्मृत, निर्दोषाणां तु रक्षार्थे दुष्टानां 'हिंसनं' ऋतं। निमित्तानि भवेयुश्चेद् तादृशानि,विरोधतः, यत् कार्यसिद्धिः सम्भाव्या, शस्त्रहीनैर्, 'अहिंसया', अत्रदपमेव 'अहिंसा' स्यात् तत्र धर्मः परो ननु। (११०)। केचन आशासते हिंसां उच्छेत्तुं मूलतो भुवः अहिंसायाः प्रचारेण; तथैव,आत्मसमर्पणैः हिंस्रेभ्यो, हृदयं तेषां विवर्तयितुमेव च। कदाचिदेव हिंस्रस्य भवेदीदृग् विवर्तनं; हिंसानाशस्य नऽशान्ति पृथिव्यां ननु सर्वथा। अध्यात्मशास्त्रसिद्धान्तस्तु अखण्ड्योऽयं सनातनः; 'द्वं-द्वं-स्वमेव सर्वत्र'; तौ चान्योऽन्यमपेक्षिणौ; एकाभावे ऽपरस्यापि अभावस्तु भविता ध्रुवं। प्रलये, तु उभयाभावः; सृष्टौ,चोभयवर्तनं। 'अहिंसा परमो धर्मः'—सत्यमेतत्, न संशयः; 'हिंसा'-प्रवण-चित्तेभ्यः, किंतु एतद्.उपदिश्यते, बोधस्य संभवो यत्र; न हिंस्रेभ्यः स्वभावतः। 'अहिंसा.' ये प्रकृत्यैव, किमर्थं तान् इदं वदेत्, शाकाहारिमृगान्वाऽपि, कपोतान्, गाः, शुकांश्च वा? 'हिंस्राः' वा ये प्रकृत्यैव, यथा व्याघ्रवृकादयः, तान् प्रति अपि उपदेशोऽयं व्यर्थः एवेति निश्चितं। "हिंस्राहिंस्रे, मृदुक्रूरे, धर्माधर्मौ, ऋतानृते, यद्यस्य सोऽदधात् सर्गे, तत्तस्य स्वयं आविशेत्" (म०)। दोलायते मनुष्यस्तु उभयोः द्वैधे यतः, ततः तदर्थं उपदेशोऽयं उपयुक्तो भवेत्, ननु। (१२०)। अर्थश्चास्यापरोऽप्यस्ति, 'निर्दोषं मा वधीः' खलु; न स्वेच्छार्थोऽयं अस्य, स्यात्, 'हिंसायऽस्मान् सर्वेषु, स्व-मांसैः आश्रितानां च मांसैर् व्याघ्रांस्तु तर्पय'; स्वदेहं एव सन्यासी दद्याद्, अभयदोऽखिले; न गृहस्थो; अथ सत्यपि

'क्षत्रियो' न तरा पुन , 'दुष्टानां दण्डन धर्म परम ' क्षत्रियस्य वै । प्रकृतेर्द्वंद्व शीलत्वाद् भविष्यन्त्येव सर्वदा, दुष्टशिष्टौ, क्रूरमृदू , हिंस्राहिंस्रौ, वृकीमृगौ, दैत्य-देवौ, पापपुण्ये, दस्यादन्यौ विरोधिनौ । 'हिंसाणा' अपि 'अहिंसा' या, सा 'अहिंसाणा' तु 'हिंसन'। व्याघ्र वै दयमानस्तु हिनस्ति शतशोऽपि गा [1],"क्षमाबल अशक्तस्य, क्षमा शक्तस्य भूषण, क्षमा शस्त्र करे यस्य,दुर्जन किं करिष्यति ? एक एव क्षमा दोषो , द्वितीयो नोपपद्यते , यदेन क्षमया युक्त अशक्त मन्यते जन " ( वा०रा०, म०भा० ) । क्षमिणो हरिणान् व्याघ्रा खादन्त्येव, वृकास्तथा , क्षमा-शीलान् अजान् मेषान् मनुष्या भक्षयन्ति च , ऋषयो बहव पूर्वं, अहिंसाया तु निष्ठिता , हिंसिता एव पापिष्ठैर् निर्दयै रावणादिभि , शिष्टास्ततस् तपस् तेषु , यथार्थव हि रक्षसा, (१२०) , भूमौ रामावतार्यं, अस्त्राणि अस्मै ददुस्तथा , स्वय, मतन हिंसाया , मयोक्त सानि वर्जिता । शठा भवन्ति भूयांसो ऽशठान् खादितु उद्यता । ऋजुस्वभावाश्च, हृदाऽतिकोमला , "भवति मायाविषु ये न दक्षा", प्रविश्य हि घ्नति शठास्तथाविधान् ,असंवृताङ्गान् निशिता इव इषव " (कि०अ०)।

स्मर्तव्यानि पुनरेवात्र महर्षीणा वचासि च,"आततायिन आयान्त,अपि वेदान्त पारग, गुरु वा मातृवृद्ध वा, ब्राह्मण वा बहुश्रुत, जिघासन्त जिघासीयाद्, हन्या देवाविचारयन् , न ह्याततायिवधे दोषो, न तेन भ्रूणहा भवेत्" (म०,म० भा०) । महाकारुणिको रामो राक्षसान् अहनत् तत ,क्षमाया मार्जयन् दोष अशक्ति ख्याति कारण—"अथ अश्मस्य धनु, रामो जगर्ज, गजविक्रम , रुणध्मि सवितुर्मार्गं, भिनद्मि कुलपर्वतान् , रिणध्मि जलधेर्तोय, विविनच्मि दिव सुरान्, क्षुणद्मि सर्पान् पाताले, छिनद्मि क्षणदाचरान् ,यम युनज्मि कालेन,समिन्धानोऽस्त्रकौशल, शुष्कपेष पिनष्मि उर्वी, अखिन्दामोऽद्भुतेऽसा, (१४०), भूर्ति तृणद्मि पक्षाणां, हिनस्मि इन्द्रस्य विक्रम, भनज्मि सर्वमर्यादास, तनच्मि व्योम विस्तृत, न तृणे क्षीति लोकोऽय मां विन्ते निष्पराक्रम ; एव नदन् , दाशरथिर् अधृणग् धनुषा

[1] पारसीक कवि 'सादी', बहुभाषास्वनूदिते, 'गुलिस्तां' नामके ग्रन्थे, प्रसिद्धे 'पचतन्त्र' वत्, सुष्ठु प्राह अमु एवार्थ, पारस्या स्त्रिग्धभाषया—'न दानिस्त, कों वि रद्धन् कर्द बर् मार् , कि ई ज़ुल्मस्त बर् फ़र्ज़ंदि आदम् , तस्यानुवाद शब्दैस्तु सस्कृतैरेव क्रियते वै—'सर्पपोते दयां कुर्वन् , न विजानाति मन्दधी , मैवं मनुशिशौ एतद् आचरामि तु दारुणं । (४) ।

नैर्नवैः। साम्राज्यं चापि मौर्याणां,गुप्तानां चापि,दिद्युते ; चन्द्रगुप्तोऽतिशिष्येऽभ्यान्, शिष्टश्चाणक्यमंत्रिणा ; चन्द्रगुप्तस्य पौत्रोऽभूत्तस्य योऽशोकवर्धनः,सम्यं अन्वर्थनामा सः शोकाशोकस्य वर्धनः ; आँग्लाः अपि इतिहासज्ञाः मुक्तकंठं वदन्ति, यद् एतादृशोऽपरो नाभूत् , क्वचित् पृथिवीतले,आदर्शभूतो नृपतिः प्रजाकल्याणकारकः ; (२९०) ; मनुष्याणां पशूनां चाप्यातुराणां हिताय, सः, आरोग्यशालाः तत्वार सर्वेग्रामेषु भारते ; सर्वत्र कारयामास वाणिज्यार्थं महापथान् ; विद्यालयाः प्रभूताश्च, विहारान् यमिनामपि, प्रपाश्चापि असंख्याणि पान्थानां हितकाम्यया, अनाथ-विधवा-बाल स्व(धन)-रक्षण विधीन् अपि, शिलासु लिखितादेशान् सदाचार-प्रदर्शकान्, धर्मस्तम्भान् , महास्तूपान् , 'सु-मत'-प्रचारान् अपि, सर्वत्र स्थापयामास, नृ-पो नित्यं अतंद्रितः ; पुराणेषु श्रुतप्रदर्शान् सोऽतीयाय सदोद्यतः; वस्तुतः पालयामास "प्रजाः पौत्रान् इव औरसान्"; दयाप्रधाने बुद्धस्य धर्मेऽस्य-आसीन्महादरः। न स्वपदानुगाः हि अन्ये, दौर्भाग्यात्, शासकाः स्वकाः। रामोऽप्येवं अशास्त् च, न शृण्वंति तु भूभुजः-"दुःखेनायं निर्मितो धर्मसेतुर्, नित्यं यत्नैः रक्षणीयो भवद्भिः, मत्या सर्वान् भाविनो भूमिपालान् , भूयो भूयो याचते रामभद्रः" ।

उज्जयिन्यां ततश्चासीत् संघमुख्यस्तु 'विक्रमः', योऽसौ शकान् पराजिग्ये ; ऽभूच्च संवत्प्रवर्तकः ; ( ३०० ) ; 'विक्रमादित्य'बिरुद लेभे लोकात् तथोज्ज्वलं, यौधेयान्त अत्ति कर्माणि कुर्वाणश्च दिने दिने । कालिदासोऽग्रगण्यश्च कवीनामभवत्तदा; नाटकानां त्रयाणां सः स्वकृतानामुपक्रमे, सूत्रधारमुखेनैतां विक्रमस्य तु सूचयन् , उज्जयिन्यां मालवानां सचरप खलु मुख्यतां, निवेदयति यद् 'अहं , आदिष्टस् तस्य पर्षदा , विनोदाय हि सर्वेषां अस्मार्थम् नाटकं नवं' ; 'विक्रमोर्वशीयं' इति यन् नाम ग्रन्थस्य चाधरन्, तद् 'विक्रम'ऽादरायैव; हेतुर्नान्योऽत्र लभ्यते । पश्चात्, पाटलिपुत्रेऽभूत् प्रविख्यातो महीश्वरः, समुद्रगुप्तः ; काश्यां योऽश्वमेधेन हीजे, सदाजयी, यज्ञ-अश्व-स्य प्रतिमाऽस्य काश्यां अद्यापि वर्तते, बिभ्रती लेखमुत्कीर्णं पार्श्वे, यज्ञनिवेदकं ; दिल्ल्यां च निचखान-यं महाकीलं अथअयसं, यज्ञयूपं, जयस्तम्भं ; लौहं विक्रियते नहि यस्य-अद्यापि तु, वर्षाभिर्, हिमैर्, वायुभिर्, आतपैः ; वैज्ञानिकाश्च पाश्चात्याः, रहस्यं तस्य निर्मितेः, अन्विष्यन्तो नआप्नुवन्ति ; भारतीयैस्तु विस्मृतं । (३१०),

स्थितान् उत्तरसीमाया करदान् सोऽकरोत् शकान्, दक्षिणान् सिंहलद्वीपात् नृपान् प्राभृत आप च । स्कन्दगुप्त प्रपौत्रोऽस्य हूणान् जिग्ये च नैकधा, शिरस्य राज्ये वध्रुभे वैर वैदिक यौद्धयो, वदति केचिद्, आज्ञा इव अनेनैव प्रवर्तिता, 'आमे तोराहिमाद्रेश्च सुगतस्य मतानुगा आबालवृद्ध हन्तव्या सर्वभारतभूमिषु', घश्यस्यास्य शशांकस्य, केचिद्, आज्ञा वदति तां, पुनर्नवा तां अकृत सुधन्वा शांकरे युगे ।

अस्मिन्नेवान्तरेऽभूवन् विख्याता ज्यौतिषाख्य, आर्यभट्टश्च, तत्पश्चात् वराह मिहिराभिध, ब्रह्मगुप्तस्तृतीयश्च, प्रसिद्धग्रन्थकारका । हर्षवर्धननामा च महा राजोऽभवत्तत, निष्णातस्यापि विद्यासु, प्रवीन प्रधनेषु च, साम्राज्य प्रससारास्य चतुर्दिक्ष्वपि भारते, चीनदेशात्, सभा तस्य, यात्री ह्युन्त्साङ् समागत, कृतश्च तेन यशोऽपि, प्रयागे, सार्ववैदस, यस्मिन्, बौद्धाश्च विद्वांसो, वैदिकाश्च, समाहृता, विपुलाभिर्दक्षिणाभि, विद्या सर्वाश्च पोषिता, (३२०), 'नागानन्द' च रचित उत्कृष्ट नाटक शुभ, उदारैरेव सद्भावै सद्गुणैरेव सम्भृत, तद् लभ्यते, तथैव प्यस्ल कथ्यते नाटकद्वय, बाण कादम्बरी कर्ता तस्यासीच सभा कवि, लिखित 'हर्षचरित' येन, अभाग्यान् न पूरित, स्वरचभूमिरतिम्यस्तु पार्थादिभ्यो विविच्य, त तद्ग्रन्थे महयति, एष, महासाम्राज्यशालिन । एतत् सर्व तु बुद्धस्य शासनस्य फल बभौ ।

"चरथ भिक्खवे !, चारिक, बहुजनहिताय, बहुजनसुखाय, लोकानुकम्पाय, अत्थाय, हिताय, सुखाय देव मनुस्सान । देसेथ, भिक्खवे !, धम्म आदिकल्याण, मज्झेकल्याण, परियोसानकल्याण, सात्थ सव्यञ्जन केवलपरिपुण्ण परिशुद्ध ब्रह्म चरिय पकासेथ" ( महावग्गो, विनयपिटक ), ('अत्थो'ऽत्र अर्थ, 'हित धम, कामस्तु 'व्यञ्जन' 'सुख', त्रिवर्गोऽय, चतुर्थस्तु 'परिपुण्ण' हि 'कवल', परिशुद्ध ब्रह्मचर्य', यन् नि श्रेयस इष्यते)—एव तथागतआदिष्टाद् चरन्तश्चारिका सदा, चीन तिब्बत जापान वर्मा स्याम आदिनामकान्, तथा दक्षिणकम्बोजान् कोचिन् चीनान् अनामकान्, जवान्, सुमात्रान्, बालींश्च, तत्रस्थान् अपरान् अपि, (३३०) दक्षिणाऽ मेरिकां चापि, तथा हिमवतोत्तरे स्थितान् प्रदेशान्, ईरान ग्रीस रोमादिकानपि, महाद्वीपान् उपद्वीपान् प्रजाभिर्निषिवितास्तथा, बुद्धानुशासनं धर्मं भिक्षव सम शिक्षयन्, कीर्ति शुक्ला भारतस्य वितन्वत समन्तत । दुराचारैस्तु भिक्खूना,

तथा तदनुयायिनां, कालेन, बुद्धघोषोऽपि दोषैस्तैरेव दूषितः, यैः पूर्वं वैदिको धर्मो द्विजातिभिरदूष्यत। अपि 'सुत्तनिपाते' च, "सावित्ती (त्री) छन्दसो मुखं", इति शब्दैस्तु गायत्रीं स्वयं बुद्धः प्रशंसति। यस्तु हिंसा-विधिः क्लिष्टो, बीभत्सोऽश्लीलताप्लुतः, अश्वमेधादियज्ञानां कर्मकाण्डे अतिविस्तृते, वेदेषु, कैश्चिद्, दैत्यं कर्म वेदे तु पाप्मना—( यथा उपनिषदि प्रोक्तं, "अकुर्वन् यत् तु देवताः, दैत्यास्तान् पाप्मनाऽविध्यन्"), वाममार्ग-प्रवर्तकैः—बुद्धो अगर्हत तं ; मान्यं भागं शुद्धं तु कंचन; ज्ञानकाण्डं समग्रं च आद्रियेऽत्युत्तमं तथा। जयदेवो जगौ तस्मात्, 'गीत-गोविन्द'काव्यकृत्,(३७०),"निन्दसि यज्ञविधेर्,अहह!,श्रुतिजातं,सदयहृदय-दर्शितपशुघातं, केशव!, धृतबुद्धशरीर!, जय, जय, देव, हरे!"। स्वयं मायि-भिराक्षेपो बुद्धस्योपरि यः कृतः—'मायावाद-द्वयावादैः अयं दैत्यान् अमोहयत्'—( यथा विष्णुः, पुराणेषु, दैत्यान् त्रिपुरवासिनः ; किन्तु बुद्धेन को दैत्यो वंचितो वा निषूदितः, इति कुत्रापि न स्पष्टं पद्यस्याक्षेपकारिणः)—तत्सर्वं एकतः क्षिप्त्वा, हृदयं भारतस्य वै, देवव्यासाद् यज्ञहिंसायां प्रायेण चाप्यभवत्, हिंसा-यज्ञाः यथा प्रायोऽलुप्यन्तैव हि देशतः; दशमं चावताराणां विष्णोर्बुद्धं अमन्यत, विविच्य दुष्टां हिंसां, आर्यं धर्मं ररक्ष च,सहस्रवर्षं, बुद्धस्य शासने सुप्रभावितं।

संस्कृताधीतिनोऽद्यापि सर्वेऽप्यादौ अधीयते बौद्धस्य अमरसिंहस्य 'नामलिङ्गानुशासनं', यस्यादिमेषु श्लोकेषु संज्ञाः बुद्धस्य कीर्तिताः, तत्पश्चाद् ब्रह्मणो नामपर्यायाः अनुवर्णिताः; गंगादितीर्थस्नानेषु संकल्पः पठ्यते तु यः, तस्मिन् 'बौद्धावतारे' हि शब्दो ऽयमपि पठ्यते; (३७१)। ईदृग्व्यवहारेण ज्ञायते, भूयसा, आदरः यो धृतो वैदिकैः, पूर्वं, बुद्धे, विबुधसज्जनैः; परम्परा सा स्वल्पापि ध्रियते, निभृता, उत्तमा, यद्यपि ईर्ष्या च विद्रोहः जातः कालप्रवाहतः, बौद्धानां वैदिकानां च, स्वार्थसंघर्षकारणात्। हेतुभिर्विविधैः पश्चाद् अतिमात्रं समुत्थितैः, मुख्यतस्तु तपस्विनो दोषैः, भारतमानसं, व्यस्मरद् वैदिकान् बौद्धान् धर्मान् आर्यांश्च मानवान्, धर्म्यालयश्चापि कृत्येषु, समाजः पतितस् ततः। "मायावादं असच्छास्त्रं प्रच्छन्नं बौद्धमेव हि"—द्वैतिभिर्लाञ्छितं त्वेवं मतं अद्वैतवादिनां, येषामेव हि ग्रन्थेषु, खण्डनप्रकारः कृतः केषांचित् सौगतानां तु मतानामेकदेशिनां; षड्दार्शनिकमल्लानां यथैव तु, परस्परं, यथैव शैव-शाक्त-सौरा-गुह्य-वैष्णव-धर्मिणां, एवं विवादः सर्वत्र भेददर्शिभिर्

पृथिनः। अभेददर्शिना, नूनं, संवादो ह्येव सर्वशः। साधुपीडाकराणां तु 'हिंसा' या 'दंड'रूपिणी, राज्ञा, राजाऽऽज्ञया वापि, न तु धार्ऽमिपणार्थिनी, न प्रेरिता वा मौर्येण, सा न बुद्धेन निन्दिता ; (२६०) ; तत्कालीनाः नृपाश्चापि राष्ट्रकार्येषु शिक्षिताः ; दुष्टनिग्रह-शिष्टानुग्रह-नीतिं च दर्शिताः ; उत्पथं यातुकामाश्च केचन, दर्पिताः अपि; प्रजाक्षोपात्प्रजवनाद्, विप्लवं च,-ऽभिधावनं प्रत्यासन्नैः नृपैश्चापि, दर्शयित्वा, निषेधिताः। "पदे पदे संति भटाः रणोद्भटाः, हिंसारसस्तेषु कथं न पूर्यते ?", कस्माद् भजोऽयं खलु सौम्यजीवनो विनाऽपराधं निगडय्य मार्यते ? मृगकोशआदिभक्षस्य धर्मं यदि अवकल्प्यते, गो-मेषनजआदिभक्षस्य का दशा च भविष्यति ? सुविचारैव, 'दंडस्य' 'हिंसायास्' तु विवेचनात्, अहिंसा-हिंसयोः सम्यक् संवादो संभविष्यति। अपचारानुभविनी युवबुद्धिर्विवादिनी, अदूरदर्शिनी चैकपक्षस्यैवऽऽग्रहे रता; सर्वसंवादिनी वृद्धबुद्धिर् बहुनुभाविनी। "इति नानाप्रसंख्यानं तत्त्वानां कविभिः कृतं ; सर्वं न्याय्यं युक्तिमत्त्वात् ; विदुषां किमसाम्प्रतं ?" (मा०)। यथोक्तं, बुद्धबोधोऽपि, कालेन कवलीकृतः।

आसन् रत्नानि बौद्धानां यानि त्रीण्युत्तमानि वै, तेषां अर्थो परित्यक्ता भिक्षुभिश्चानुयायिभिः(२७०)। 'बुद्धं' हि, बुद्धिमन्तं हि, श्रेष्ठं बुद्धिमतां ननु, सम्यक्संबुद्धमेवापि, सर्वेषाऽभेददर्शिनं, अर्थात्तु, 'बुद्धि'मेव हि, परमात्मप्रदर्शिनीं, सत्त्वसद्धर्मसम्पन्नां, 'गच्छामि शरणं' मुहुः ; तद्बुद्ध्या निश्चितं 'धर्मं गच्छामि शरणं' तथा ; तेन धर्मेण सुव्यूढं 'संघं' च विदुषामपि 'गच्छामि शरणं' शश्वन् सर्वकार्ये सहायदं। यो यो हि 'बुद्धः', सम्बुद्धः, महाबोधेन संभृतः, 'गच्छामि शरणं बुद्धं' तं विश्वहितबोधकं ; ईदृशैर्बुद्धिमद्भिश्च यो 'धर्मः' सम्प्रदर्शितः, उपदिष्टश्च, तं 'धर्मं गच्छामि शरणं' मुहुः, अवस्थायाः विवेकेन बध्नु तं च सदा यते ; ईदृशस्य तु धर्मस्य प्रभावेनैव संहतं 'संघं गच्छामि शरणं' चातुर्वर्ण्यस्वरूपिणं। 'रत्नत्रयं', सुखेन, एतत्, धूजयन्तो, न कर्मणा, व्यभ्रंशयन् बौद्धधर्मं भिक्षवो भोगलोलुपाः, यथेदानीं तु हिन्दूनां 'महन्ता'श्च मठाधिपाः। ऊर्ध्वं गमिष्यति, पतिष्यति चापि अधस्तात्, मध्ये चिराय तु स्थास्यति नैव घन्या—चित्तस्य रीतिर् इयमेव हि मानवस्य, किं वा इयमेव प्रकृतिः परस्य पुंसः। सोऽयं सनातनो धर्मः पुरा एवं अवसादितः, कुमारिलेन च पुनः, शंकरेण ततः परं, (२८०), ततो रामानुजेनापि, मध्व निम्बार्क-वल्लभैः, रामानन्देन, तच्छिष्यैः, कबीरादिभिरेव च,

चैतन्येन, नानकेन, तथाऽन्यैर्महाजनैरपि एकनाथ-तुकाराम मोरो ज्ञानेश्वरैः, अपि समर्थरामदासेन, द्रविडेषु भक्तवरैर् अपि, कैश्चिच्च जैनयतिभिः, चतुर्दिक्ष्वपि भारते, उत्पादितैः प्रकृत्यैव जनताहृदि लीनया, शोधितं, शोध्यते चापि, काले काले स्थले स्थले। चक्र, निकृति मस्कुयोर् अ यत्रापि, एवमेव हि। मूसा, जर्दुश्त, ईसा च, मेनिस्, हर्मीस्, तथा उर्फियस्, पैथागोरस्, साक्रटीस् च लओत्से स्थविरस्तथा, कङ्फुत्से, स्याङ्त्सु, मेङ्त्से च, सच्छिष्या बहवोऽपरे, भिन्नकालेषु भिन्नाभिर् भाषाभिः पर्यजीवयन्, नवीने समयाचारैः, धर्मसारं सनातनं, कनान्, ईरान्, फिलिस्तीन, इब्रश्, ईजिप्ट, ग्रीस च, इटली, सिसिली, गॉल चीन, जापान, स्याम च, इत्यादिदेशेषु, एते वै, महत्तरवासिका कला, भवसत धर्मतत्त्वं, प्राणैर् आयोजयन् मर्थे, वाल्मीकिरामौ, व्यासकृष्णौ, जिनबुद्धौ यथैव हि, तमेकं मानव धर्म भारते प्रत्यपादयन्। (३९०)।

आविर्भावास्तु भिद्यन्ते, धर्मसारो न भिद्यते, धर्मास्तु विविधाः सन्ति, मूल धर्मं सदा एककं, व्यञ्जनानि हि अनेकानि, अव्ययं तु एकमेव हि, आत्मानम् एकं सर्वत्र, शरीराणि पृथक् पृथक्, देहाकारं एक एव, लोका यद्यविधिनरा अनेकेषु एकमात्मानं पश्यन् सम्यग्दर्शनधारि तु च, सम्मान्नो सर्वधर्माणां, न धर्मात् परिहीयते, शमयत्येव कलहान्, शान्तिमेव प्रसारयन्।

इतिहासे मनुष्याणां काल सोऽयं समागतः, सर्वं प्रयत्नं कर्तव्यं धर्मसंस्थापनाय वै, ज्ञानभाषीनधर्मस्य नवसञ्जीवनेन हि। तत्कल्य सर्वदेशानां यन्त्रैर्वैज्ञानिकैः कृतं, वायुयानैर् महायोगैः सर्वा सीमा विलोपिता, न पर्वता, न वा मरुः, न टव्यो, न महोदधिः, शक्नुवन्ति पृथक्तुं जनान् देशान् परस्परं, सर्वत्र, सर्वदेशीय, समाचारान् गृहे गृहे, वहति 'रेडियो'द्वारा, आकाशवाण्यो दिने दिने, वार्ता तु, 'स्टीमरै' 'रेलैः' अतिमात्रं विवर्धिता, लोभेन महता उद्धूता, कामक्रोधैर् वृताऽनुजे, परमअक्षिकरी जाता, वर्त्तन्ति-त्री यथा पुरा। (४००)। पुराऽहंकारदर्पेण, केवलं विजिगीषया, 'मन्यस्व जितं आत्मानं, धरणी चापि मे स्तुता', घोराणि युद्धानि अभवन्, योषाकामेन वा पुन, मध नानि, एकभूभागे। सर्वभूव्यापकोऽधुना, जले, स्थले, तथाऽऽकाशे, युगपत् समवर्त्तितः, प्रभा विनाशको रौद्रो रोरवीत्येव सयर, अतिदेवासुरं चापि, राम रावणयोर् अपि, अतिवेलं लोभ जनितो हि, अति कौरव पाण्डवं। सिपाधयिषव

स्वार्थे, शासका, धनिनस्तथा शास्तृणामपि शास्तार सर्वराष्ट्रेषु येऽधुना, तेऽति मात्रेण लोभेन विक्षिप्ता, नाशयन्ति त स्वार्थमेवान्धबुद्धेव, सर्वसम्पद्धिशालिता, यदर्थं ईदृशो लोभ, सा एव सम्पद् विनाश्यते । शक्ते, श्रमस्य, प्राणस्य, द्रव्याणा, प्रविणस्य च, शतकोटि-स्वर्ण 'पौंड' मितस्य प्रत्यह खलु, दुर्व्ययो ऽन्योऽन्यनाशाय, युध्यमानैर्विधीयते यस्, तस्य चेन् शताशोऽपि, परस्परसहायने दीयेत, विज्ञानशास्त्रादिदृष्टैर्वर्मभिर्नानताहितैः, न कश्चनविहीन स्याद् कश्चन दारुणो (गृहहीनो) ऽथवा, स्वप्रकृत्यनुरूप च कर्म कुर्वन् अवाप्नुयाद् (४१०), उचिता जीविका सर्व, 'स्व धर्म' चापि पालयेद्, 'विश्व धर्म व्यवस्थाया' स म्यग् अन्तर्गत सतु, सर्वा च भूमिर् अचिराद् स्वर्गतुल्या भवेदियं । "धर्म एव हतो हन्ति, धर्मो रक्षति रक्षित" (म०), अतोऽसौ लोकरक्षार्थं रक्ष्यो धर्म सनातन । द्विधा प्रवर्तते सोऽय, 'कुरु कर्म', 'त्यज' इति च, प्रथमोऽभ्युदयाय स्यात्, धर्म काम र्थ साधक, नि श्रेयसविधाताऽन्य, परमार्थे प्रतिष्ठित । ससारयात्रानियम, त्रिवर्गप्रापको हि य स, सर्वेषा मनुष्याणा, वर्णाश्रममुपाश्रित, वर्णाश्रमव्यवस्थाऽस्ति, स्वभावगुणकर्मभि, आश्रमस्य चतुर्थस्य धर्म. सन्यास ईर्यते, योऽर्थाय मोक्षरूपाय, परमार्थाय सम्मत, त्रिभ्यो हि पुरुषार्थेभ्यो ऽपरेभ्य परतस्तु य । कार्याणा तथैवाधिकाराणा च विभाजने, स्वभावस्यानुसारेण, यथायोग्य, यथागुण, वर्णाश्रमाणा धर्मोऽय सर्वलोकोपकारक, कल्हहारः शम यिता, मिथ प्रीतिविवर्धन (४२०)। अतो ह्यस्यैव जीर्णस्य विश्वधर्मस्य' मानवै, सर्वलोकक्षयोद्विग्नै, सर्वलोकहिते रतै, उद्धार्ये सवदेशेषु यतितव्य अहर्निशम् ।

उपादिश्यत बुद्धेन 'विश्वधर्मो'ऽयमेव हि, मानवाना अशेषाणा येनोत्थापयेत 'सघ'ता, अभेददर्शनेनैव ; किन्तु तस्यानुयायिषु, अचिरेणैव भूयोऽपि भेददृष्टि-र्व्यवर्धत, 'हीनयान' 'महायान' भेदो भिक्षुष्वजायत, ततो वामकुलाचारि 'वज्र यान' अजृम्भत, बभूवुर्भिक्षव प्राय शिश्नोदरपरायणा, ध्यायिना ये विहारास्, ते विहारास्तु विलासिनां ; अतएव चापि कुप्य च वसु तेषु अति सचित, रहस्यो महाधश्च, मूढमत्यैर् उपाहृत ; तद्भोगाना साधनाय ग्रामाश्चापि सहस्रश, आयाश्च भूरिमूल्याना उत्सृष्टा श्रेष्ठिभिर्, नृपै, उन्नतीभिश्च नारीभिर्, विविधैरपि हेतुभि, अन्योऽन्यस्पर्धया चापि, श्रद्धया जडया तथा, व्यभिचारेच्छया चापि,

एव तत्पश्चाद्‌हिंसया, सर्वकालसर्वदेशेतिहासे तत्तु दृश्यते, भारते च बहुशस्त्र 'पन्थेषु' एतत् प्रवर्त्तते। (४३०)। "श्रिय कामितकामिन्य, मूर्खा पूजित पूजका, गतानुगतिको लोको, न लोक पारमार्थिक"। धनाढ्या भिक्षवो ह्येव, नष्टधर्मं, यत्र पन्था यद्, बुद्धोक्तान् यतिधर्मांश्च सर्वानपि विसस्मर, वागाडम्बर भूयिष्ठान् ग्रन्थान् आरचयन् बहून्, स्वबुद्धिप्रौढिचापल्यदर्पोसिपात्तथैव च, यावद्दूरतया लोकान् दम्भयन्तोऽविवेकिन, यथैव बहवो वेदानुयायिग्रन्थकारिण। "मत मम, जगति, अल्पधसदृशमतिग्राहक, प्रयास्यति पयोनिधे पय इव स्वदेहे नरो", प्रमाणवार्तिके ह्येव धर्मकीर्तिर्विरौति वै। एवं यदा बुद्धधर्मो भिक्षुभिर् जर्जरीकृत, नितान्त चरितश्चापि बुद्धिव्यामोहकारक, कुबेरभूतैर् दुर्बुद्धिवरैर उत्पथगामिभि, शिरांसि उन्नमयामासु 'वेद' शब्दानुयायिन पुनस्तदा तु, संस्कृत्य धर्मांऽचारांश्च वैदिकान्, ये पुरा विकृता आसन्, तांस्ते प्राचारयन् जने। धिक्कारैस्ते पुरा उद्विग्ना, बुद्ध शरणं अभियाता, जना, महात्मनस्तस्य मताचारै प्रसादिता, दुर्बुद्ध्या बौद्धभिक्षूणां दुराचारैर् विषादिता कुमारिलादिकान् नेतॄन् जना भूय प्रपेदिरे। (४४०) कलहश्च महान् आसीद् बौद्ध वैदिकयोस्तत, युद्धान्यप्यभवन् राज्ञा एकयो पक्षपातिना, आहूयन्त सहायार्थं भिषजश्चोऽपि विदेशिन, शक हूणान्, यद्यप्येव ऐतिह्यशास्त्रु केचन, राष्ट्रशक्तिर्भारतस्य सर्वतोऽस पृथक्कृता, 'हिन्दू'धर्मे समाजश्च सङ्कुचोच समन्तत, वार्धविवर्धिनी यात्रा समुद्रस्य निषेधिता, विस्मृत्य यत् श्रियो जन्म मन्थनात् जलधेर् अभूत, एषु रामेतिहासेषु, दुर्गसप्तशतिकेषु च, समुद्रयात्रा, वार्त्तायै वणिजा, विजीगीषया क्षत्रियाणामपि तथा, बहुशोऽप्यभिवर्णिता, अन्यदेशेषु आर्यधर्मप्रचारो विरतस्तत, ये धर्मा न तथा शुद्धा, न सर्वाङ्गपरिष्कृता, ते क्रूरआक्रमणै सार्धं बहिनोऽत्र समागमन्। ईसा सप्तम शतकान्ते, देश आक्रस्त मुस्लिम धर्म सेनापति सिन्धु, तदाह च ब्रह्मणागत, आन्तर कलहो, यस्माद्, राजधान्यन्तरे, तदा, राज्ञश्च मन्त्रिणा चासीत्, तथा वैदिक बौद्धयो, विश्वासघाताद् एव तु, युध्यमानाश्च शौर्येण, सैनिका भूमिपालस्य, शत्रुभिर्न्ये पराजिता, (४५०), एकोऽम्लेच्छको वणिक्, प्रशासन् राजलेखकान्, 'चक्रप्रहारेणैकेन ग्रीवां कृत्स्ना अकर्त्तयन् अवांधानां', पतत्साहक्, चाहस्य क्षेपणेऽभवन् वृक्षाश्च, कृतिनो, वीरा, बलिनश्च, तपस्विन।

एवं धर्मे समाज च हिन्दूना जर्जरीकृत, कथंचिद् उत्थापयितु पतित शक्ता

द्विभिः; न, किन्तु, मार्मिकाः दोषाः आन्तराः परिमार्जिताः, मान्येषिकं विज्ञानं तु स्थापेद्, न च शिक्षितमिदं, बहुव्यश्च म्लयो धर्मप्रमाणाः गुरीकृताः अपि; कुमारिलस्य शिष्येषु, शंकरस्यानुयायिषु, यथा रामानुजादीनां सम्प्रदायेषु, भूरिशः, आन्तराः मतभेदाः सम्भूः कलिना इंगिताः ; एक-एक दशदश-कल-विधाभिमत् प्रिया, मीमांसकाः अभूवंश; तथा वेदान्तवादिनः द्वैत-द्वैत-विशि-ष्टाद्वैत-मतादि भगवन् प्रिया; ननश्च बहुधा जाताः विवादाः वादिनां सुधा, गर्योन्नयधान्युरसेन्द्रमित्यत्कृष्ये परस्परं। धर्मार्थमतांकरयोगांक्लिष्टानं परस्परं अभद्-गल्कीप्त सन्देह्, एत् माधवेनापि वर्णितं,'शंकरदिग्विजय'ग्रन्थे, अन्येश्चापि परा-नयः मनोभर्तमंजुविदि, ह्यां प्रतीनिरस्यने; (५६०) ; "यत्र दरभअवाद्गलाकल-कलौर, लोकायतो विद्रुतः, वाताः कागभुमान्तु सैन्यरमता, माऽमिर्दृश्यतात्स्मी-त्यधीः, सुधा नेतु पलायिनेतु,सहसा योगाः सदैवाद्भवन्,को वा वादिषड्ः पङ्ङुमुषि-भवेद् धन्तुं पुरस्तान्मुनेः !; बुद्धो बुद्धसमुद्भवः किम् पुनः स्थित्वा क्षणाद् विद्रुतः, कौगे द्राक् कणभुग् व्यलीयत, समः स्तोमसमुद्भवो गौतमः, मतमोऽत्री कपिलो व्यलायत,ततः पातंजल्याश्वाजलिन्यकृतम्, तस्य पर्तिशिशुधनुरता केनोपसंयितम्ता !, दुर्लभाई गृहीताः कतिपय समरे यंत्रिकाः वाक्ययोधाः कागद्भाषाः, परे तु प्रसभं अभिहताः हन्त लोकायताद्याः, सार्ध बन्दीकृतास्ते सुचिरं, अथ पुनः इव-इव राज्ये निपुणाः सेवन्ते तं, विविध्य मनिधरणिपने शूरता वा दया वा !" (माध०शं० दि०)। न शास्त्रबलमाश्रित्य तथा, शस्त्रबलं यथा सुधन्वधन्वा:, सोऽजैषीन् शंकरः प्रतिपक्षिणः, बन्दीचकार कांश्चित्, निपात-परान् अपि। कुमारिलोपदेशेन, एवं चापि, सुधन्वना, "स्कन्द(गुप्त)नुमारितो राजा, जैनाः (बौद्धाः) धर्मद्विषो हताः ; व्यधाद् आज्ञां चापि राज्ञा, वधाय श्रुतिविद्विषां—आ-सेतोर् आ हिमा-द्रेश्च, बौद्धान्, आ-वृद्ध-बालकं, यो न हन्ति स हन्तव्यो, भृत्यान् इति अन्व-शात्, नृपः" (तत्रैव)।

न चापि चित्रं तद्, यस्मात् तस्मिन् काले तु सौगताः,कापालिकाः इव अभू-वन्, पापाचाररताः भृशं; कापालिकाश्च बहवो मारिताः हि सुधन्वना, नृ-मांस-भक्षिणो घोराः; वधस्तेषां ननु उचितः। (४००)।

शंकरो हि स्वयं किंतु कामशास्त्रनोऽभवत्, शास्त्रार्थं बहुशः कृत्वा मंडनस्य तु भार्यया, न अजयीत् पराजयेन बोधितोऽपि पुनः पुनः।

सुधन्वराज-सैन्यं च आसीत् शंकरसहायकं। सर्वदेशे सर्वकाले एवमेव भ्रमा-रयन्, मताग्रह-ज-क्षोभेण-प्रत्युन्मत्ताः साम्प्रदायिकाः परस्परं; बभूवुश्च सर्वेऽपि व्यभिचारिणः। रामानुजीयानां चापि तथा दर्पोक्तिः श्रूयते किल,"गाथा ताथागतानां गलति, गमनिका कापिली कापि लीना, क्षीणा काणादवाणी, द्रुहिण-हर-गिरः सौरभं नारभन्ते, क्षामा कौमारिलोक्तिः, जगति गुरुमतं गौरवाद् दूरवान्तं, का शंका शंकरादेर्, भजति यतिपतौ भद्रवेदीं त्रिवेदीं"। एवमेव सदा चक्रं कालस्य परिवर्तते; पूर्वेण निर्मितं यत् तत् नवो बाधितुमिच्छति; शास्त्राहंकृति-मत्सु एतत्, तथा शास्त्राभिमानिषु, (प्रजाहितेषु न त्वेतत्), दृश्यते विजि-गीषुषु। प्राचीनं रक्षयंतश्चेद् यत्तु सुन्दरमुत्तमं, रचयेयुर्नव रम्यं, सर्वं रम्यं जगद् भवेत्; न सुबुद्धिर् यतः सा,अतः, शास्त्राणां च, पुराम् अपि, भग्नावशेषैः सर्वत्र व्याप्तं हि जगतीतलं। किन्तु दोषाः गुणायन्ते दोषायन्ते गुणाः अपि; दावदग्धं घनं भूयो हरितं वर्धते नवं; (४८०); नियमः प्रकृतेरेष सर्वत्रैवानुभूयते; कालिदासो ऽपि वक्ति एवं, नवोत्पत्तिं समर्थयन्,"पुराणमित्येव न साधु सर्वं, न चापि काव्यं नवमित्यवद्यं; सन्तः परीक्ष्यान्यतरद् भजंते; मूढः परप्रत्ययनेयबुद्धिः"। न क्षोभेण विना उद्दामं कर्म सम्भवतीह वै; न क्षोभेण विना वीर्यं प्रचरत्यथ कुत्रचित्; सति क्षोभे, न बुद्धौ स्यात् शान्तता स्वस्थता परा; तै विना, न विवेकः स्यात् सम्यग् रक्ष्य-विनाश्ययोः। कामाज् जनयते ब्रह्मा, क्रोधात्संहरते हरः, व्ययस्थिति-करो ह्यासी विष्णुर्मध्ये तु सात्विकः। रम्यारम्यौ उभौ हन्ति तामसो भगवान् हरः; उत्पद्येते ततो नूत्नौ रम्यारम्यौ, पुनः पुनः। परन्तु मूलप्रकृतिः, असंख्यलय-सृष्टिषु व्यावर्त्तमानेषु, एकैव नित्यमेवानुवर्त्तते। 'विश्वधर्मः' 'स्व'-भावोऽथवा चाप्येवं अनुवर्त्तते, बहु व्यावर्त्तमानेषु धर्मेषु च मतेषु च; कदाचिच्छाद्यतेऽत्यर्थं, मेघैरिव दिवाकरः, प्रकाशतेऽन्यदा चापि ज्योतिषा निर्मलेऽम्बरे। कुमार-शंकरा-दीनां सोऽयं यत्नः, पुनः पुनः, वर्णजन्मजग्रहाज्जाते. कलहैर् भ्रान्तैर्भृशं विफली-क्रियते; रोगान् नवान् उत्पादयत्यपि; (४९०) हिन्दूधर्मः समाजश्च शाशत्येव दिने दिने। सर्वाणि चान्यराष्ट्राणि, सम्प्रदायास्तथाऽखिलाः, सर्वत्र कलहायन्ते विनाशाय परस्परं। ईदृग्विपद्‌वस्थायां, सर्वापद्‌अपहारकः, कर्मवर्णस्य सिद्धान्तः एकः एव उपलक्ष्यते।

---

विश्व धर्म कीदृश ?

(३२) प्र० 'धर्मं' परस्परघ्नुभिर्, अधर्मबहुलैर् अपि, स्वं स्वमेव प्रशंसद्भिर्, निन्दद्भिर् अपरान् तथा, वदद्भिः स्व स्वमेवोच्च धर्मसर्वस्वमेव च, अन्धीकृतस्य सर्वत्र, दृष्ट्वा, लोकस्य, दुर्दशां,'धर्म एव हतो हन्ति, धर्मो रक्षति रक्षित'', एव श्रद्धाय, विश्वस्य, (विश्वास कृत्वा) धर्मप्रभावमविरोधिनं, इदानीं,'विश्व धर्मं' तु प्रचारयितु उत्सुका, 'सद्धर्म' पर्यायपतत्त्व, दृश्यते कतिचिज् जना । तत्र विप्रतिपद्यन्ते विद्वांसोऽपि अपरे जना, 'विश्वधर्मो न कोऽप्यस्ति, नैव सम्भवति', इत्यपि । कीदृशो निर्णयस्तत्र भवेद् सतोषकारक ?

उ० नाम्ना एव 'विश्व धर्मस्य' विपर्ययस्यति ते मृषा, ये तु प्रत्यवतिष्ठन्ते 'विश्व धर्म' प्रबोधने, यद् 'अय सर्वधर्माणा विशेषाणा विनाशक'। (५००)। इय तु महती भ्रान्ति, प्रत्युत, अय पर सुहृत् सर्वेषामपि धर्माणां, विवादपरिहारक, सम्वादकारकश्चापि, देश त्वस्या विवेचनं, शब्दानां भिन्नभाषाणा एकार्थत्वप्रदर्शनं, भेदस्यापि समञ्जस्य स्वभावाना च मननं । विपरीतासया भ्रान्ता अपि स्वीकुर्वते, स्वय, यद् 'वेदान्तस्य सिद्धान्त, परमात्म निबन्धन, सर्वेषामपि धर्माणां सारो, हृदयमेव, वै, "इज्या आचार दम अहिंसा-यज्ञ-स्वाध्याय कर्मणा, अय तु परमो धर्मो यद् योगेनऽऽत्मदर्शनं' (या० स्मृ०), "सर्वेषामपि चैतेषा आत्मज्ञानं पर मत, तद्धि अग्र्य सर्वविद्यानां (धर्माणां), प्राप्यते हि अमृत तत" (म०), धर्मसार स एव च 'विश्व धर्मो' हि, न पर, अस्यैव सम्प्रचारेण कलह शान्ति एष्यति सर्वेषां सम्प्रदायाना, विशेषोऽपि न हास्यते, कश्चित्, कस्य चित्, यो न स्याद् अन्यस्य प्राणघातक, पापाना अपराधानां कलहानां च वर्धक, यथा, कश्चिद् 'विशेष' चेद् 'धर्मो' नृ बलि-कारक कापालिकानां रौद्राणा महामांसाशिना अपि, वामप्रचाररताना वा व्यभिचार प्रचारक, वज्रयाननिपक्तानां वा सर्वऽऽकुलकारिणा,[1] (५१०), स्रीवानां

1—'गाइकवाड़ सस्कृत सीरीज्'-नाम्न्यां ग्रन्थमालाया, १९३१ ई० वत्सरे, 'गुह्य समाज तन्त्र', 'तथागत-गुह्यक' इत्यपराभिध ग्रन्थ प्रकाशित । तस्मिन्, वज्रयानि बौद्धानां अतिबीभत्सा पापिष्ठा घोरा विचारप्रचारा वर्णिता । समाजस्य उपकार कृत तस्य प्रकाशनेन । अन्धकारप्रियाणि आत्मच्छादकानि तामसानि निशा

मद्यपानेन, 'ठगानां', दस्युधर्मिणां, भवानीपूजनान्ते वा, सार्वलुण्ठनकारिणां, घोर विश्वासघातेन यात्रिणां प्राणहारिणां, श्रेष्ठम्मन्योऽपि यो 'धर्मो' ऽपर ऽाक्षरी विनिन्दक अनेनैव त्वन्यधर्माणां विनाशाय समुद्यत, ईदृशा खलु ये 'धर्मा' लोकसंग्रहनाशका, विद्वेष्टारश्च लोकस्य, लोकेन ापि तिरस्कृता, महा

---

चराश्चि पापराशि, यावत् सूर्य प्रकाशे बलाद् आकृष्य न म्रियन्ते, तावन् न अप हन्यते। तस्माद् ग्रन्थात् निषद्वाक्यान्येव निदर्शनार्थं अत्र उद्ध्रियन्ते—

'विण्मूत्रशुक्ररक्तादीन् देवतानां निवेदयेत्, एव तुष्यन्ति सम्बुद्धा बोधिसत्त्वा महाशया" (४ पटले); "अथ अस्मिन् भाषितमात्रे, सर्वकन्या, महर्षिका, शुभ वेषा, विवस्त्रा, वज्रसत्व अनुस्मरन्, चन्द्रसत्वपदान्त सर्वतथागताधिपं, वज्रा शुशपाशेन वज्रक न्याऽऽकर्षण पर" (१४ प०)। (एतत् तु, शङ्कराचार्यस्य 'आनन्द लहर्या' एक श्लोक स्मारयति, यथा, (१०), "नर वर्षीयास, नयनविरस, नर्मसु जड, तव त्वापाङ्गालोके पतित, अनुधावन्ति शतश, गलद्वेणीबन्धा, कुचयुगलविस्रस्त सिचया, हठात् त्रुटयत्काञ्च्यो, विगलितदुकूला युवतय)। "विण्मूत्रार्द्रगत वज्र, पूतिगन्धि, जुगुप्सित, प्रारभ्य मन्त्रमावर्त्तेत, शुध्यते म्रियते ध्रुवाद्, लिंग पादेन आक्रम्य धुन बुद्धोऽपि नश्यति, शताष्टवारानुध्यायी, वज्रसत्त्वोऽपि शीर्यते" (१४ प०)। "ॐ अनलाकारस्य हूँ हूँ मोह मोह सह सह हह मोह मोह सह सह हन हन दह दह तह तह तिष्ठ तिष्ठ आविश आविश महामत्तपालक धुन धुन तिथि तिथि किथि किथि धुव धुव हुव हुव छिन्द छिन्द भिन्द भिन्द फट् फट् फट्" (१४ प०)। (ईदृशा अनेके मन्त्रा तस्मिन् ग्रन्थे लिखिता, सर्वेऽपि उन्मत्तप्रलापा, वानरचीत्कारा एव, यथैव 'हिन्दू'-नुवाम्या वाममार्गि तान्त्रिक मान्त्रिकाणा)। 'शुक्र वा, अथवा विष्ठा, अभिमन्त्र्य विधानत, भक्षयेद् वज्रयोगेन, एव सिद्धिर्न दुर्लभा। हस्तिमांसं, हय-मांस, महामास (नरमांस) च भक्षयेत् दद्याद्धि सर्वमनाथा एवं तुष्यति नायक।

विण्मूत्र च महामांस समभाग तु कारयेत्, शरावसम्पुटे स्थाप्य बुद्धै सह च सवसेत्" (१५ प०)। (२०)।

अहो धार्ष्ट्यं, अहो दम्भ, एषां प्रपञ्च-रचना। ईदृग् नारकिणां पूर्वं आसन, सन्ति अपि साम्प्रत, सम्यक् प्रकाशनं चैषां, ख्यापनं च महाजने, प्रजाहिताय वर्त्तव्य तीक्ष्ण दण्डनमेव च। (२२)।

अनेन ाभिराम्ता, प्रजोद्वेजनकारिण, वञ्चयत भक्ताद्य न्यय वा लोकभीरव, यथा 'ठगा', यथा|वापि 'वाममार्गानुयायिन '—ते सर्वे 'विश्व धर्मेण' विरोध्या स्युर् असंशय ।[१] नैव वदति कश्चिद् वै, 'विश्व धर्म' प्रबोधक —'वस्त्र ईदृशमत्र एव वसान, अन्यज् जहीहि च', 'तप्तमुद्रादि पुण्ड्रादि रुद्राक्षादि एव लक्ष्म वै

---

१ राजस तामस-वासनाभि भृशं ग्रस्त, तासां वासनानां आवरण विक्षेप शक्तिभि आवृतनेत्र विक्षिप्तचित्त, स्वयमेव मोहान्धकारगर्ते निपतित प्राकृतो जन, त जन तासा एव वासनाना अधिकाधिक उत्तेजनै, पापिष्ठीकरणै छलकपटदम्भपूर्ण मायिभि शब्दै, घोरतर प्रतार्य, घोरतमे अधतामिस्रे महानरके निपातयति एते पापिष्ठा मनुष्याकारा सर्वव्याघ्रमर्कटा। पर्यनुयुक्ताश्च, सद्भि ज्ञानिभि तपस्विभि प्रजा हितचिंतकै अभियुक्ते, तान् अपि छलयितु, स्व च रक्षितु महायोगित्वेनापि स्व प्रमापयितु, एते कूटकपटिन वदति (यथा 'गुह्य समाज-तन्त्र'स्य अष्टादश पटले अन्तिमे) 'एतत् सर्वं रहस्यपूर्णं विषय, अश्लील शब्दै, शिष्य चित्तपरीक्षार्थं प्रतिपादयामो वय, (१०), यदि शिष्य, न वञ्च्यते, न प्रतार्यते, एतेषां शब्दाना स्फुटार्थै, अपि तु स्थिर मति सन्मार्गं दक्षिणमार्ग-निष्ठ, दृढहृदय, सत्यकाम, तत्त्वजिज्ञासु सिद्ध्यति परीक्षया, तदाऽस्मै एतेषां शब्दाना रहस्यार्थं शिक्षयाम'।। एव एते क्रूर धूर्ता स्व पापच्छादनाय जल्पति। कि पुनस्तद् रहस्य ? न मनाग् अपि रहस्य, प्रत्युत नितान्त प्रकट, सर्वोपलभ्य-वेदान्तोपनिषत् सांख्य योग शास्त्र पुराण ग्रन्थेषु, विस्तरेण प्रतिपादित, सत् जिज्ञासूना बोधनाय। एवमेव, वैदिकसम्प्रदायेषु, शक्ति-उपासकेषु वाम मार्गिणां, वाम तन्त्र प्रणेतार, पञ्च-मकार पूजका, घोर दुराचारिण, पापिष्ठा, द्विज ब्रुवा, विमूढान् जनान् अधिक विमोहयति, स्वेषां विविध-दुर्वासना पूरणाय (२०), पर्यनुयुक्ताश्च, पञ्च म-काराणां 'रहस्य' अर्थं आडम्बरेण व्याख्याति धृष्टा। अन्य धर्मानुयायिष्वपि, मुसलम किश्चन यहूदी आदिष्वपि ईदृशा सन्त्येव। एतत्सर्वं, पञ्च म कार-वर्णन सम्बन्धे, अत्र मानव धर्म-सार ग्रन्थे, पूर्वं विस्तरश प्रतिपादित। यावद् उच्चैर् उपआरोह, पातस्तावद् अधो भवेत्। अभूतां पार्षदौ विष्णो दैत्यौ चैवापि राक्षसौ। महाविरक्त अपि प्राप्य, शमेन च, दमेन च, प्रत्याहृतो, मृगाक्रान्तस् तृष्णया, भोगलिप्सया, न शक्नुयाच्चेन्द्रियाणां हि वेगं धारयितु बलाद्, भ्रश्येद् दक्षिण मार्गात्तु, पतेद् वामे च दारुणे, "मात्रा, स्वस्रा, दुहित्रा वा", प्रयत्न् मिथुनीभवेद्

अस्यैव सम्प्रदायस्य धारयस्व सदैव हि', 'उपास्व सन्ध्या एव त्व', 'नमाज जप केवल', 'गायत्र्यास्तु प्रकारेषु विशतिषु एत एव हि, सूर्ये विष्णु राम-कृष्ण दुर्गा काली नृकेसरी गणेश रुद्र घोरादि देवतेषु एत एव हि, सर्वात्मना जप त्व वै, सर्वान् अन्यान् विसर्जय', (५२०), (गायत्रीं त्रिपदा आहु, केचिद् आहु चतुष्पदा, केचित् पंचमुखीं आहु, गोरूपामेव चापरे, पादांश्च विविधान् आहु, रूपाण्यपि विविधं तथा)', 'अर्चेय एका राममूर्त्ति', 'मूर्त्ति कृष्णस्य केवला',

---

विष्ठां च भक्षयेद्, ब्रह्मपानी, कापालिको, यथा। उक्त पुराणे, 'काश्या तु मरणान् मुक्तिरिष्यते', तथैव 'काश्या पापात् च भवति ब्रह्म राक्षस', (२०), अस्याप्यर्थ स एवास्ति—'काशी' तु आत्म प्र 'काशि'नी बुद्धिरेव, अथ ता प्राप्य, त्यजन् देह तु, मुच्यते, ता लब्ध्वाऽपि चरन् पाप, पापयोनिषु बध्यते। पुन पुनश्चादिशति तस्माद्धि भगवान् मनु, "आश्रमाद् आश्रम गच्छेत्", सप्तमावृत्ति आश्रित श्रान्तेन्द्रिय, शान्तचित्त, गार्हस्थ्ये च, वने तथा, नैव अपक्वकषायस्तु, सन्यास कुर्वीत भवेत्।

यथैव, सर्व देश काल जातिषु पुण्याना पुण्यकारिणा च सादृश्य, तथैव पापाना पापकारिणामपि। एकत्र बालमुनि परमकारुणिक शुक, ससारे भ्रमता, अथ सम प्रतितितीर्षता, मनुष्याणा तारणाय, भगवन् बहु-सज्ज्ञानपूर्ण पुराण तारक वक्ति, अपरत्र शुक हृदय वाममार्गी, प्रमा मारक नारक, पच-म कार-तन्त्र व्यनक्ति। किंतु, 'यत्र धर्म, परात्माऽत्र, यत्रात्मा,ऽत्र ध्रुवो जय', "अत्युग्रपुण्यपापाना इहैव फलमश्नुते। न अधर्म चरितो यत्र सद्य फलति, तत्र वै, शनैरावर्त्तमानस्तु कर्त्तु र्मूलानि कृन्तति" (म०), (४०), "नेहाभिक्रमनाशोऽस्ति" धर्मस्य च कदाचन (गी०), "धर्माद् अर्थश्च कामश्च, मोक्षश्चापि भवेद्, ध्रुव", तस्मात् मनुष्ये सर्वेस्तु नि य सेव्य स एव वै। "सत्यमेव जयते, न अनृत"। (४५)।

२—"एकाक्षर पर ब्रह्म, प्राणायाम पर तप, सावित्र्यास्तु पर नास्ति, मौनात् सत्य विशिष्यते" (म०), ॐ इत्येकाक्षर ब्रह्म, सावित्री अस्मात् प्रसूयते, त्रयो ऽस्या श्रयिता पादा, सुखऽभ्युदयिका हि ते—"ॐ भूर् भुव स्वस् तत् सवितुर् वरेण्य भर्गो देवस्य धीमहि, धियो यो न प्रचोदयात् ॐ", भूर्लोके, च भुवर्लोके, स्वर्लोकेऽपि तथैव च, तिसृष्वपि हि अवस्थासु, जाग्रत्-स्वप्न सुषुप्तिषु, ।अव्यक्तानि, व्यक्त व्यक्तानि, तथाऽव्यक्त हि यत् स्मृत, स्थूलानि, चापि सूक्ष्माणि, बीज कारणमेव च,

'सीतारामौ जप नित्यं, न तौ यो भजते तु, तं, अपि प्रेमार्हं आत्मीयं जानीया घोरवैरिणं', 'राधाकृष्णौ एव जप, सीतारामौ कदापि नो', 'शिवो महत्तरो विष्णोः', 'विष्णुः श्रेयान् शिवाद् अति', 'अहमेव गुरुर्मान्य त्वया, न त्वन्यस्तु कश्चन', 'एतद् पुस्तकमेवास्ति शास्त्रं, नान्यत्तु किंचन'—दुराग्रहान्ति न ह्येव, केचिद् वै 'विश्व धर्मिणः'। सर्वोपास्येषु भाति एका ज्योतिः सा परमात्मनः, "तमेव भान्तं अनुभाति सर्वं, तस्यैव भासा सर्वमिदं विभाति" (उ०), व्याप्तः सर्वेषु चैतन्यः दृश्यते सर्वनामभिः, रूपाणि अस्यैव सर्वाणि, सर्वा अस्यैव च क्रिया, यत्र किंचिद् अपि उपास्यत्व, यस्मिन् कस्मिश्च वस्तुनि, तत्सर्वं परमस्य तस्य उपास्यस्यैव विभा शुभा। 'आत्मनस्तु एव कामाय सर्वं अन्यत् प्रियं भवेत्' (उ०)। करोति एव 'विश्व धर्मः' सद्वाद तु समन्ततः। (५२०)। सारे हि अभीष्ट एकत्व, गौणेषु अस्तु यथेष्टता, स्वस्य स्वस्य मतस्यापि दर्शयन्तु सत् ईहिनः, भूरि लोकोपकारित्व, अन्येषां च उपकारिता, सत् तर्कैः, 'वाद' मार्गिभिश्च, सदा तत्त्वबुभुत्सया, कोमलैः मधुरैः शब्दैः विनीतैः सात्त्विकैरपि, विचारोद्बोधकैरेव, न विरुद्धैः कर्कशैः, न कोपनैः रोषपूर्णैः, न जल्पैः, न वितण्डया, न राजसैस्तामसैर्वा शब्दैः बुद्धिविघातकैः, मतानि, तर्कांश्च अन्येषां, शृण्वन्तु श्रद्धयेन च, परीक्षन्तां चापि सर्वे शान्तशीतलया धिया।

---

ये मानवानांभावास्तु, तेषां वै हितकारको हि, अर्थभावनपूर्वं तु, मौनश्च त्रिपदाजप प्रवृत्तिमार्गे चलता गृहिणां आर्यशीलिना। चतुर्थोऽस्यास्तु यः पाद—"योऽसौ (अय) असौ (प्राणे) पुरुषः सोऽहमस्मि"—निवृत्तिमार्गिणां एव "स्वे महिम्नि" निधायकः, 'सोऽहं' इति 'अजपा' जापः, श्वास प्रश्वासः सततं, सन्यासिनां [illegible] गायत्री सा'ऽजपा' इत्यभिधीयते। (१०)।

१ द्वादश्या च त्रयोदश्या शत्या अर्वाक तु विक्रमात्, दक्षिणेऽभवन् भूपा, (१) काकतीयाश्च, (२) यादवा, (३) होयसालाश्चापि, (४) पाड्याश्च, महाकोषा, विलासिन, (१) वारंगले, (२) देवगिरौ, (३) आंध्र, (४) तामिले एव च, चतुर्षु एतेषु देशेषु राज्य चक्रुर् अनुक्रमात्। योधाश्चालस्विनस्तेषां, न रणे कुशला पुनः, स्वाभाविकेन न्यायेन, "यथा राजा तथा प्रजा"। राजानस्ते नु अयुध्यन्त, स्पर्धमाना परस्परं, शिथिला किंतु, अकुशला विभान्ते रणकर्मणि। तेषां प्रजाश्च काश्चित् तु जैना,

पापानि अवश्य निन्दन्तु ( नामग्राह विना पुन पापिनां तु मनुष्याणां, अन्यत्र ऐतिह्य-शास्त्रवात् ), प्रदर्शयन्तु दोषांश्च ये जायन्तेऽन्यधर्मत , तथैव सयत्ते शब्दे , "कथ वा मन्यते भवान्", शिष्टा एव प्रभाषन्ते, स्वमतोऽफेर् अनन्तर, यथा निदर्शित भूयो वेदव्यासेन भारते । आचारस्य प्रवृत्तस्य विना दोषानु दर्शनात्, न निवृत्तिर्भवेत्तस्मात्, प्रवृत्तिर् अपरस्य च , अतोऽस्मैव कृत ग्रन्थे, तेषा तु परिदर्शन, ये दोषा बहवो जाता, 'जन्मवर्ण'आग्रहात् ननु, 'जन्मवर्ण' मतस्यापि धर्ममर्मत्यधारणात्, 'हिन्दू'-नाम समाजस्य सयातस्य विघातका । (५४०)। 'कर्मणा वर्ण ' इत्यस्य सिद्धान्तस्य तु ये जना , गुणान्, समाज-सद्भाव व्यवस्था-कारिणो, बहून् , नैव तुनन्वते, तस्मिन् दोषान् पश्यति च तभित , अवश्य तान् धर्णयन्तु, विचाराय हि सर्वार्थं । 'महा जनो', विमर्शान्ते, य पक्ष स्वीकरिष्यति, अधिकेन शुचिर्वेन, देश काल निमित्त त , दोषिदेव त्यक्तेनापि, स लोके प्रचरिष्यति । एवमेवाभवल्लोके, आचारपरिवर्त्तन, काले काले, भवत्येव च, भविता च, पुन पुन ।

---

काश्चिद वैदिका , अन्योऽन्य वैरभावेन ततस्तु विविध तदा , राजानश्च एकदा एक तु पच अन्य तथाऽन्यदा, सह आयन् । युद्धे चैव चतुर्दिक्कलहस्तत । गुल्तान् अलाउद्दीन्, अस्मिन् काले दिल्ल्या अधिष्ठित , शुश्राव दाक्षिणात्याना कृत्य क्षुप्यातिरीचय परस्पर तथा वैर सर्वथा बल हापकं । मलिक् काफूर् नामान सेनान्यं प्रैषयत् तत । दुर्बलानि आर्तरभविष्यतानि अपि जित्वा त , राज्यानि , लुंठयित्वा च महती रत्नसञ्चयान् मुस्लिमोऽहन्य हिंदूश्च, भग्ना देवालयान् बहून्, (१०) दिल्ली निववृते । पश्चाद् , हिन्दूना पुनश्चोपत , संगमस्य सुतौ वीरौ, आन्ध्रदेशे सुदीपतु , नाम्ना हरिहरस्त्वेको,ऽपरो बुक्क इति स्मृत , सायणो माधवश्चापि प्रसिद्धो मन्त्रिणौ ययो , शस्त्रास्त्रकुशलो चापि, शास्त्रषु निपुणौ तथा, प्रवीणौ व्यवहारस्य, राजनीतेश्च, रीतिषु प्रभाव उपद्दमनेभ्य एतेषा तु, पुनस्तदा साम्राज्य उदभूद्, यत्तु विजयनगर अभिध, सार्ध द्विशतवर्ष तद् दिदीपे बहु विश्रुत, यूरुपस्य इटली देशात्, पोर्तुगल् देशतस्तथा, हिमालयस्य उत्तरत बल्ख (वाह्लीक) देशात्तथैव च, यात्रिणो विजयाद्धं तु समाजग्मुर् दिदृक्षन समृद्धि अस्य अनुपमा ; दृष्ट्वा चापि विसिस्मियु , तथाऽऽश्चर्यभरे शब्दे वर्णयामासुर् अद्भुता । लभ्यतेऽद्यापि सौभाग्यान् लेखास्ते

संक्षेपेणैव भूयोऽपि 'विश्व-धर्मो'ऽत्र वर्ण्यते—अमूर्तं चापि मूर्तं च, द्वे रूपे ब्रह्मणो यतः, (उ०) तद्रूप-'विश्वधर्मस्य' रूपे द्वे भवतो,ऽपि, अतः । (१) "सर्वभूतेषु येन एकं भावं अव्ययं ईक्षते, अविभक्तं विभक्तेषु"; नानासु,एकं सनातनं; केवलं परमात्मानं, जीवात्मसु अखिलेषु अपि; विशेषेषु च सामान्यं असंख्येषु, एकमेव हि; स भावो 'विश्व-धर्मस्य' अमूर्तः, आभ्यन्तरो,ऽव्ययः। "सर्वभूतस्थं आत्मानं, सर्वभूतानि चात्मनि"; "मां च पश्यति सर्वत्र, सर्वं च मयि पश्यति"; "सर्वभूतस्थितं मां हि, भजति एकत्वं आस्थितः"; (५५०); "आत्मौपम्येन सर्वत्र समं पश्यति सर्वदा" (उप०, गी०); "आत्मवत् सर्व-भूतेषु" पश्यन् आचरति प्रियं रिपुषु अपि, यथाशक्ति, मैत्रीं कर्तुं सदा उद्यतः; येन भावेन, सोऽमूर्तं 'विश्व-धर्मस्य' हृद् ध्रुवं । "सर्वाणि अपि च भूतानि आत्मनि एवानुपश्यति,सर्वभूतेषु चात्मानं, ततो न विजुगुप्सते";"सर्वभूतात्मभूतात्मा,सर्व-भूताशयस्थित.",आत्मनो-ऽन्यन् न"किंचिच्च जानन् ,"न विचिकित्सते";"सर्वं आत्मनि संपश्यन् , सच्चासच्च, समाहितः, नाधर्मे न कुरुते", जगत्कल्याणं ईहते, स्वस्मिन् परकृतान् दोषान् सहते च प्रशांतधी., (यावच्छक्यं, गृहस्थस्तु न सहेत-ऽततायिनो), 'स्वान्' एव हि 'परान्' जानन् , न वैरं कुरुते क्वचित्; भावितो येन भावेन, सर्वभूतहिते रतः—अमूर्तो 'विश्व-धर्मस्य' सारो, हृदयमेव सः।

---

ऽखंडिता. अपि। इतिहासेषु संनुद्धैर् भारतीयैस्तु सर्वथा विस्मृतं यद्, विदेशीयैस् स्मृतिस् तस्यास्ति रक्षिता । सार्धद्विशतवर्षान्ते, षोडशस्य शतस्य च वैक्रमस्य द्वितीयार्धे, राष्ट्रं तत्तु व्यपद्यत, पुनश्चाप्यान्तरैर् वैरैर् ,अतिभोगविलासनैः,(२०), प्रजानां चूषणै-श्चापि, क्षीणा चाप्यदैन्यैर्भृशं, जर्जरी, मुस्लिमैर्भूयः आमूलं तद्धनाश्यत । ध्रुवके सिंहासनासीने, माधवे चापि मंत्रिणि, जैनानां वैदिकानां च निषेद्धुं कलहान् मिथः, राष्ट्रस्य सर्वप्रान्तेषु राजप्रदेशो हि घोषितः, 'हे वैदिकाश्च !, जैनाश्च !, वैराद् विरमत, अधुना; परस्परं मा छिन्तुत, रक्षत एव परस्परं; त्यजत अन्योऽन्यविद्वेषं राष्ट्रस्य आपत्ति-कारणं; नहि दर्शनयोर् भेद. कश्चन अस्ति उभयोर् अपि; एकं एव तयोस् तत्त्वं; कलही दंडं आप्स्यति; स्वान् स्वान् विशेषान् आचारान् निर्विघ्नं चरथ अपि च !"। आंतरेषु तु वैरेषु, सम्राजा दूरदर्शिना प्रजाहितैषिणा चापि, वारितेषु एवं, आगतं समृद्धिं परमां, राष्ट्रं, कंचित् कालं, महोदयं। (२७)।

(२) 'विश्व धर्मस्य' मूर्तं तु रूपं वर्णाश्रमात्मक—'कर्मणा एव चतुर्वर्णा , वयसा चतुराश्रमा ', इत्येव अध्यात्मशास्त्रस्य सिद्धान्ते दृढ आश्रित , वर्णाश्रमात्मको धर्मं सर्वकल्याणकारक , 'विशपाणां' समप्राणा युक्तया समाहकश्च स , (५६०), भिन्नप्रकृतिकाना च मनुष्याणा प्रपोषक सर्वेषा, आनुगुण्येन जीविकायास्तु साधनाम् , अनर्गल च उपास्तीनां अनुमत्या, यथारुचि, ( न पुनस्तु नरबलि महामांसशादि तर्पणे ) । अमूर्तो मूर्त्त रूपाभ्या उभाभ्यां च समृद्धिमान् , निष्कल सकलश्चैव 'विश्व धर्मो' विराजते । चारो मूर्त , नयोऽमूर्तो, हि अमूर्त्तं शास्त्र इष्यते, व्यवहारस्तस्य मूर्ति , मूर्त्तिर् अभ्युदयस्तथा, नि श्रेयस अमूर्तं स्यात् , सिद्धान्तो ऽमूर्त एव हि, प्रयोगस्तस्य मूर्त्तोऽस्ति, जीवने, सर्वकर्मसु , अमूर्ता तु भवेन् नीतिर् , मूर्ता रीतिर्भवेत्तथा , अमूर्त परम 'सत्य',ज्ञानं मूर्त 'ऋत' सत , प्रत्यक्ष कर्म मूर्तं स्याद्, अमूर्तं ज्ञानं आन्तर , अमूर्तं अन्त करण, मूर्तं तु करण बहि , अमूर्तमेव जीवात्मा, शरीर मूर्त्तिरस्य तु , अमूर्तं 'निष्-कल' ब्रह्म, मूर्तं तु 'स कल' जगत्,असत्यानि शरीराणि विधानि अस्यैव मूर्तय । अमूर्तो 'विश्व धर्मो'-ऽस्ति, सत् सिद्धान्त स्वरूपवान् , मूर्त्तिर् 'विश्व व्यवस्था'ऽस्य कल्पयेत्स् तथा ऽधर्मे , सु-व्यवस्था समाचार मूला, सर्वत्र भूतले । ( ५७० , आदित ५१२० श्लो० ) ।[1]

---

१ ।पतरी बुद्धिमतो हि स्वमुत दिशत तथा यथा शक्तो भवन् शीघ्र कार्यं कर्तुं स्वय ननु ; यो तु मूढो अतिस्नेहात् तं स्वाङ्के धरत सदा न [illegible] स्वपदभ्या चनितु ददातेऽवसरं खलु, रात पशुं तं यानीव कुर्वते ता तु निश्चित , एव समिति भिन्नापि, सभाश्च च, शासके , आवश्यकी एव देया वै, व्यक्तिभ्यस्तु सहायता , न ततोऽधिक, यत स्वकार्यं कर्तुं अक्षमा , परावलम्बिना नित्य, भयप्रस्त, च दुर्बला ; शनकै स्वर्गेरेव नभे , सर्व ऽवशान् पर, जीवामान परामान, नेया मन्दर्मं बद्धिमि । प्रमाद् अतीम व्यक्तिच, कुलीयत्व तन पर, जातीयत्व, राष्ट्रियत्व, मनन्न दायि यमेव च, मनुष्यो हि 'मनुष्यत्व-सामान्य' सधिरोहति, भावयत्यपि निमन, 'वसुधैव कुटुम्बक', 'अपरासा' विशेषाणां जातीनां भेद बुद्धिता स्वराज तु, 'पर'- सामान्यस्य अभेद लभते क्रमात्—"अहम [illegible] हि सर्वत्र , सोऽह , इत् त्वमसि" इत्यपि "भ्रातरा मनुजा सर्वे, स्वदेशा भुवनत्रय" । ( १० ) ।

श्लोको हि सुप्रसिद्धोऽयं वेदव्यासेन घोषित —
"न विशेषोऽस्ति वर्णानां, सर्वं ब्राह्म इदं जगत्,
ब्रह्मणा पूर्वसृष्ट हि, कर्मभिवर्णतां गत" (म० भा०)।
आदौ उत्पत्तिहेतुस्तु वर्णाना कर्म एव हि,
यतस्, तस्मात् तद् एव ह्य वर्णताया नियामक।

ॐ जाग्रताद् विश्वधर्मोऽयं समस्ते क्षितिमण्डले, विश्वव्यवस्था चाप्येन सर्वैवानुवर्त्ततान्, ॐ। ॐ, येन, सूर्य !, ज्योतिषा बाधसे तमो, जगत् च विश्व उदियर्षि भानुना, तेनास्मद् विश्वां अनिरा अनाहुतिं, अप, अमीवा दुष्वम, सुव ! ॐ। ॐ विश्वाहा त्वा, सुमनस सुचक्षस प्रजावन्तो अनमीवा अनागस उद्यन्त त्वा मित्रमहो दिवे दिवे, ज्योग्जीवा प्रतिपश्येम, सूर्य !, महि ज्योतिर्बिभ्रत त्वा, विचक्षण !, भास्वन्त चक्षुषे चक्षुषे मय, आरोहन्त बृहत पाजसस्परि, वय जीवा प्रतिपश्येम, सूर्य !, यस्य ते विश्वासु भुवनानि केतुना प्रचेरते नि च विशते अक्तुभि, अनागास्त्वेन, हरिकेश ! सूर्य !, अह्नाऽह्नानो वयस्या वयस्या उदिहि !, श नो भव चक्षसा, श नो अह्ना, श भानुना, श हिमा, शं घृणेन, यथा श अध्वन् शमसद् दुरोणे, तद्, सूर्य, द्रविण धेहि चित्र ! ॐ

---

## प्रार्थना

ॐ

ॐ महाविद्ये, महामाये, नमस्ते, संविदे, चिते !, शक्तिं देहि, शिव देहि, भोगं, मोक्ष च, देहि म, यशो 'धर्मा'र्जित देहि, बल देहि 'अर्थ साधनं, रूप 'काम्य' तथा देहि, द्विषो 'ऽज्ञानानि'नो जहि ॐ। 'रूप' 'काम' फल देहि, 'बल' देहि 'अर्थ' समघ, 'यश'श्च 'धर्म'ज देहि, सौहार्दं धेहि शत्रुषु। गौरी त्व, इन्दिरा च त्व, त्व च शुभ्रा सरस्वती। ॐ सश्रुतेन गमेमहि, मा श्रुतेन विराधिषि ॐ। ॐ गणाना त्वा गणपतिं हवामहे, {कविं कवीनां उपमश्रवस्तम, ज्येष्ठराज ब्रह्मणा, ब्रह्मणस्पते !, आ न शृण्वन् ऊतिभि सीद सादन ॐ। ॐ यो न पिता, जनिता, यो विधाता, धामानि वेद भुवनानि विश्वा, यो देवाना नामधा एक एव", ( तस्मै यवो विनतोऽय समर्प्यते ) ॐ।

मा भ्राता भ्रातरं द्विक्षत् , मा स्वसारं उत स्वसा, सम्यञ्चः सव्रताः भूत्वा, वाचं वदत भद्रया ; देवा इवामृतं रक्षमाणाः, सायंप्रातः सौमनसो वोऽस्तु" (वे०) । "एतमेके वदन्त्यग्निं, मनुमन्ये प्रजापतिं, इन्द्रमेके, परे प्राणं, अपरे ब्रह्म शाश्वतं, प्रशासितारं सर्वेषां, अणीयांसमणोरपि, रुक्माभं, स्वप्नधीगम्यं, तं विद्यात् पुरुषं परं (म०) । यो वै न देवासुरमर्त्यतिर्यङ् , न स्त्री न षण्ढो न पुमान् न जन्तुः, नायं गुणः, कर्म, न सन्न चासन् , निषेधशेषो जयताद् अशेषः । मादृक्प्रपन्नपशुपाश-विमोक्षणाय, मुक्ताय, भूरिकरुणाय, नमोऽलयाय, स्वांशेन सर्वतनुभृन्मनसि प्रतीत-प्रत्यग्दृशे भगवते बृहते नमस्ते (भा०) । यज्जाग्रतो दूरमुदैति दैवं, तदु सुप्तस्य तथैवैति, दूरंगमं ज्योतिषां ज्योतिरेकं, तन्मे मनः शिवसंकल्पमस्तु ; यत्प्रज्ञानमुत चेतो धृतिश्च, यज्ज्योतिरन्तरमृतं प्रजासु, यस्मान्न ऋते किंचन कर्म क्रियते, तन्मे मनः शिवसंकल्पमस्तु ॐ । तद् एजति, तन् न एजति, तद्दूरे, तद्, अन्तिके, तदन्तर् अस्य सर्वस्य, तदु सर्वस्यास्य बाह्यतः ;······अणोरणीयान् , महतो महीयान् , दूरात् सुदूरे, तदिहान्तिके च;" तत् त्वम् असि ;···त्वं स्त्री, त्वं पुमान् असि, त्वं कुमारः उत वा कुमारी, त्वं जीर्णो दण्डेन वञ्चसि ; जातो भवसि विश्वतोमुखः ( उ० ) । नमो नेदिष्ठाय, प्रियदव !, दविष्ठाय च नमः, नमः क्षोदिष्ठाय, स्मरहर !, महिष्ठाय च नमः, नमो वर्षिष्ठाय, त्रिनयन !, यविष्ठाय च नमः, नमः सर्वस्मै ते, तद्-इदं-इति, शर्वाय च नमः । बहलरजसे विश्वोत्पत्तौ नमो विधये नमः, प्रबलतमसे तत्संहारे हराय नमो नमः, जनसुख-कृते सत्त्वोद्रिक्तौ मृडाय नमो नमः, प्रमहसि पदे निस्त्रैगुण्ये नमः परमात्मने । (शि.म. स्तु.) आपश्यामीयचक्षसा मित्रा वयं च सूरयः व्यचिष्ठ बहुपाय्ये यतेमहि स्वराज्ये ( ऋग्वेद ५-६६-६ ) ॐ, अग्ने ! नय सुपथा राये अस्मान्, विश्वानि, देव ! वयुनानि विद्वान् ; युयोधि अस्मज्जुहुराणं एनः ; भूयिष्ठां ते नम-उक्तिं विधेम, ॐ (ई०उ०) । म्लानं मुखं भरतदेशवासिनां भूयो भवेत् सुरभि सुप्रभा-युतं, भर्गो वरेण्यं उत्तेजयेत् तथा सवितुः सदाऽखिलजनस्य धीमुपां । ॐ ।

सर्वस्तरतु दुर्गाणि, सर्वो भद्राणि पश्यतु,
सर्वः सद्बुद्धिमाप्नोतु, सर्वः सर्वत्र नन्दतु ।

ॐ

## पाठकेभ्यो निवेदन

अत्रोक्तान् विषयान् मुख्यान् वर्णाश्रमनिबन्धनान्, रचनान् सर्वशङ्कानां, समाजोद्धारकारकान्,बहुश्रमी च शास्त्रेषु,बहुदर्शी, बहुश्रुत , देशस्वाधीनतार्थं च कारावासेऽपि कष्टभाक्, विद्याविनयसम्पन्न , मानवानां सिषेविषु , श्रद्धालुरार्ष शास्त्रेषु, ज्ञानश्च समय नव, अवस्थापरिवर्तज्ञ , कर्मणा ब्राह्मणश्च सन्, आर्षैर् वाक्यैर्मनोर्वाक्यो भाष्यमाण , उदारधी , शब्दनिर्बन्धनैश्चापि सत्तर्कैरपवृंहितै, ग्रन्थे 'मानवार्षभाष्ये', प्रथ्यमाने तु साम्प्रत, इन्दिरारमणो विद्वान्, विस्तरान् कथयिष्यति। ( अस्य तु प्रथम खण्ड मुद्रितश्च प्रकाशित , शेषांशो लिख्यते , तस्य प्रकाशन अपेक्ष्यते )।



कस्यचित् पठितु चित्त, शब्दै र्वैरपि कर्कशै यदि भवेद्य, आवेशात्, क्षमा तस्यार्थं अर्थये , 'मनो ' आभ्यन्तराऽऽज्ञा एव, तस्य चापि सिषेविषा, हीना दीना भृशं क्षीणा भारतस्य च या दशा तस्या निवर्तनेच्छा च तीव्रा, ऽयेषो तु कारण, इति ज्ञात्वा बुधा सर्वे, सहृद , सुहृदस्तथा, वाक्कृतान् अपराधाँस्तु क्षमिष्यन्ति, इति याचना, शब्दार्थाना अशुद्धीश्च शोधयिष्यन्ति अनुग्रहाद् , करिष्यन्ति च साहाय्य मनुधर्मप्रचारणे ।





( प्रार्थना निवेदन-टिप्पणी वर्धनीय अष्टौमा श्लोकै सहिता , अस्मिन् ग्रन्थे समग्रा श्लोका प्राय ६००० )



## उद्धृत-ग्रन्थ-नाम-अनुक्रमणी, संक्षेप-विवरण-सहिता, सपृष्ठाङ्का

( एतत्पूर्वं १-४पृष्ठानि, २६९-२७२ इति ज्ञेयानि )

# विषय-सूचक-शब्द-अनुक्रमणी

( ज्योतिषाचार्य श्री निशाकान्तेन संकलिता )

॥ इति ॥

ॐ

## श्री भगवद्दास (-डाक्टर भगवान् दास-) लिखिताः ग्रन्थाः

## Works by Dr. Bhagavan Das.

| | | | |
|---|---|---|---|
| 1 | The Science of the Self .. | .. Rs | 1 8 0 |
| 2 | The Science of Peace 2nd edn, cloth, | .. " | 3 0 0 |
| | boards, | . | 2 8 0 |
| 3 | The Science of the Emotions, (4th edition , in preparation) | | |
| 4 | The Science of Social Organisation, or The Laws of Manu, 2nd edn , Vols, I & II,(Vol III in preparation) | | |
| | Vol. I, cloth, 2 8-0 , boards | .. " | 2 4 0 |
| | Vol II, cloth, 2-0 0 , boards, | .. " | 1 12 0 |
| 5 | The Science of The Sacred Word or The Pranava Vada of Gargyayana, 3 Vols ( Out of Print ) .. | .. | |
| 6 | The Science of Religion, or The Principles of Sanatana Vaidika Dharma (Out of print , new edition projected) .. | .. | |
| 7 | Krishna, A Study in The Theory of Avataras cloth, 2-0-0 , boards, | .. " | 1 12 0 |
| 8. | Mystic Experiences, or Tales from the Yoga-Vasishtha (new edn projected) | | |
| 9. | Ancient versus Modern Scientific Socialism. Rs 1-8-0 & | .. " | 1 0 0 |
| 10, | *The Essential Unity of All Religions. ( cloth bound, 7_0 pp , cr 8vo ) | .. " | 2 8 0 |
| 11, | *World War and Its Only Cure-World Order and World Religion. (cr 8vo, 650 pp) | .. " | 2 8 0 |

| | | | | | |
|---|---|---|---|---|---|
| 12 | *Concordance and Dictionary to the Yoga Sutra & Bhashya, ( words in Skt , explns in English) , | .. , | 3 | 0 | 0 |
| 13 | *Fundamental Psychological Principles of world wide Social Reconstruction ( Pamphlet, 32pp , cr 8vo) | .. ,, | 0 | 4 | 0 |
| 14 | Communalism, Its Cause and Cure | ,, | 0 | 4 | 0 |
| 15, | Ancient Solutions of Modern Problems | . , | 0 | 8 | 0 |
| 16 | *Manava Dharma-Sarah, (Laghu, in Samskrt abridged) | .. ,, | 0 | 8 | 0 |
| 17 | *Manava-Dharma Sarah ( Brihat, in Skt., unabridged) Cloth 2 4-0 boards | .. ,, | 1 | 8 | 0 |
| 18 | †Samanvaya, (in Hindi) (2nd edition in the press) समन्वय | .. ,, | | | |
| 19 | Purushartha (in Hindi, 2nd end in the putt ) पुरुषार्थ | .. ,, | 3 | 0 | 0 |
| 20 | Prayojana (in Hindi) प्रयोजन | .. ,, | 2 | 0 | 0 |
| 21 | †साम्यवाद बनाम बुद्धिवाद | .. ,, | 0 | 4 | 0 |
| 22 | Annie Besant and the Changing World | .. ,, | 0 | 4 | 0 |

23 Many pamphlets in English in the Adyar Pamphlets Series, and others in English and Hindi

*To be had from the* Manager, *The* Indian Book Shop, Benares City , also, The Theosophical Publishing House Adyar, Madras Books marked † can be had from the Sasta-Sahitya Mandal, *Connaught Circus, New Delhi* Those marked * may be had direct from the author also , address—Dr Bhagavan Das, Benares (Cantt). Full pamphlet of Opinions on the above works, *may* be had on requisition Prices are liable to change without notice